* ओ३म् *

# मध्यसिद्धान्तकौमुदी

## * प्राज्ञचित्तप्रसादिनी *

( दर्शनाचार्य-नृसिंहदेवशास्त्रि-रचिता )

## प्रथमो भागः

पुस्तक प्राप्तिस्थान—

मेहरचन्द लक्ष्मणदास

अध्यक्ष—संस्कृत पुस्तकालय,

सैदमिट्ठा बाज़ार, लाहौर ।

टाईटल तथा पृष्ठ १२९ से १६७ तक

भारद्वाज प्रिंटिङ्ग प्रेस, सैदमिट्ठा बाज़ार, लाहौर में छपा

(२८२)

*ॐ*

# साञ्जलिबन्धमभ्यर्थना ।

अयि ! महाभागा ! एषा "प्राज्ञचित्तप्रसादिनी"-नाम मध्यसिद्धान्तकौमुद्याः टीका अत्यन्तं सरला प्रयोगसाधनपरिपाटीबोधनक्षमा केवलं छात्राणां हितायैव मया रचिता, एतस्या एतादृशी सरलतरा छात्रोपकारिणी टीका न काऽपि वर्त्तते । एतस्याः टीकाया आश्रयेण अधीतेयं मध्यसिद्धान्तकौमुदी पूर्णपाण्डित्यप्रदा भविष्यतीति भवन्तः स्वयमेवैतत्पठनपाठनप्रयासेन ज्ञातार्था भविष्यन्ति । न केवलमियं प्राज्ञपरीक्षादित्सूनां कृते हिताय, अपि तु स्वतन्त्रं पठतामपि परोपकारिणी । किन्तु-एतस्याः मुद्रणप्रारम्भे जाते एव केनचित्सपादवर्षमेकं यावदहं न्यायालये मिथ्याऽभियुक्तः, तच्चिन्तामग्नतया भोजनादिव्यवहारेऽपि कार्श्यं गतो मुधा धनव्ययङ्कुर्वन् प्रूफसंशोधनादि कार्यं सम्यङ् न पारितवान्, येनानेकेषु स्थलेषु पीडाजनिका अशुद्धयः सञ्जाता इत्येदतिमात्रं मे मनो दुनोति । किन्तु टीकान्तररचनाकर्मणि नितान्तं व्यग्रे मयि सहजकरुणावरुणालया मधुरवदनाः शास्त्रकुशलाः कुशलापरनामानः श्रीरामचन्द्रशास्त्रिणो ममाभ्यर्थनां स्वीकृत्य शुद्धाशुद्धपत्रं रचितवन्तः तच्चैतत्पुस्तके योजितमेव । परन्तु तत्र स्थूलाः स्थूलाः अशुद्धयः सन्निवेशिताः, शिष्टाश्च बुद्धिमद्भिः स्वयं संशोध्य ममोपरि महती कृपा कर्त्तव्या । डङबवादीनां विवेकोऽपि स्वयं करणीयः । अहञ्च तेषां कृतज्ञो भविष्यामि । द्वितीयभागश्च महता यत्नेन संशोधितुं प्रारब्धः, भूमिकादिविस्तरोऽपि तेनैव प्रकाशयिष्यते इति सानुनयं साञ्जलिबन्धं प्राार्थयते— विदुषामनुचरः—

नृसिंहदेवः

* ॐ *

# शुद्धाशुद्धपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| यदेतस्याः | य एतस्याः | १ | २६ |
| कुरुते | करोति | ३ | ४ |
| शिवा | शिव | ,, | २३ |
| देशाल्ल | देशवल्ल | ,, | २८ |
| ॠतेषु | ॠतेषु | ४ | ४ |
| काला | कालो | ६ | २ |
| इतीत | इतीत् | ,, | २९ |
| दात्तल्ल | दात्तल | ७ | १२ |
| भ्यांउ | भ्यामु | ,, | १६ |
| इति | • | ,, | ,, |
| होत्तृ | होतृ | ,, | ,, |
| ह्रस्वा स्युस्तर्हि | ह्रस्वाः स्युस्तर्हि | ,, | ३ |
| मव | भव | ,, | ५ |
| प्रकृ— | इति प्रकृ— | ,, | ६ |
| तलु | तालु | ,, | १० |
| षाद्व | षद्वि | ,, | १६ |
| वाह्य | बाह्य | ,, | १७ |
| एदतो | एदैतो | ९ | १२ |
| उत्का | उत्का | ,, | १९ |
| मान्नु | मन्नु | ,, | २२ |
| संवरा | संवारा | ,, | २५ |
| स्यायाम् | स्यायाम् | ,, | २८ |
| तेऽसौ | ते इति | १० | ३ |
| इदम् | इदम | ,, | ५ |
| ऋकार | लृकार | ,, | १७ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| लृकार | ऋकार | ,, | ,, |
| ङन्तम् | ङन्तम् | ११ | १७ |
| जस्मौ | जसमौ | ,, | ,, |
| उकारे सति | उकारे परतः सति | १२ | १५ |
| बध्वी— | बध्वी | ,, | २२ |
| जश | जश् | १३ | १० |
| ,, | ,, | १४ | ५ |
| धांन्त्रंश | धस्त्रंश | ,, | ११ |
| संज्ञाः | संज्ञा | १५ | १३ |
| दा | दादा | ,, | २० |
| अनेन् | अनेन | १६ | २२ |
| वयत्वात् | वयवत्वात् | ,, | २६ |
| एकदेशः | एकादेशः | १७ | ६ |
| वर्त्तिन | वर्त्तिनः | १८ | १४ |
| णं | णम् | ,, | २६ |
| दुर | दुर् | २० | १६ |
| प्राप्ता | प्रप्त्य | २१ | १३ |
| के एकार | कैकार | ,, | १६ |
| द्वं | द्धं | ,, | २६ |
| एकार | ऐकार | २२ | ८ |
| त्यूठमु | त्यूठ्मु | ,, | १४ |
| त्येरेव | त्योरेव | ,, | १६ |
| प्रथम | प्रथमं | २३ | ३ |
| माङ् | माङ् | ,, | ११ |
| स्वै | स्वै | ,, | १६ |
| रुप | रूप | २४ | २४ |
| उरण | उरण् | ,, | १३ |
| पूर्व | पूर्व | ,, | २४ |
| ष्टी | ष्टी | २५ | १ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| दश | वसन, दशं, | ,, | ,, |
| दुण | द्गुण | ,, | ४ |
| श्वेतानि | श्वेत्येतानि | ,, | ५ |
| कदेशः | कादेश | ,, | २१ |
| तस्य | न्तस्य | २६ | १६ |
| शव्देन | शब्देन | ,, | २५ |
| मानं | मानम् | २७ | ३ |
| रूप | रूपम् | ,, | ७ |
| वर्त्तिन | वर्त्तिनः | ,, | ८ |
| दिति | दीति | ,, | १८ |
| वर्त्तिन | वर्त्तिनः | ,, | २४ |
| दुद्धि | बुद्धि | २८ | ८ |
| न्त | न्तः | ,, | ११ |
| मृत | मृतम् | ,, | १६ |
| ष्टः | ष्ठः | ,, | ३३ |
| ष्ट | ष्ठ | २६ | १ |
| स्थिते | इति स्थिते | ,, | ५ |
| शिवहि | शिवेहि | ,, | ७ |
| मिद्ध | सिद्ध | ,, | ८ |
| रित्याश्रवयवो | रित्यत्यावयवो | ,, | १४ |
| न्बा | न्वा | ,, | १६ |
| सत्यां | सत्याम् | ,, | २० |
| रचः | रचोः | ,, | ,, |
| पदान्तात् | पदान्तात् इति | ,, | ,, |
| अनेक | अनेकः | ३० | ६ |
| स्याया | स्थया | ,, | २४ |
| लोकत् | लोकात् | ,, | २७ |
| ई | ई | ३१ | ७ |
| बंमू | वमू | ,, | ११ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| ततद | तद | ,, | २६ |
| एकदेश | एकदेशविकृत | ,, | २८ |
| वयं | क्यं | ,, | ५ |
| र्यम् | र्थम् | ,, | १५ |
| पर | पद | ,, | ३१ |
| एवं | एवम् | ३३ | २३ |
| ऋय | ऋथ | ३४ | १६ |
| ह्न | ह्न | ३५ | ६ |
| वया | क्या | ,, | २२ |
| ङित्त्वा | ङित्वा | ,, | २७ |
| उजो | उञो | ३६ | ५ |
| किम | किमु | ,, | ७ |
| तम् | मतम् | ,, | १७ |
| व्यौ | व्यौं | ,, | २३ |
| उदस्थादिति | "उदःस्था"—इति | ४३ | ३२ |
| धातोः | धात्वोः | ४४ | २६ |
| ङः सि | डःसि | ४८ | ३ |
| मुगण् | सुगण् | ,, | १० |
| छमु | छम्भुः | ,, | १२ |
| शमुः | शम्भुः | ,, | १३ |
| दुक् | डुक् | ४९ | ४ |
| क् | ट् | ,, | ८ |
| ष्ठथा | षष्ठथा | ,, | १९ |
| पयो | परो यो | ५० | १२ |
| सकार | सकारे | ५१ | २५ |
| पर | परतः | ५२ | ११ |
| स तु | सकारश्च | ,, | १२ |
| गों | गें | ,, | १६ |
| छव् | अम् | ५२ | १२ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| पदे | पदम् | ५७ | २६ |
| द्य | न्द्य | ५८ | ४ |
| लोपो | मते लोपो | ५९ | ११ |
| ह्रो | ह्रो | ,, | १६ |
| रत्यय: | रप्रत्यय: | ६४ | २ |
| प्रादि | प्राति | ,, | ६ |
| ह्ये | ह्ये | ,, | ११ |
| स्य: | स्त: | ,, | १२ |
| रिति | रित्यत्र | ७६ | २५ |
| सुप्तं | सुप्त्वं | ७९ | २३ |

——:०:——

**विशेष सूचना**—श्रीमन्तः ! अनया रीत्या भवद्भिः तत्र २ अनिर्दिष्टेऽपि स्थले शोधनीयं द्वितीयसंस्करणे सर्वा त्रुटिः पूरयिष्यते इति क्षमाभिक्षुः—

**नृसिंहदेवः ॥**

* श्रीः *

# मध्यकौमुदी

अथ संज्ञाप्रकरणम् ।

नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम ॥१॥

अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४ ॥

इति सूत्राण्यणादिसंज्ञार्थानि ॥ हकारादिष्वकार उच्चारणार्थः । लणमध्ये त्वित्संज्ञकः * ॥

हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता ।
अर्हेणाधुक्षदित्यत्र द्वयं सिद्धं भविष्यति ॥ २ ॥

हलन्त्यम् । १ । ३ । ३ । उपदेशेऽन्त्यं हलित् स्यात् ॥ उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र । अदर्शनं लोपः । १ । १ । ६० । प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥

( प्राज्ञचित्तप्रसादिनी )

प्रणम्य धात्रीं जनकं गुरुंश्च सरस्वतीं श्रीगणपं गिरीशम् ।
"नृसिंहदेवः" कुरुते मनीषी टीकामपूर्वां विशदार्थबोधाम् ॥१॥
नक्तन्दिवा शास्त्ररसातिरेकादुपेक्ष्य बाह्यानपलप्य गल्पम् ।
विद्यार्थिलोकस्य हिताय यत्तः प्राज्ञप्रसादाय मनो निवेश्य ॥२॥ ( युग्मम् )
प्राज्ञानां चेतसो मोदात् "प्राज्ञचित्तप्रसादिनी"
टीका यस्याः प्रसादेन भवेयुर्मनसो मुदः ॥३॥
मध्यसिद्धान्तकौमुद्याष्टीकेयं सरला परा । इतः पूर्वं न काऽप्यस्यामीदृशी दृष्टिमागता ॥४॥
एतदाश्रयमात्रेण वैयाकरणसत्तमाः ! । साधुता हि प्रयोगाणा माशु संस्फुरयिष्यति ॥५॥
अनुवादस्य लेखेऽपि देवभाषासुभाषणे । प्रश्नाना मुत्तरोल्लेखे मार्गे मेधा विधास्यति ॥६॥
किञ्च शास्त्रिपरीक्षायां निविष्टानां कृते तथा । उपकारो यदेतस्याः स्वयं ज्ञातो भविष्यति ॥७॥

---

* लण् सूत्रस्थमकारमादाय "उरण् रपर" । १ । १ । ५१ ) इति सूत्रे र-प्रत्याहारग्रहणम, ऋऌवर्णयोः स्थाने जायमानोऽण् रपरः रप्रत्याहारपरः, तेन ऋस्थाने अर् आर् इत्यादि लृस्थाने अल् आल् इत्यादि भवतीत्यर्थः । इदञ्च कैयटमतानुरोधेन ।

अल्पायासेनैव व्याकरणप्रयोगाणां साधुताज्ञानसम्पादनकामो विद्यार्थिलोकहितैषी श्रीवरदराजः सुधीः सिद्धान्तकौमुदीपाठं विनापि वैयाकरणत्वलाभपूर्वकसकलशास्त्रप्रवेश-योग्यतासम्पत्तये मध्यसिद्धान्तकौमुदीं प्रणिनीषुर्विघ्नध्वंसपूर्वकग्रन्थसमाप्तिहेतवे शिष्टाचार-परम्परागतं मङ्गलकृत्यकरणं परिपालयन् आदौ गुरुनमस्कारात्मकं मङ्गलमारचयति **"नत्वा"** इति । 'णम्' प्रह्वत्वे शब्दे च । अस्मात् धातोः "समानकर्त्तृकयोः पूर्वकाले" (३।२।२१) इतिसूत्रेण (समानकर्त्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानात् धातोः क्त्वा प्रत्ययः) प्रह्वीभूयेत्यर्थः । "श्रीगुरून्" श्रीः सम्पत् । प्रकृते च विद्यारूपा सा ग्राह्या तया सहिता गुरवः श्रीगुरवः तान् । 'शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन' इति, 'नास्ति तत्त्वं गुरोः परम्' इति च परमपूज्यत्वात् गुरोर्नमनमत्यावश्यकमिति भावः । बहुवचनमादरातिश-यद्योतनार्थम् । श्रयति हरिमिति * 'श्रीः' । "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घो ऽसम्प्रसारणञ्च" इति वार्त्तिकेन क्विप्दीर्घौ । 'गॄ' शब्दे । अस्मात् क्र्यादिगणपठितात् धातोः "कृग्रोरुच्च" (उ० १।२४) इत्यौणादिकसूत्रेण उः प्रत्ययः । गृणाति उपदिशति शास्त्रमिति 'गुरुः' † । "भट्टोजिदीक्षितान्"=भट्टोजिदीक्षित इत्याख्यान् इत्यर्थः । भटतीति भट्टो वाग्मी । 'भट' परिभाषणे । अस्मात 'तन्' प्रत्ययः । भट्टान् वाग्मिनोपि पण्डितान् 'उ' तर्केण जयतीति 'भट्टोजिः' भट्टोजिरिति दीक्षा संज्ञा जाता अस्येति भट्टोजिदीक्षितः तान् इति सम्प्रदायविदः । "पाणिनीयानाम्"=पाणिनिना प्रोक्तं पाणिनीयम् । * "तेनप्रोक्तम्" (४।३।१०१) इत्यधिकारे प्रोक्तार्थे "वृद्धाच्छः" (४।२।११४) इति 'छ' प्रत्ययः । "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" (७।१।२) इति छस्य ईयादेशः । पाणिनीयं व्याकरणम् तदधीयते विदन्ति वा इति पाणिनीयाः तेषां तत्सम्बन्धिनीम् 'मध्यसिद्धान्तकौमुदीम्' = मध्याश्च ते सिद्धान्ताः मध्यसिद्धान्ताः = एवमेते शब्दाः साधव इति निश्चिता अर्थाः अत्यल्पाशेषभिन्ना इत्यर्थः, तेषां † कौमुदीम् = चन्द्रिकाम् कौमदीमिव

---

* लक्ष्मी सरस्वतीधात्रि वर्गसम्पद्विभूतिशोभासु ।
उपकरणवेशरचनासुविधानेषु च श्रीरिति प्रथिता । इति व्याडिः ॥

† निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥

* तेनेति तृतीयासमर्थात् प्रोक्तमित्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । प्रकर्षेणोक्तं प्रोक्तं नतु कृतम् ।

† कौ मोदन्ते इति कुमुदानि कैरवाणि तेषामियं कौमुदी चन्द्रिका । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः । 'मुद' हर्षे । अस्मात् 'मूलविभुजादिभ्यश्च' (वा० ३।२।५) इति वार्त्तिकेन 'कः' प्रत्ययः । अथवा—'इगुपधज्ञाप्रीकिरश्च' (३।१।१३६) इति सूत्रेण 'कः' ।

कौमुदीं साधुशब्दप्रकाशयित्रीम् अत्यन्तसादृश्यात्ताद्रूप्यव्यपदेशः । चन्द्रिका हि तमो निरस्यति, घटपटादिपदार्थान् सुखं प्रकाशयति, रविकरसम्पर्कसञ्जातसन्तापमपनयति, एवमियमपि ग्रन्थात्मकवाक्यसमुदायविशेषरूपा अज्ञानान्धकारात्मकं तमो निरस्यति पाणिनीयपदार्थाननायासं प्रकाशयति, शब्दसाधुतानवबोधकाठिन्यसन्तापञ्च दूरीकुरुत इत्येवमत्यन्तसादृश्याद् युज्यतेऽस्यां कौमुदीतादात्म्याध्यवसायः । "करोति" = तनुते ।

अत्र--'वरदराजः भट्टोजिदीक्षितान् श्रीगुरून् नत्वा पाणिनीयानां मध्यसिद्धान्तकौमुदीं करोति' इत्यन्वयो बोध्यः । किञ्च:—मत्तस्त्वमुत्कृष्टः त्वत्तोऽहमपकृष्टः इत्याकारकज्ञानजनककरतलशिरःसंयोगानुकूलो व्यापारो नतिः । 'क्त्वा' प्रत्ययार्थस्तु उत्तरकालिकत्वं तत्समानकर्तृकत्वञ्च । एवं सति—उक्तव्यापारात्मकनमस्कारोत्तरा नमस्कारसमानकर्तृका च या मध्यसिद्धान्तकौमुदीविषयिणी कृतिः तदाश्रयो वरदराजः (ग्रन्थकर्त्ता) इति वाक्यार्थः ।

अत्र—'मध्यसिद्धान्तकौमुदी' इत्यन्वर्थसञ्ज्ञाबलेन वैयाकरणसिद्धान्ताः प्रतिपाद्यत्वेन विषयाः । अनायासेन सिद्धान्तानां ज्ञानं प्रयोजनम् । तस्य ग्रन्थस्य च जन्यजनकभावः सम्बन्धः । वैयाकरणसिद्धान्तजिज्ञासुरधिकारीति प्रेक्षावत्प्रवृत्त्यङ्गभूत*मनुबन्धचतुष्टयं दर्शितम् । उक्तञ्च:—

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ इति ।

पाणिनीयव्याकरणमध्यसिद्धान्तान् निरूपयिष्यन् व्याकरणशास्त्रस्य मूलभूतानि चतुर्दशसूत्राणि पठति—"अइउण्" इत्यादीनि । एषां सूत्राणां व्याकरणशास्त्रे प्रयोजनमाह-"इति सूत्राणि" इति । इति† माहेश्वराणि सूत्राणीत्यर्थः । उक्तञ्च नन्दिकेश्वरकाशिकायाम्:-

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥

इति । ननाद = नादयामासेत्यर्थः अन्तर्भावितण्यर्थः । नवपञ्चवारम् = चतुर्दशकृत्वः । शिवाढक्कोत्थितं वर्णजातं शिवसूत्रजालतया विमर्शे जानामि । "विमर्शे" इत्यत्र आर्षस्तङ् । 'अण्' आदिर्यासां ता अणादयः । अणादयश्च ताः संज्ञाश्च अणादिसञ्ज्ञाः, ता अर्थः प्रयोजनं येषां तानि अणादिसञ्ज्ञार्थानि । अथवा—अणादिसञ्ज्ञाभ्य इमानि इत्यस्वपदविग्रहः ।

---

* ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमनुबन्धसामान्यलक्षणम् ॥

† महेश्वरादागतानि माहेश्वराणि महेश्वरवरप्रसादात् भगवता पाणिनिना मन्त्रोपदेशलब्धानीत्यर्थः । "तत आगतः" ( ४ । ३ । ७४ ) इत्यण् । एतेनैतेषां महेश्वरकृतत्वं पाणिनिकृतत्वं वा वदन्तः केचन परास्ता वेदितव्याः । सम्प्रदायविरोधेन सर्वत्रानाश्वासप्रसङ्गात् । सूत्रलक्षणञ्च—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥ इति ।

"अर्थेन नित्यसमासो विशेष्यलिङ्गता च" ( वा० २ । १ । ३६ ) इति नित्यसमासः । यद्यपि 'अइउण्' इत्यादि सूत्रेषु अन्त्या णकारादयो वर्णा निष्प्रयोजना आभान्ति तथापि व्याकरणशास्त्रोपयोग्यणादिसञ्ज्ञासु उपयोगसत्त्वात् न सर्वथा तेषां निष्प्रयोजनत्वमिति भावः । वर्णानामसन्दिग्धत्वेन बोधनाय संहिताया अविवक्षणान्नैतेषु सूत्रेषु सन्धिकार्यम् । अतएव "वर्णात् कारः" (वा३।३।१०८) इति 'कार' प्रत्ययोऽपि न । "रोगाख्यायां ण्वुल बहुलम्" (३।३।१०८) इत्यतो बहुलम् इत्यस्यानुवर्त्तनात् । 'छन्दोवत्सूत्राणि भवन्ती'ति न सन्धिरित्यन्ये । स्वराणां चादिषु पाठात् "चादयोऽसत्वे" ( १ । ४ । ५७ ) इत्यनेन निपातत्वात् "निपात एकाजनाङ्" ( १ । १ । १४ ) इत्यनेन प्रगृह्यसंज्ञायां "प्लुत-प्रगृह्या अचि नित्यम्" ( ६।१।१२५ ) इति सूत्रेण प्रकृतिभावादेतेषु न सन्धिरित्यपरे । **हकारादिषु** इति । 'हयवरट्' इत्यादिषु । हकारादीनां सुखोच्चारणार्थं पुनःपुनरकारपाठ इत्यर्थः । अन्यथा 'ह् य् र् व्' इत्येवं क्लेशेनोच्चारणं स्यात् । 'नान्तरेणाचं व्यञ्जनस्योच्चारणं भवति' इति (१।२।२६) सूत्रभाष्योक्तेः । 'लण्' सूत्रमध्ये अकारस्य विशिष्टं प्रयोजनमाह-**"लण्मध्ये"**इति । 'उपदेशेऽजनुनासिक'"इत् १।३।२)इतिसूत्रेण इत्सञ्ज्ञक इत्यर्थः । तस्य प्रयोजनं 'र'प्रत्याहारसिद्धिः । इदमग्रे स्फुटीभविष्यति । सूत्रेषु हकारस्य वारद्वयपाठफलमाह—**"हकार"** इति । अयं हकार 'अटि' = अट्प्रत्याहारे 'शलि' = शल्प्रत्याहारे 'अपि' = च 'वाञ्छता' = प्रयोगसिद्धिं कामयमानेन आचार्येण 'द्विः' = वारद्वयम् 'उपात्तः' = पठितः । एतल्लक्ष्यं दर्शयति—**"अर्हेण"** इत्यादि । 'अर्हेण' इति 'अर्ह' शब्दस्य तृतीयाया एकवचने टायां रूपम् । तत्र 'टा' इत्यस्य "टाङसिङसामिनात्स्याः" (७।१।१२) इति सूत्रेण 'इन' इत्यादेशे जात आद्गुणे च "अट्कुप्वाङ्नुम्व्यवायेऽपि" (८।४।२ (इति 'अटि' परे णत्वे जाते च सिद्धयति । यदि पूर्वं हकारो न पठ्येत तर्हि णत्वं न स्यात्, किन्तु 'अर्हेन' इत्याकारकं रूपं भवेत्, तस्मात् तदशुद्धमिति पूर्वं हकारः पठितः । 'अधुक्षत्' इत्यादौ शलि प्रत्याहारे हकारपाठस्य फलं ज्ञेयम । तथाहि—अत्र 'अदुह् च्लि त्' इत्यवस्थायां * "शल इगुपधादनिटःक्सः" (३।१।४।६) इति सूत्रेण इगुपधशलन्तात् परस्य अनिटः च्लेः क्सादेशः, यदि पुनर्हकारं न पठेम तदा 'शल्' प्रत्याहारमध्ये 'हकार'–पाठाभावात् कथमत्र च्लेः क्सादेशः स्यात्, तस्मादुभयत्र पठनं न्याय्यमिति भावः । 'इत्' सञ्ज्ञासूत्रमाह—† **हलन्त्यम्** इति । अन्ते अवसाने भवम् 'अन्त्यम्' ।

---

* इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः ।

† 'दीक्षिते'स्तु इदं सूत्रमावृत्त्या व्याख्यातम् । तेषामयमाशयः— वाक्यार्थबोधात् प्राक् पदार्थज्ञानमत्यावश्यकम पदार्थज्ञानस्य वाक्यार्थज्ञानम्प्रति कारणत्वात् । एवञ्च हलन्त्यमित्यस्य वाक्यार्थबोधे 'हल्' पदार्थज्ञानमत्यावश्यकम्, तच्च 'आदिरन्त्येन सहेता' इत्यस्य वाक्यार्थबोधं विना न सम्भवति इति हलन्त्यसूत्रस्य वाक्यार्थबोधे आदि-

"दिगादिभ्यो यत्" ( ४ । ३ । ५ ) इति 'यत्' प्रत्ययः । हलि अन्त्यमित्येव विग्रहो न्याय्यः । 'उपदेऽजनुनासिक इत्' इति सूत्रात् 'उपदेशे' इति 'इत्' इति चानुवर्त्तते । कोऽसावुपदेश इति जिज्ञासायामाह— '**उपदेश**" इति ।

तथाच 'उप' शब्द आद्यर्थकः । दिशिरुच्चारणक्रियायाम् । उपदेशनमुपदेश इति भावे घञ् । अथवा आदौ भवा 'आद्याः' शङ्करपाणिन्यादयः तैः कृतं डमरुमुखादि-द्वारोच्चारणमाद्योच्चारणमित्यर्थः । तच्च । शिवसूत्रधातुप्रातिपदिकप्रत्ययनिपातागमादेश-रूपमेव ग्राह्यम् । उक्तञ्च:—

धातुसूत्रगणोणादिनामलिङ्गानुशासनम् । आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः ॥

'उपदेश' इति किम् । अग्निचित् सोमसुत् इत्यत्र इत्सञ्ज्ञायां लोपः स्यात् 'अन्त्यं' किम् । वेश्म सद्म इत्यादौ मनिनो मकारस्य लोपो माभूत् । 'हल्' इति किम् । भू सत्तायाम् भविता । नच प्रयोजनाभावान्नेत्त्व मिति वाच्यम् । सत्यामित्सञ्ज्ञायाम् "ऊदितः" इति इड्विकल्पा पत्तेः । 'सूत्रेषु' इति । सूत्रान्तरात् = अष्टाध्याय्यां पूर्वपठितात् अन्यसूत्रात् । एवं सति सर्वत्र सूत्रवाक्यार्थः सम्पद्यत इति भावः । लोपसञ्ज्ञामाह— '**अदर्शन**' मिति । प्रसक्तस्य = शास्त्रतोऽर्थतो वा विद्यमानस्य ।

**तस्य लोपः । १ । ३ । ९ । तस्येतो लोपः स्यात् ॥ णादयो ऽणाद्यर्थाः ॥ आदिरन्त्येन सहेता । १ । १ । ७१ । अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् ॥ यथाऽणिति अइउ वर्णानां संज्ञा । एवमच् हल् अल् * इत्यादयः ॥ ऊकालोज्झ्-**

---

रन्त्येनेत्यस्य वाक्यार्थबोधोऽपेक्षितः । आदिरन्त्येनेत्यस्य वाक्यार्थबोधे तु इत्पदार्थज्ञानमत्या-वश्यकम्, तच्च हलन्त्यसूत्रवाक्यार्थबोधाधीनमित्युभयोर्वाक्यार्थबोधे उभयसूत्रीयवाक्यार्थ-बोधस्यापेक्षायामन्योन्याश्रयो दुरुद्धर इति आवृत्त्या सूत्रं कल्पनीयम् । पूर्वत्र सम्बन्ध-सामान्ये षष्ठ्या समासः, तेन हलः = ( हल्सूत्रस्य ) अन्त्यं यत् तदित्सञ्ज्ञकमित्यर्थः । परत्र च 'राहोः शिर' इतिवदुपचारेण अभेदे षष्ठ्या समासे हल्रूपान्त्यमित्स्यादित्यर्थः । अनया रीत्या पूर्वं हलन्त्यसूत्रवाक्यार्थबोधस्य जातत्वेन इत्पदार्थज्ञानसौलभ्येन आदिरन्त्येने त्यस्य वाक्यार्थबोधे जाते हल्पदार्थसिद्धौ द्वितीयहलन्त्यसूत्रवाक्यार्थबोधे नैव कस्याप्य-पेक्षेति नान्योन्याश्रयदोषशङ्काकलङ्कः । ननु—आवृत्तिकरणे किं बीजमिति चेत् "न विभक्तौ तुस्माः" ( १ । ३ । ४ ) इति सूत्रं गृहाण । अन्यथा हलन्त्यमिति वाक्यार्थाऽ-निष्पत्त्या इत्त्वाऽप्रवृत्तौ तन्निषेधो ( सूत्रारम्भः ) व्यर्थ एवेति शम् ।

* 'एकस्मात् ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्य' इति **काशिका** ।

अस्यायमर्थः—अण् एङ् यञ् छव् अट् इत्येकादिकाः पञ्च ५ । झष् भष् इति षान्तौ द्वौ २ । अक् इक् उक् इति कान्ताः त्रयः ३ । अण् इण् यण् इति परणान्ताः

ह्रस्वदीर्घप्लुतः । १ । २ । २७ । उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद्धस्वदीर्घप्लुतसंज्ञः स्यात् ॥ स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ उच्चैरुदात्तः । १ । २ । २९ । ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ॥ नीचैरनुदात्तः १ । २ । ३० । ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् ॥ समाहारःस्वरितः । १ । २ । ३१ । उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यत्र सोऽच् स्वरितसंज्ञः स्यात् ॥ स नवविधोपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ मुखनासिकावचनोनुनासिकः । १ । १ । ८ । मुखसहितनासिकयोच्चार्यमाणोवर्णोनुनासिकसंज्ञः स्यात् ॥ तदित्थम ॥ अइउऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । लृवर्णस्य द्वादश । तस्य दीर्घाभावात् । एचामपि द्वादश ॥ तेषां ह्रस्वाभावात् ॥ तुल्यास्यप्रयत्नं सवर्णम् १ । १ । ९ । ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् ॥ ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् ॥

'या या सञ्ज्ञा सासा फलवती' इति नियमेन इत्सञ्ज्ञायाः फलं दर्शयति—"तस्य लोप" इति । णादयः= अइउण्' 'ऋलृक्' 'एओङ्' इत्यादिषु अन्त्या ण् क् ङ् इत्यादयः अण्, अक् एङ् इत्यादिषु प्रत्याहारार्थाः । प्रत्याहारसञ्ज्ञासूत्रमाह "आदि"रिति । 'अन्त्येन' इति किम् । सुडिति प्रत्याहारः तृतीयैकवचनेन माभूदिति * काशिका । स्वं रूपं शब्दस्याशब्दसञ्ज्ञा" ( १।१।६८ ) इत्यतोऽनुवर्त्यार्थमाह -- 'स्वस्य च' इति ।

त्रयः ३ । अम् यम् ङम् इति मान्ताः त्रयः ३ । अच् इच् एच् ऐच् इति चान्ताः चत्वारः ४ । यय् मय् झय् खय् इति यान्ताः चत्वारः ४ । यर् झर् खर् चर् शर् इति रान्ताः पञ्च ५ । अश् हश् वश् झश् जश् बश् इति शान्ताः षट् ६ । अल् हल् वल् रल् झल् शल् इति लान्ताः षट् ६ । इति सर्वे मिलिताः चतुर्दशसूत्र्या अणादय एकचत्वारिंशत् संज्ञा अष्टाध्याय्यां व्यवह्रियन्ते । कैयटमतानुरोधेन तु रप्रत्याहारस्य, चय्प्रत्याहारस्य च "चयो द्वितीया" इति वार्त्तिकपाठे सत्त्वात् त्रिचत्वारिंशत् ।

* यद्यपि टकारान्तसङ्घस्य 'टा' टकारोऽप्यन्तो भवति तथापि अन्त्येनेति ग्रहणसामर्थ्यात् अन्त्यत्वप्रयुक्ता यस्येत्सञ्ज्ञा तेनैव प्रत्याहारः । नहि 'टा' टकारे 'हलन्त्यम्' इतीत्सञ्ज्ञा प्रवर्त्तते । नचैवं रप्रत्याहारासिद्धिः लण्सूत्रस्थवर्णस्यानुनासिकत्वप्रतिज्ञासामर्थ्यात् अनन्त्येनापि इता प्रत्याहारात् तत्सिद्ध्यतीति काशिकाकाराशयः ।

स्वं रूपञ्चादेरेव गृह्यते नत्वन्त्यस्य 'अन्त्येन' इत्यप्रधानतृतीयानिर्देशात्। प्रत्याहारानुदाहर्त्तु-माह–"**यथा**" इति। आदिरन्त्येनेत्येतत्सूत्रेण कृताः सञ्ज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते। प्रत्याह्रियन्ते संक्षिप्यन्ते* वर्णा यत्रेति '**प्रत्याहारः**' इत्येवं प्रकृतिप्रत्ययार्थान्वितसमुदायार्थ-बोधकत्वस्वरूपयोगरूढशक्तेरणादिषु एव तत्प्रसक्तेरिति सारः।

ह्रस्वादिसञ्ज्ञासूत्रम्–'**ऊकालो०**' इति। ह्रस्वश्च दीर्घश्च प्लुतश्च एषां समाहारो ह्रस्वदीर्घप्लुतः। सौत्रं पुंस्त्वम्। उ, ऊ, ऊ३ इति त्रयाणामेकमात्रद्विमात्रत्रिमात्राणां द्वन्द्वसमासे सति सवर्णदीर्घेण 'ऊ' इति प्रश्लिष्टनिर्देशः। तेषां कालः ऊकालः। कालशब्दो मात्रापरपर्यायः कालसदृशे लाक्षणिकः। ऊकालः कालो यस्येति विग्रहः। "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोप" इति द्विपदो बहुव्रीहिः। 'वांकाल इति फलितार्थकथनम्। 'आकालेऽज्भ्रस्वे'ति तु न सूत्रितम् ऊशब्देऽचि कुक्कुटरुते एकद्वित्रिमात्रत्वप्रसिद्धेः। '**स**' इति। ह्रस्वो दीर्घः प्लुतश्च अच् उदात्तत्वेन, अनुदात्तत्वेन स्वरितत्वेन च धर्मविशेषण त्रिधा = त्रिभिः प्रकारैर्वर्त्तमानो ज्ञेयः। अथोदात्तलक्षण-माह–"**उच्चै**" रिति। 'उच्चैः' शब्द ऊर्ध्वभागेऽत्र वर्त्तते नतु नादधर्मविशेषः उच्चैस्त्वं विवक्षितम् उपांशूच्चार्यमाणेऽव्याप्तेः। ऊकालोऽजिति सूत्रात् 'अच्' इत्यनुवर्त्तते। उदात्तस्योदाहरणम्––† '**आये**' इति। अनुदात्तसंज्ञामाह––'**नीचै**' रिति। पूर्ववद्व्याक-र्त्तव्यम्। स्वरितसंज्ञामाह––'**समाहार**' इति। पूर्वसूत्राभ्यां उदात्त इति अनुदात्त इति चानुवर्त्तते। 'ऊकाल' इत्यतः 'अच' इति च। समाहार इत्यत्राधिकरणे घञ्। "**सनव-विधोपी**"ति। उक्तरीत्या नवविधोऽपि सोऽच् अनुनासिकत्वेन अननुनासिकत्वेन च द्विधा द्वाभ्यां प्रकाराभ्यां वर्तते इत्यर्थः। एवं सति नव अचः अनुनानासिकाः, नव च अननु-नासिका इति प्रत्येकमेकैकस्याच अष्टादश भेदा भवन्ति। अनुनासिकसंज्ञां दर्शयति––"**मुखनासिकावचन**"इति। मुखसहिता नासिका मुखनासिका "शाकपार्थिवादीनांसिद्धये०" इति 'सहित' पदस्य लोपः। उच्यते उच्चार्यते इति वचनः'। कर्मणि ल्युट्। मुखनासिकया वचन इति "कर्त्तृकरणे कृता बहुलम्' (२।१।३२) इति तृतीयासमासः। मुखञ्च नासिकाचेति द्वन्द्वे सति तु प्राण्यङ्गत्वादेकवद्भावे 'मुखनासिक'मिति स्यात्। ननु––ये ऽष्टादशभेदाः ते किं सर्वेषामचां तुल्या अथवाऽस्ति कश्चिद्विशेष इत्याह––'**तदित्थम्**' इति। वक्ष्यमाणप्रकारेण व्यवस्थितोऽचां भेदप्रपञ्चो ज्ञेय इत्यर्थः। '**अष्टादशभेदा**' इति। अष्टादशप्रकारा इत्यर्थः। यद्यपीदं न जातिपक्षे तस्या एकत्वात्। नापि व्यक्तिपक्षे व्यक्ती-नामानन्त्यात्, तथापि लोकवेदयोः प्रयुज्यमानानां शास्त्रीयकार्योपयोगिनां तद्व्याप्यधर्मवता-मष्टादशत्वमेवेति भावः। '**ऌवर्णस्य**' इति। विवृतस्येत्यर्थः। तेन '**ऌति ऌवा**' इति विहितस्य वर्णान्तरस्य दीर्घत्वेऽपि न क्षतिः तस्येषत्स्पृष्टत्वात्। "**दीर्घाभावात्**" इति।

---

* "कृत्यल्युटो बहुलम्" (३।३।११३) इति बहुलग्रहणादधिकरणे घञ्।

† **सिद्धान्तकौमुदीतो विशिष्य ज्ञेयम्।**

इति। लृकारस्य दीर्घाभावे 'होतृ लृकार' इत्यत्र सवर्णदीर्घे कृते 'होतॄकार' इति ऋकारस्यैव तुल्यास्यसूत्रे अकःसवर्णे इति सूत्रे च भाष्योदाहरणमेव प्रमाणम्। 'ह्रस्वाभावात्' इति। यदि ह्रस्वा स्युस्तर्हि वर्णसमाम्नाये त एव लाघवात् पठ्येरन्निति भावः। सवर्णसञ्ज्ञासूत्रमाह—"तुल्यास्यप्रयत्नम्०" इति। तोलनं तुला, तुलया सम्मितं तुल्यम्। आस्ये भवमास्यम् ताल्वादिस्थानम्। 'शरीरावयवाद्यत्" (४।१।६ "यस्येति च"(६।१।१४८) प्रकृत्यन्त्यस्य अकारस्य लोपः। प्रकृष्टो यत्नः प्रयत्नः। आस्यञ्च प्रयत्नश्च आस्यप्रयत्नौ। तुल्यावास्यप्रयत्नौ यस्य, तालुन आदिस्ताल्वादिः कण्ठः तालु आदि-र्येषां तानि ताल्वादीनि ताल्वादिश्च ताल्वादीनि च ताल्वादि "नपुंसकमनपुंसकेन०" (१।२।६९) इत्येकशेषः तेन कण्ठसङ्ग्रहः।

अकुहविसर्जनीयानां* कण्ठः॥ इचुयशानां तालु॥ ऋटुरषाणां मूर्धा॥ लृतुलसानां दन्ताः॥ उपूपध्मानीयानामोष्ठौ॥ ञमङणनानां नासिका च॥ एदैतोः कण्ठतालु॥ ओदौतोः कण्ठोष्ठम॥ वकारस्य दन्तोष्ठम्॥ जिह्वामूलीयस्य जिह्वामूलम॥ नासिकानुस्वारस्य॥ यत्नो द्विधा॥ आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा॥ स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् तत्र स्पृष्टं प्रयतनं स्पर्शानाम। ईषत्स्पृष्टमन्तस्थानाम्॥ ईषद्विवृतमूष्मणाम, ह्रस्वस्यावर्णस्य प्रयोगे संवृतम॥ प्रक्रियादशायां तु विवृतमेव। बाह्यप्रयत्नस्त्वेकादशधा विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवाराःश्वासा अघोषाश्च॥ हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तस्थाः। शषसहा ऊष्माणः। अचः स्वराः। ⌅क ⌅ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः। ⌅प ⌅फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ। अणुदित्सवर्णस्य चाप्रत्ययः। १।१।६९। अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कुचुटुतुपु एत उदितः। तदेवम इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं लृकारोपि। एचोद्वादशानाम।

---

* अत्र विसर्जनीयपदेन अकारात्परो विसर्जनीयो विवक्षितः। इकारादिभ्यः परस्तु पूर्वोच्चस्थानभाक् 'अयोगवाहा विज्ञेया आश्रयस्थानभागिन" इति पाणिनिशिक्षावाक्यात्। यथा इकारात्परस्य तालुस्थानम्, उकारात् परस्यौष्ठावित्यादि।

**अनुनासिकाऽननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयो संज्ञा । परः संनिकर्षः संहिता । १।४।१०९। वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥**

कस्य किं स्थानमित्याकाङ्क्षायां पाणिनिशिक्षानुसारं तद्दर्शयति—**'अकुहे'** त्यादिना । 'अ' इत्यष्टादश भेदा गृह्यन्ते । 'कु' इति कादिपञ्चकात्मकः कवर्गः । अश्च कुश्च हश्च विसर्जनीयश्चेति विग्रहः । विसर्जनीयो विसर्गश्चेति पर्यायशब्दौ । **'इचुयशे'**ति । 'इ' इत्यष्टादश भेदाः । 'चु' इति चवर्गः । इश्च चुश्च यश्च शश्चेति विग्रहः । **ऋटुरषेति** । 'ऋ' इत्यष्टादश भेदाः । 'टु' इति टवर्गः । ऋच टुश्च रश्च षश्चेति विग्रहः । **लृतुलसेति** । 'लृ' इत्यस्य द्वादश भेदाः । 'तु' तवर्गः । ऌच तुश्च, लश्च सश्चेति विग्रहः ।

**'दन्ता'** इति—'दन्त' शब्देनात्र तत्समीपवर्त्ती देशो लक्ष्यते, अतो भग्नदन्तस्याप्युच्चारणं भवत्येव । **'नासिका च'** इति । चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते । एदैतो' रित्यत्र तपरकरणमसन्देहार्थं, तेन प्लुतस्यापि सङ्ग्रहः । **दाधिमथास्तु**—एकारस्य ताल्वेव स्थानम् 'इचशेयास्तालौ' इति प्रातिशाख्यसम्मतात् "सिद्धमेङः सस्थानत्वात्" इति वार्त्तिकात् । ओकारस्योष्ठावेव स्थानम् 'उवोपोपध्मा ओष्ठे' इति प्रातिशाख्यात् 'सिद्धमेङः सस्थानत्वात्' इति वार्त्तिकाच्चेत्याहुः । **'दन्तोष्ठ'** मिति—'दन्तोष्ठयो वः' इति शिक्षायां* दन्तसन्निकृष्टे ओष्ठे भव इत्यर्थेन वकारस्य दन्ता नैव स्थानम् अन्यथा वकारस्य सम्प्रसारणे लृकारापत्तिर्दुर्वारेति **दाधिमथाः** ।

**'नासिका'** इति । 'अनुस्वारयमानाञ्च नासिकास्थानमुच्यते' इति पाणिनिशिक्षाबलादित्यर्थः । वर्णानां स्थानानि उक्त्वा यत्नं दर्शयति—**'यत्न'** इति । द्विधा=द्विप्रकारः । बाह्याभ्यन्तरभेदादित्यर्थः । आभ्यन्तरं विभजते—**'पञ्चधा'** इति । एतेषामाभ्यन्तरत्वं वर्णोत्पत्तेः प्राग्भावित्वाद्बोध्यम् । तथाहि—नाभिप्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः । तत्रोत्पत्तेः प्राग् यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा **स्पृष्टता**, ईषद् यदा स्पृशन्ति तदा **ईषत्स्पृष्टता**, समीपावस्थानमात्रे **संवृतता**, दूरत्वे **विवृतता**, । विवारसंवारादयस्तु—वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्ते इति "बाह्या" उच्यन्ते । गलविवरस्य सङ्कोचात् **संवारः** । तस्यैव विकाशाद् **विवारः** । एतौ च संवृतविवृताभ्यामाभ्यन्तराभ्यां भिन्नावेव तयोः समीपदूरावस्थानात्मकत्वात् ॥ प्रक्रियादशायाम् = साधनावस्थायाम् । व्याकरणरीत्या शब्द-

---

* शिवो भगवान् भक्तिरस्येति विग्रहे 'शिवभागवत' इतिवत् तद्धितसामञ्जस्यं बोध्यम् ।

सिद्धिपर्यन्तं तस्य विवृतत्वमेव ज्ञेयमित्यर्थः । एवञ्च तत्र (दण्डाढकमित्यादौ; दीर्घसिद्धिः सुलभेति भावः ।

सवर्णसञ्ज्ञाग्राहकसूत्रमाह—**'अणुदित्'** इति । विधीयतेऽसौ विधीयमानः । न विधीयमानोऽविधीयमानः । तेन 'दाशरथिः' इत्यत्र "अत इञ्" ( ४ । १ । ९५ ) इत्यनेन त्रिमात्र इकारो न भवति, "इदम इश्" ( ५ । ३ । ३ । ) इत्यत्रापि त्रिमात्र इकारो न । 'उदिच्च' इत्यत्र अविधीयमान इति न सम्बध्यते उदित्करणसामर्थ्यात् तेन विधीमानोप्युदित् सवर्णान् गृह्णात्येव । यथा च—जगाद । जघटे । इत्यादौ "कुहोश्चुः" ( ७ । ४ । ६२ ) इत्यनेन विधीयमानस्य उदितः (क्वादेः) सवर्णग्रहणम् । **अत्रैवाण्** इति । **'परेण णकारेण'** इति * व्याख्यानतो विशेषप्रतिपत्तेः । अत्र "ॠत उत्" ( ६ । १ । १११ ) इति सूत्रं लिङ्गम् । यदि हि पूर्वेण स्यात् ऋकारस्योकारस्य च सवर्णग्राहकत्वात् तपरकरणं व्यर्थं स्यात् । ऋकारस्यानण्त्वेन सवर्णग्राहकत्वात् । आकृतिपक्षे तु नावश्यकता "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति भाष्योक्तेः । अयमाकृतिपक्ष एव सिद्धान्तभूतः 'अवात्ताम्' इत्यादौ तस्यावश्यकत्वात् । व्यक्तिपक्षे तु नास्य सिद्धिः । अणुदित्सूत्रस्य फलं दर्शयति—**'तदेवम्'** इति । 'तत्'=अणुदित्सूत्रम् एवम् = वक्ष्यमाणरीत्या फलतीति शेषः । **'त्रिंशत'** इति । ऋॢवर्णयोर्मिथः सवर्णतया ऋकारेण स्वकीयाष्टादशभेदानां ॢकारस्य द्वादशभेदानां च ग्रहणमिति ज्ञेयम् । **'एवं ॢकारोपी'**ति । ऋकारस्यापि ॢकारसवर्णत्वादिति भावः । इदञ्च सम्भवमात्रेणोक्तम् नतस्य क्वापि प्रयोजनम । ॢकारेण ऋकारग्रहणस्य कुत्राप्यदृष्टत्वादिति बोध्यम् ॥ **'एचो द्वादशानाम्'** इति । एचां ह्रस्वाभावात् द्वादशभेदानामेव ग्रहणम् । **'तेन'** इति । उक्तद्विविध्येन सवर्णत्वात् अननुनासिकास्ते यवलाः प्रत्येकं द्वयोर्द्वयोः संज्ञाः । अनुनासिकास्तु यवलाः अननुनासिकानामपि न संज्ञाः "भेदका गुणाः" इति प्रमाणात् । वर्णसमाम्नाये तु अननुनासिकानामेव तेषां पाठः । इत्थञ्च 'यवल' सङ्ग्रहाय ग्रहणकसूत्रे अञ्ग्रहणं विहाय अण् ग्रहणं कृतमित्यपि बोध्यम् ।

संहितासञ्ज्ञामाह—**'पर'** इति । सन्निकर्षः =सामीप्यम्, अर्धमात्राधिककालव्यवधानाभावः अर्धमात्रकालव्यवधानस्यावर्जनीयत्वात् इत्याशयेनाह **अतिशयित** इति ।

---

* अयमाशयः । 'अण्' ग्रहणेषु पूर्वणकारेण परणकारेण वेति सन्देहवारणाय 'लण्' सूत्रेऽन्यानुबन्धे कर्त्तव्ये पुनर्णकारानुबन्धादियं परिभाषा ज्ञाप्यते—'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्'। अस्या अर्थः— व्याख्यानतः = व्याख्यानात् विशेषप्रतिपत्तिः = अर्थविशेषस्य ज्ञानम् नहि सन्देहेन = नतु सन्देहमात्रेण अलक्षणम् = अबोधः लक्ष्यतेऽनेनेति लक्षणं ज्ञानसाधनम् अबोधकत्वं नास्तीत्यर्थः ।

**हलोऽनन्तराः संयोगः** ।१।१।७ अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ **सुप्तिङन्तं पदम्** १।४।१४ सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ इति संध्युपयोगि संज्ञाप्रकरणम् ॥ १ ॥

संयोगसञ्ज्ञामाह–'**हल०**' इति । भाष्ये—"अचोऽन्तु" इत्यादौ कुत्वदर्शनेन 'अग्भि' रिति कुत्वेन पठनीयम् तथाप्यसन्देहार्थं तदकरणमिति बोध्यम् । अविद्यमानम् अन्तरं व्यवधानं येषां ते ऽनन्तराः "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोप" (वा० २।२।२४) इति वार्त्तिकेन विद्यमानपदस्य लोपः । तत्र हलश्च हलौ च हल इत्येकशेषः तेन द्वयोरपि संयोगसञ्ज्ञा लभ्यते । "संज्ञा च नाम यतो न लघीय" इति भाष्योक्तेः अल्पाक्षरायां सञ्ज्ञायां कर्त्तव्यायां महासञ्ज्ञाकरणमन्वर्थसञ्ज्ञाज्ञापनार्थम् । संयुज्यन्ते वर्णा अस्मिन् समुदाय इति । तत्फलन्तु समुदायस्यैव संयोगसञ्ज्ञा नतु गुणादिसंज्ञावत् प्रत्येकम् अन्यथा 'सुदृषत् प्रासाद' इत्यत्र पकारसन्निधौ तकारस्य संयोगत्वापत्तौ संयोगान्तलोपः स्यात । अधिकं शब्देन्दुशेखरादौ । 'हल" इति किम्, तितउभ्याम् । अत्र 'तनोतेर्डउ सन्वच्च" इति डउ प्रत्ययः । सन्वद्भावात् द्वित्वम् । "सन्यतः" ( ७ । ४ । ७६ ) इति इत्वञ्च । व्यस्तोच्चारणसामर्थ्याद्गुणाभावः । यदि त्वचोरप्यनन्तरयोः संयोगसञ्ज्ञा स्यात्तर्हि इह "संयोगान्तस्य"—इत्युकारलोपः स्यात् । "अनन्तरा" इति किम् । पनसम् । यदीह सकारमकारयोः संयोगसञ्ज्ञा स्यात्तर्हि 'स्कोः'—इति सलोपः स्यात् इति **तत्त्वबोधिनी** । पदसञ्ज्ञामाह--"**सुप्तिङन्तम्**" इति । "स्वौजस्मौट्" इति सूत्रे 'सु' इत्यारभ्य सुपः पकारेण प्रत्याहारः । सुप्च तिङ्च सुप्तिङौ, तौ अन्ते यस्य तत् सुप्तिङन्तम्। शब्दरूपमिति शब्दशास्त्रप्रस्तावाल्लब्धम् । 'अन्त' शब्दश्च प्रत्येकसम्बन्धी इत्याशयेनाह "**सुबन्तम्**" इत्यादि । शिवम् ॥

इति प्राज्ञचित्तप्रसादिन्यां सञ्ज्ञाप्रकरणम् ।

---

अथाच्संधिः ।

**इको यणचि** । ६ । १ । ७७ । इकः स्थाने यण् स्यादचि संहितायां विषये ॥ सुधी उपास्य इति स्थिते । **तस्मिन्निति निर्दिष्टे पूर्वस्य** । १ । १ । ६६ । सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य ज्ञेयम् । **स्थानेन्तरतमः** । १ । १ । ५० । प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध् य् उपास्य इति जाते ॥ **अनचि च** । ८ । ४ । ४७ । अचः परस्य यरो द्वे वा स्तो नत्वचि । इति धस्य द्वित्वम् ॥ **झलां जश् झशि** । ८ । ४ । ५३ । झलां जश् स्यात् झशि परे । इति पूर्वधस्य दः । **संयोगान्तस्य लोपः** ।८।

२।२३। संयोगान्तं यत्पदं तस्य लोपः स्यात् ॥ **अलोन्त्यस्य** १।१।५२। षष्ठीनिर्दिष्टोन्त्यस्यादेशः स्यात् । इति यलोपे प्राप्ते ॥ **यणः प्रतिषेधो वाच्यः** । सुद्ध्युपास्यः । मद्ध्वरिः । धात्त्रंशः । लाकृतिः । **एचोयवायावः** । ६ । १ । ७८ । एचः क्रमाद् अय् अव् आय् आव् एते स्युरचि ॥ **यथासंख्यमनुदेशः समानाम्** । १ । ३ । १० । समसंबन्धी विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ।

* **इकोयणचि** । 'इक' इति षष्ठी, अतः "षष्ठी स्थाने योगः" ( १।१।४६ ) इति परिभाषया 'स्थाने' इति पदं लब्धम् । स्थानञ्च प्रसङ्गः । "संहितायाम्" ( ६ । १ । ७२ ) इत्यधिकृतम् । अजुपश्लिष्टस्येकः स्थाने यण् स्यादित्यर्थः । **"सुधी"** इति सुष्ठु ध्यायन्तीति सुधियः । 'ध्यै' चिन्तायामिति धातोः "ध्यायतेः सम्प्रसारणञ्च"(वा० ३।२।१७८ इति क्विप्, यकारस्य सम्प्रसारणमिकारः । "सम्प्रसारणाच्च" (६।१।१०८) इति पूर्वरूपम्, ततो "हलश्च" (३।३।१२१) दीर्घे जाते 'सुधीः' इति रूपम् । सु शोधना धीर्येषामिति वा सुधियः । सुधीभिः उपास्यः इति लौकिक विग्रहः । "कर्त्तृकरणे कृता वहुलम्" (२।१।३२) इति सूत्रेण कृत्समासः । "सुपो धातुप्रातिपदिकयोः" (२।४।७१) इति भिसो लुक् । 'सुधी उपास्य' इति स्थिते ' इको०' इति सूत्रेण ' यण् ' प्राप्तौ सत्यां किमीकारस्य उकारे सति स्यात् अथवा उकारस्य ईकारे सति स्यात् संहिताया अविशेषात् इत्याकाङ्क्षायां सूत्रस्य प्राप्तिः "तस्मिन्निति निर्दिष्टे पूर्वस्य" ( १ । १ । ६६ ) इत्यस्य । अत्र 'निर्' इत्यस्य नैरन्तर्यमर्थः दिशिरुच्चारणार्थकः । तेनायमर्थः सम्पन्नः—अचि यण् भवति इत्युक्ते व्यवहिते अव्यवहिते च प्राप्ते 'पूर्वस्य' इति अव्यवहिते पूर्वस्यैवाचो यण् इति नियम्यते । एवं धकारोत्तरवर्त्तिन ईकारस्य सर्वेषां यणां प्राप्तिः, अर्थात् यकारवत् वरलानामपि

---

* ननु—"सुध्युपास्य" इत्यत्रैकमात्रावच्छिन्नेकारेण द्विमात्रावच्छिन्नेकारोपस्थानात् यणसिद्धावपि "बध्वीश" इत्यादौ ह्रस्वोकारेण दीर्घोकाराबोधनात् तदनापत्तिः "उच्चारितः शब्दः प्रत्यायको भवति नानुच्चरित" इति अणुदित्सूत्रभाष्योक्तेरिति चेन्न प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाया अभ्युपगमात् तेनेक्पदेन वाच्यो ह्रस्वोकारादिः, तेन वाच्यो दीर्घोकारादिः, तत्र च लक्षणा वृत्तिरिति भावः । परन्त्विमौ चोद्यपरिहारौ व्यक्तिपक्षमाश्रित्यैव, आकृतिपक्षे तु तत्तदाकृत्युपस्थानान्न दोष इति सिद्धान्तः । लक्षणायां प्रमाणन्तु—"दीर्घाज्जसि च" ( ६।१।१०५ ) "त्वादिभ्यः" ( ८।२।४४ ) इत्यादिनिर्देश एव । एवञ्च इक् पदेन षट्षष्टिर्गृह्यन्ते, यण्पदेन चतुर्णां ग्रहणम्, भाव्यमानस्याणः सवर्णाग्राहकत्वात् । अतएव न यथासङ्ख्यसम्भवोऽपि ।

प्राप्तिः यण्त्वाविशेषात् अत आह--"स्थानेन्तरतमः" (१।१।५०) इति। इह प्रसङ्गः शास्त्रप्राप्तिः। एवञ्च--तालुस्थानकस्य ईकारस्य स्थाने तालुस्थानकयकार एव नतु वरलाः, तेषां यण्त्वाऽविशेषेऽपि स्थानप्रयुक्तात्यन्तसादृश्याभावात् (वरलानां भिन्न-स्थानकत्वादिति भावः) इत्थम्-* 'सु ध् य् उपास्य' इति स्थितिर्जाता। ततः सूत्रं प्राप्नोति--†"**अनचि च**" (८।४।४७) इति। "यरोऽनुनासिकेऽनुनासिको वा" (८।४।४५) इति सूत्रात् 'यर' इति षष्ठ्यन्तं पदमनुवर्त्तते। "अचोरहाभ्यां द्वे" (८।४।४६११) इत्यतः 'अच' इति पञ्चम्यन्तं द्वे' इति च पदमनुवर्त्तते इत्याशयेन सूत्रं व्याख्याति "**अचः परस्य**" इत्यादि। इति धस्य द्वित्वम् अर्थात् उक्तेन सूत्रेण धकारस्य द्विरुच्चारणं कर्त्तव्यम् धकारस्य उकारादचः परत्वात् अच्परकत्वाभावाच्च। एवं 'सु ध् ध् य् उपास्य' इति स्थितम्। ततः सूत्रं प्रवर्त्तते "**झलां जश् झशि**" (८।४।५३) इति। '**इति**' इति। इति प्रथमधकारस्य 'दः' = दकारोजातः स्थानत आन्तर्यादित्यर्थः। एवम्—'सु द् ध् य् उपास्य' इति जाते सति "संयोगान्तस्य लोपः" (८।२।२३) संयोगः अन्तो यस्य संयोगान्तः तस्य संयोगान्तस्य पदस्य लोपः इत्यर्थः (संयोगसञ्ज्ञा च "हलोनन्तराः संयोग" इति सूत्रेण ज्ञेया) इति कृत्स्नस्य पदस्य लोपप्रसक्तौ सूत्रमाह—"**अलोन्त्यस्य**" (१।१।५२) इति। स्थानषष्ठीनिर्दिष्टस्य य आदेश उच्यते सोऽन्त्यस्यालः स्थाने भवतीति सूत्रार्थः। अनेन सूत्रेण य् इत्यस्य लोपे प्राप्ते वार्त्तिककार आह—"यणः प्रतिषेधो वाच्य" इति। यणः संयोगान्तलोपप्रतिषेधः स्यादित्यर्थः। ततः "अज्झीनं परेण संयोज्यम्" इति नियमेन 'द् ध् य्' एते त्रयो हलः परवर्त्तिनि उकारे प्रविष्टाः। ततश्चैवं—'सुद्ध्युपास्य' इति रूपं सिद्धम्। द्वित्वाभावे तु—'सुध्युपास्य' इति जातम्। एवमेव—मद्ध्वरिः। मधुर्नाम कश्चित्

---

*न अच् अनच् तस्मिन् 'अनचि' इति पर्युदासो नास्ति। तथासति-"**नञिव युक्तमन्यसदृशे तथाह्यर्थगतिः**" इति न्यायेन अज्भिन्ने ऽल्त्वेनाऽच्सदृशे हलि इत्यर्थः स्यात्, एवञ्च हलि इत्येव पठेत् रामात् इत्यादौ च अवसानेषु च द्वित्वं न स्यात्। अतः "अचि न भवती" त्यसमर्थसमासमाश्रित्य प्रतिषेधपरं योजनीयमित्याशयेनैव 'अचः परस्ये' त्यादि व्याख्याति। नञ्युक्तम्, इवयुक्तञ्च यत्किञ्चिदिह दृश्यते तत्र तस्माद्भिन्ने तत्सदृशे चाधिकरणे द्रव्ये कार्यं विज्ञायते, हि = यतः तथाऽर्थगतिरस्ति नहि "अब्राह्मणमानय" इत्युक्ते लोष्टमानीय कृती भवति। नञिवार्थानिष्ठविशेष्यतानिरूपितप्रकारतावदर्थप्रतिपादकं यच्छब्दरूपं तत्स्वाभिधेयातिरिक्ते सदृशे (द्रव्ये) ऽधिकरणे वर्त्तत इति परिभाषार्थः। लोकन्यायासिद्धेयम्।

†"न भूसुधियोः" (६।१।१२७) इति निषेधस्तु न प्रवर्त्तते। तस्य अजादौ सुपि विधानात्। "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" (६।१।१२७) इत्यपि न, न समासे इति तन्निषेधात्।

दैत्यविशेषः तस्य अरिः शत्रुः। विष्णुरित्यर्थः। "मधु अरिः" इत्यत्र "इकोयणचि" इति सूत्रेण यणसम्बन्धिषु चतुर्षु वर्णेषु प्राप्तेषु "स्थानेऽन्तरतम" इति परिभाषया धकारोत्तरवर्त्तिन उकारस्य ओष्ठस्थानवतः स्थाने स्थानत आन्तर्यात् ओष्ठस्थानको वकार एव जातः। यथासङ्ख्यपरिभाषया वा। ततः "अनाचि च" इत्यनेन धस्य द्वित्वे "झलां जश झशि" इति पूर्वस्य धकारस्य दकारः। ततः संयोगान्तलोपे प्राप्ते अलोन्त्यपरिभाषया ऽन्त्यस्य वकारस्य लोपे नियमिते "यणः प्रतिषेधोवाच्य" इति वार्त्तिकेन लोपाभावे "अज्झीनं परेण संयोज्यम्" इति नियमेन द् ध् व् इति एते त्रय एव अरिः इत्यस्य अकारेण मिलिता यदा, तदा "मद्ध्वरिः" इति भवति। **'धात्रंश'** इति। धातृ अंश इति स्थिते इको० इति सूत्रेण तकारोत्तरवर्त्तिन ऋकारस्य मूर्धन्यस्य स्थानत आन्तर्यात् यणन्तर्गतो रेफ एव मूर्धन्य आदेशः तेन "धात्र् अंश" इति जातम्। ततः "अनचि च" इति सूत्रेण तकारस्य द्वित्वे पूर्ववत् संयोगे च कृते *धात्त्रंश इत्येकं रूपम्। द्वित्वाभावपक्षे तु धात्रंश इति रूपद्वयं ज्ञेयम्। **लाकृतिः**। लृवर्णस्य आकृतिरिव आकृतिर्यस्येति विग्रहः ( लाकृतिर्नवमोऽङ्कः ) इको० इति सूत्रेण यणि प्राप्ते स्थानत आन्तर्यात् दन्त्यस्य लृकारस्य स्थाने यणन्तःपाती दन्त्यो लकार एवादेशः। ततः "ल् आकृतिः" इति जाते सति 'अज्झीन' मित्यनेन परयोगे कृते "लाकृतिः" इतिरूपं सिद्धम्। एवमेव दध्यानय, त्र्यम्बकः, शम्भ्वित्ति, पित्रंशः, लित् इत्यादयः प्रयोगाः साधनीयाः।

**एचोऽयवायावः**। अय् च अव् च आय् च आव् चेति विग्रहः। "इकोयण चि" ( ६।१।७७ ) इत्यतः 'अचि' इति पदमनुवर्त्तते। 'एचः' इति स्थानिनिर्देशः। **"यथासङ्ख्यम"** इति। अनुदिश्यत इति अनुदेशः। पश्चादुच्चार्यत इत्यर्थः। समानामिति सम्बन्धसामान्ये षष्ठी। अतस्तदाह—'समसम्बन्धी विधि' रिति। अथोदाहरणानि—हरये इत्यादीनि। यथासङ्ख्यपरिभाषायाः विधिसूत्रेण सहैकवाक्यतायां कृतायाम्—एकारस्य अय्, ओकारस्य अव्, ऐकारस्य आय्, औकारस्य आव् आदेशः स्यादित्यर्थो लभ्यते इतिभावः। तत्र 'हरे ए' इति स्थिते "एचो०" इति एकारस्य अयादिषु चतुर्ष्वादेशेषु प्राप्तेषु कस्य स्थाने कः स्यात् इत्याकाङ्क्षायाम्--"यथासङ्ख्यमनुदेशः समानाम्" इति परिभाषायोगेनात्र एकारस्य स्थाने 'अय्' एवादेशः. ततः 'हर् अय् ए' इति जाते परयोगे च कृते "हरये" इति रूपं सिद्धं भवति। एवमेव 'विष्णो ए' इत्यत्र 'अव्' आदेशे "विष्णवे"। 'नै अकः' इत्यत्र 'आय्' आदेशे "नायकः"। 'पौ अकः'

---

* अत्र रेफस्य द्वित्वं न। द्वित्वप्रकरणे 'रहाभ्याम्' इति साक्षात् श्रुतेन निमित्तभावेन रेफस्य कार्यित्वाभावात्। 'सुद्ध्युपास्य' इत्यादौ तु स्थानित्वेन निमित्तत्वमिको न बाध्यते, "तस्मादित्युत्तरस्य" (१।१।६७) "वाग्मृतुपित्रुषसः" ( ४।२।३१ ) इत्यादि निर्देशात् ज्ञापकात्। तकारस्य तु द्वित्वं भवत्येव तच्च वेत्यतो रूपद्वयमिति **तत्त्वबोधिनी**।

इत्यत्र 'आव्' आदेशे "पावक" इति यथायथं ज्ञेयम् । एवम्--नयनम्, भवनम्, रायौ, नावौ इत्यादीनि रूपाणि साधनीयानि ।

**वान्तो यिप्रत्यये** ।६।१।७९। यादौ प्रत्यये परे ओदौतोरवावौ स्तः । गव्यम् । नाव्यम् ॥ **अध्वपरिमाणे च** ।। गव्यूतिः ॥ **धातोस्तन्निमित्तस्यैव** । ६ । १ । ८० । यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य । लव्यम् । अवश्यलाव्यम् । तन्निमित्तस्य किम् । ओयते । औयत ॥ **क्षय्यजय्यौ शक्यार्थे** । ६ । १।८१। यान्तादेशनिपातनार्थमिदम् ॥ क्षय्यम् । जय्यम् । शक्यार्थे किम् । क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः ॥ **क्रय्यस्तदर्थे** । ६ । १ । ८२ । क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः ॥ **अदेङ्गुणः** । १ । १ । २ । अदेङ् च गुणसंज्ञः स्यात् । **तपरस्तत्कालस्य** । १ । १ । ७० । तपरस्तात्परो वा उच्चार्यमाणो वर्णः समकालस्यैव संज्ञः स्यात् ॥ **आद्गुणः** ६ । १ । ८७ । अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः । रमेशः । गङ्गोदकम् ॥ **उपदेशेऽजनुनासिक इत्** ।१।३।२। उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥ **उरण्रपरः** १ । १ । ५१ । ऋ इति त्रिंशतः संज्ञेत्युक्तम् तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥

**वान्तो यि प्रत्यये** । 'यि' इति सप्तम्यन्तं तेन * "यस्मिन्प्रत्ययविधिस्तदादावल्ग्रहणे" इति वार्त्तिकेन 'यकारादौ' इत्यर्थो लभ्यते । 'वः' वकारोऽन्ते यस्य स वान्तः । पूर्वसूत्रानुवृत्तः 'अव्' आदेशः 'आव्' आदेशश्च विवक्षितः । ततश्चायमर्थः सम्पद्यते--'योऽयमेचः स्थाने वान्तादेशः ओकारस्य अव् औकारस्य आव् स यकारादौ प्रत्यये परे भवति' इत्याशयेन यादौ प्रत्यये परे ओदौतोरवावौ स्त इत्येवं व्याख्याति । उदाहरणं गव्यम् नाव्यम् इति । तत्र--"गोपयसोर्यत्" (४ ३।१६०) इति सूत्रेण

---

* यस्मिन्निति सप्तम्यन्तं विवक्षितम् । 'अल्' इति वर्णपर्यायः । सप्तम्यन्ते वर्णग्रहणे विशेषणीभूते यो विधिः स तद्वर्णादौ बोध्यः । "येन विधिस्तदन्तस्य" (१।१।७२) इत्यस्यापवादः ।

'गो' शब्दाद् विकारार्थे तद्धितो 'यत्' प्रत्ययः। 'गो यम्' इति स्थिते 'वान्तोयि०' इति सूत्रेण गकारोत्तरवर्त्तिन ओकारस्य 'अव्' आदेशः 'यम्' इत्यस्य यादिप्रत्ययत्वेन परवार्त्तित्वात्। ततः परयोगे "गव्यम्" इति रूपम्। गव्यं=दधिदुग्धपायसादि। नावा तार्यं 'नाव्यम्'। नौवयोधर्मविषमूलसीतातुलाभ्य०' (४।४।९१) इति सूत्रेण तार्यार्थे यत्।'नौ यम्' इति स्थिते 'वान्तो यि०' इति नकारोत्तरवर्त्तिन औकारस्य 'आव्' आदेशः। परसंयोगश्च। "नाव्यम्" इति सिद्धम्। सूत्रे 'वान्त' इति किम्। रायमिच्छति रैयति। 'यी'ति किम्। गोभ्याम्। नौभ्याम्। 'प्रत्यय' इति किम्। गोयानम्। नौयानम्। वृत्तौ 'औदोतो' रिति व्याख्यातम्—तत्र पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णातत्वादिति बोध्यम्। इदन्तु बोध्यम्—'गव्यं नाव्यम्' इत्यत्र '**लोपः शाकल्यस्य**' (८।३।१९ इति '**हलि सर्वेषाम्**' (८।३।२२) इति च वकारस्य लोपो न भवति तयोः पदान्तविषयत्वात् इह च भत्वेन पदसञ्ज्ञाबाधात्।

अध्वपरिमाणे च। वार्त्तिकमिदम्। अध्वा=मार्गः तस्य परिमाणे=परिमाणविशेषे गम्येऽपि यूतिशब्दे परे 'गो'शब्दावयवस्य ओकारस्य वान्तादेशः अर्थात् 'अव्' आदेशः इत्यस्य उपसङ्ख्यानं कर्त्तव्यमित्यर्थः। लोकेऽपि 'गव्यूति' प्रयोगसाधनार्थमिदम्। 'गो यूतिः' इति स्थिते पूर्ववत् अनेन वार्त्तिकेन अवादेशे परयोगे च रूपसिद्धिर्ज्ञेया। 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः। 'यूति' रिति **ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च** (३।३।९७)इत्यनेन निपातनात्सिद्धम्। मार्गविशेषरूपार्थाभावे (गवां मिश्रीभावे) तु गोयूति रित्येव भवति। **धातोस्तन्निमित्त०।** अत्र—'एच" इति "वान्तो यि प्रत्यय" इति चानुवर्त्तते। सः यादिप्रत्ययो निमित्तं यस्य सः "तन्निमित्तः"। यादिप्रत्यये परे धातोरेचो भवन् वान्तादेशः यादिप्रत्ययनिमित्तस्यैव एचो भवति नान्यस्येति सूत्रार्थः तदाह—"**यादौ प्रत्यये**" इत्यादि। उदाहरति—लव्यम्, अवश्यलाव्यम् इति। "लूञ्" छेदने। अस्मात् धातोः **अचो यत्** (३।१।९७) अनेन 'यत्' प्रत्ययः। **सार्वधातुकार्धधातुकयोः** (७।३।८४) इत्यनेन 'लू' इत्यूकारस्य ओकारो गुणः। 'लो यम्' इति स्थिते अनेन सूत्रेण तस्य ओकारस्य धात्ववयवत्वात् यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेशः। अवस्यलाव्यम्। **ओरावश्यके** (३।१।११२) इति सूत्रेण 'लूञ्' धातोः 'यत्' प्रत्ययः। ततः **अचोञ्णिति** (६।२।११५) इत्यूकारस्य णिति परतः औकारो वृद्धिः। 'अवस्यम्' इत्यव्ययम्। मयूरव्यंसकादिना समासः। 'लुम्पेदस्यमः कृत्ये॰' इति वार्तिकेण 'अवश्यम्' इत्यन्तस्य मस्य लोपः। "अवस्यलौ यम्" इत्यवस्थायां औकारस्य धात्ववयत्वात् यादिप्रत्ययनिमित्तकत्वाच्च 'आव्' इत्याकारो वान्तादेशः। एवं सति सिद्धम्—'अवस्यलाव्यम्' इति। लव्यम्, अवश्यलाव्यम्—इत्यत्र "वान्तो यि०' इत्यनेनैवं वान्तादेशः सिद्ध इत्यतो नियमविधेः प्रयोजनं दर्शयितुमाह—"तन्निमित्तस्य किम्" इति

**ओयते** इति। 'वेञ्' तन्तुसन्ताने। अस्मात् आङ्पूर्वात् कर्मणि लट्। **भावकर्मणोः** (१।३।१३) इत्यात्मने पदम्। **सार्वधातुके यक्** (३।१।६७) इति यक्। **वचिस्वपियजादीनां किति** (६।१।१५) इति वकारस्य सम्प्रसारणमुकारः। **सम्प्रसारणाच्च** (६।१।१०८) इति एकारस्य पूर्वरूपम्। **अकृत्सार्वधातुकयोः** (७।४।२५) इत्युकारस्य दीर्घः। आङा सह ऊकारस्य **आद्गुणः** (६।१।८७) इत्योकारो गुणः। अत्र—आद्गुणस्य परादिवद्भावेन धातोरेकत्वेऽपि (धात्ववयवत्वेऽपि) यादिप्रत्ययनिमित्तकत्वं नास्तीति न वान्तादेशः। नियमशरीराभावे तु अत्रापि वान्तो यि० इत्यस्य प्रवृत्तौ सत्यां "अव्यते" इत्यनिष्टं रूपमापद्येत अत उक्तं तन्निमित्तस्यैवेति। नन्वत्र—आङुपसर्गधात्वोः 'आद्गुण' इति ओकारगुणरूप एकादेशः पदद्वयापेक्षत्वेन बहिरङ्गः, सच अन्तरङ्गे वान्तादेशे कर्त्तव्येऽसिद्ध इत्योकाराभावात् वान्तादेशप्रसक्तिरेव नास्तीति कुतो नियमावश्यकता इत्यस्वरसादाह—'औयत' इति। अत्र—'वेञः' कर्मणि लङ्। यगादि पूर्ववत्। **आडजादीनाम्** (६।४।७२) इत्याट्। **आटश्च** (६।१।९०) इति वृद्धिः औकारः। तस्य वृद्धिरूपस्यौकारस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावात् न वान्तादेशः। अन्यथा "आव्यत" इत्यनिष्टं रूपं स्यात्। पूर्वप्रयोजनाभावेऽपि एतदर्थमावश्यकं नियमशरीरम्। अत्र—आडागममाश्रित्य जाता वृद्धिः न पदद्वयसम्बन्धिवर्णनिमित्तिकेति * भावः।

**क्षय्यजय्यौ०**। शक्यार्थे क्षय्यजय्यशब्दौ निपातनात् सिद्धौ वाचकतया वर्त्तेते इत्यर्थः। विधेयं कार्यं दर्शयति—**यान्तादेश०** इति। प्रातिस्विकविधिं विना सिद्धप्रक्रियस्य शब्दस्वरूपस्य निर्देशो **निपातनम्**। 'क्षि' क्षये। 'जि' जये। अनयोर्धात्वोरेचः 'अय्' इति यान्तादेशो निपातनात्। **कृत्याः** (३।१।९५) इत्यधिकारे 'क्षि धातोः 'अचोयत्' (३।१।९७) इति 'यत्' प्रत्ययः **'शकि लिङ् च'** (३।३। १७२) इति शक्यार्थः। इकारस्य गुण एकारः तस्य अच्परकत्वाभावादप्राप्तः 'अय्' इत्यादेशः निपातनात्साधित इति सारः। एवमेव 'जय्यम्'। शक्यार्थे उक्तप्रयोगसाधनस्य †फलं दर्शयति—'शक्यार्थे किम्' इति। **क्षेतुम्** इति **क्षेयमित्यादौ**—**'अर्हे कृत्यतृचश्च'** इत्यर्हार्थे यत्। नतु शक्यार्थः। अतो न यान्तादेश इति भावः। **क्रय्यस्तदर्थे**। इदमपि यान्तादेशनिपातनार्थम्। **'तस्मै'** इति। 'क्रय्य' शब्दे यः 'क्रीञ्' धातुः यत्प्रत्ययप्रकृतिभूतः तस्य योऽर्थः अभिधेयः द्रव्यविनिमयस्वरूपः स प्रकृत्यर्थ इह तच्छब्देन गृहीतः। तस्मै इदम् तदर्थं क्रयार्थं वस्तु। एवं सति—क्रयार्थे द्रव्ये गम्ये 'क्रीञ्' धातोर्यादौ प्रत्यये परे यान्तादेशः स्यादिति फलितम्। 'क्रय्य' पदार्थं दर्शयति—**'क्रेतार'** इति। 'क्रीञः' कर्मणि **अचो यत्** (३।१।९७) इति यत् **सार्वधातु०** इति

---

* **सिद्धे सत्यारम्भो नियमार्थ** इति नियमेन नियमविधिरवश्यं स्वीकर्त्तव्य इति भावभावः। †प्रत्युदाहरणेन पर्यवसितमर्थम्।

गुणे एकारे अच्परकत्वाभावात् अनेन अयादेशो निपात्यते। **क्रयमन्यत्** इति। अन्यत् = गृहादौ भोजनाशनादि व्यवहारसौकर्याय सञ्चितं धान्यादि क्रेयम्। अत्रापि 'अर्हे०' इत्यनेन यत्। अयादेशश्च न। गुणसञ्ज्ञामाह—**अदेङ्गुण** इति। अच्च एङ् च इति समाहारद्वन्द्वः। **तपरस्तत्कालस्य** अत्र 'तपर' इति पदमावर्त्तनीयम्। '**अतोगुणे**' (६।१।९७) इत्यत्र तपरकरणात् बहुव्रीहिसमासं '**रहिवहोराद-वर्णस्य**' (६।३।११२) इत्यत्र वर्णग्रहणेन व्याख्यानेन च पञ्चमीतत्पुरुषं चाश्रित्याह—'तः परो यस्मात्' इत्यादि*। 'अणुदित्०' इति सूत्रात् 'अण्' इत्यनुवर्त्तते। तस्य तपरत्वेनोच्चार्यमाणस्य काल इव कालो यस्य स 'तत्कालः'। इत्थञ्च—अत्, इत्, इत्याद्यात्मकः अण् उच्चार्यमाणः स्वीयकालसदृशकालस्य संज्ञा स्यादिति फलितोऽर्थः। 'सिद्धे सत्यारम्भो नियमार्थ' इति न्यायेन नियमार्थं सूत्रमेतत्। अण् तपरश्चेत् तत्कालस्यैव सवर्णस्य ग्राहकः, † नत्वतत्कालस्येति। **आद्गुणः**। 'आत्' इति पञ्चमी। नत्वत्र तपरकरणम्। "**एकः पूर्वपरयोः**" (६।१।८४) इत्यधिकारः प्रवर्त्तते। एतत्सर्वं मत्वा सूत्रं व्याचष्टे—'अवर्णादची' त्यादि। 'उप इन्द्र' इति स्थिते 'आद्गुण' इत्यनेन यकारादुत्तरवर्त्तिन अकारस्य 'इन्द्र' इत्यादिवर्त्तिन इकारस्येति द्वयोः पूर्वपरयोः स्थाने गुणसञ्ज्ञकानां त्रयाणां वर्णानां प्राप्तौ सत्यां यकारादकारस्य तत इकारस्य च पूर्वपरयोः कण्ठतालुस्थानयोः तादृश एव एकः एकारो गुणः आन्तर्यात्। ततः "उप् एन्द्रः" इति जाते परयोगे "उपेन्द्र" इति सिद्धम्। उपेन्द्रो विष्णुः। 'उपेन्द्र इन्द्रावरज' इत्यमरः। प्रत्याहारेषु स्ववाच्यवाच्येषु कथितां लक्षणां स्मारयितुं दीर्घविषयकमुदाहरणमाह—**रमेश** इति। 'रमा ईश' इति स्थिते आकारस्य ईकारस्य च स्थाने पूर्ववदेक एकारो गुणादेशः ततः सिद्धं भवति "रमेश" इति। विष्णुरेव। एवमेव 'गङ्गा उदकम्' इति स्थिते आकारस्य उकारस्य च द्वयोः कण्ठोष्ठ-स्थानयोः पूर्वपरयोः स्थाने एकस्तादृश ओकारो गुणादेशः। गङ्गोदकम्।

**उपदेशे०**। अच इत्सञ्ज्ञाविधायकं सूत्रमिदम्। सूत्रे अजिति कुत्वाभाव आर्षः। स्पष्टमन्यत्। कतिपयानामेव वर्णानां शास्त्रेऽनुनासिकत्वेनोपलम्भात् इतरेषाम-नुपलम्भात् तत्तत्प्रयोगसाधुतायै आनुनासिक्यव्यवस्थां दर्शयति—**प्रतिज्ञे**ति। प्रतिज्ञायते ऽभ्युपगम्यते इति 'प्रतिज्ञा'। '**स्त्रियाम्**' (४।१।३) इत्यधिकारे '**आतश्चोप-सर्गे**' (३।३।१०६) इति कर्मणि अङ्। अनुनासिकस्य भावः आनुनासिक्यम्।

---

* वर्णग्रहणे तु तत्सामर्थ्यादत्वावच्छिन्नसर्ववर्णग्रहणबोधनेन तपरसूत्राप्रवृत्तिः। आद्योदाहरणं "अतोभिस०" (७।१।९) इति। अन्त्योदाहरणं "वृद्धिरादैच्" (१।१।१) इति **नागेशः**।

† अतत्कालनिवृत्त्यात्मकपरिसङ्ख्यार्थमिदं सूत्रम्। वैयाकरणानां नये परिसङ्ख्यैव नियमः।

**गुणवचनब्राह्मणादिभ्यः कर्मणि च** (५।१।२४) इति ष्यञ्। प्रतिज्ञा आनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः, पाणिनीयाः = पाणिनिशिष्या इत्यर्थः। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक्स्थित इत्यनुमीयते इति भावः। शिष्यपरम्परया शास्त्रकृतां तथाविधमुच्चारणं इदानीन्तनानां सुगममिति परः सारः।

एवञ्चानेन सूत्रेण "लण्" सूत्रस्थाकारस्य अनुनासिकत्वप्रतिज्ञानात "इत्" संज्ञा। अनया यज्जातं तदाह—'**लणसूत्रस्थे**'ति। लणसूत्रे तिष्ठतीति लणसूत्रस्थः। स चासौ वर्णश्चेति लणसूत्रस्थवर्णः तेन सहोच्चार्यमाणो रेफः 'र' इत्येवमाकारो वर्णद्वयात्मकः शब्दो रेफलकारयोः संज्ञा इति ज्ञेयम्। अर्थात् 'र' इत्याकारेण रस्य लस्य चोभयोरेव यथालक्ष्यं ग्रहणं भवति। 'कृष्णर्द्धि'रित्यादिस्थले गुणव्यवस्थां दर्शयितुं सूत्रान्तरमाह—**उरण्रपर** इति। 'उः' इति ऋ इत्यस्य षष्ठ्येकवचनम्। 'स्थाने' इति षष्ठ्या लब्धम्। तत्स्थाने = अणुदित्सूत्रगृहीतत्रिंशत्संज्ञकऋकारस्थाने योऽण् स रपरः= दर्शिताकारः 'र' इति प्रत्याहारात्मकः परो यस्य स तादृश एव प्रवर्त्तते, अर्थात् रेफशिरस्कः लकारशिरस्कश्च विधातव्य इत्यर्थो लभ्यते। अनुवादे "षष्ठी स्थानेयोगा" (१।१४६) इति परिभाषाया अनुपस्थितावपि स्थानेग्रहणं ततोऽनुवर्त्तते इत्याशयेनाह—**तत्स्थानेयोऽणिति**। "स्थानेन्तरतमः" (१।१।५०) इत्यतोऽपि स्थानेग्रहणमिहानुवर्त्तते तेन प्रसङ्गावस्थायामेवाण् रपरो भवति। तदेतद्व्याचष्टे—**रपरः सन्नेव प्रवर्त्तते** इति। उदाहरति—कृष्णर्द्धिः तवल्कार, इति। 'कृष्ण ऋद्धिः' इति स्थिते **आद्गुणः** (६।१।८७) इति प्राप्तम्। अत्र णकारोत्तरवर्त्ती अकारः तत्परवर्ती ऋकारश्च द्वौ स्थानिनौ। तयोः अकारः, एकारः ओकारश्चेति त्रयोऽपि गुणाः प्रसक्ताः। अकारेण स्थानिना सहैव त्रयाणामपि कण्ठस्थानसाम्यात्, ऋकारेण कस्यापि स्थानं न समम्, तस्य मूर्धस्थानकत्वात्। एवमेव 'तव लृकार' इत्यत्रापि त्रयो गुणाः प्रसक्ताः पूर्ववत् लृकारेण कस्यापि आदेशिनो न साम्यम्, तत्र कतमेन गुणेन भाव्यम इत्यपेक्षायां सूत्रं प्रवर्त्तते "उरण्रपर" इति। एवञ्च 'अ ऋ'। इति द्वयोः कण्ठ्यमूर्धन्ययोः स्थानिनोः तादृश एव रेफशिरस्कोऽर् जातः। 'अ लृ' इति द्वयोः कण्ठ्यदन्त्ययोः स्थानिनोः तादृश एव लकारशिरस्कः 'अल्' जातः। ततश्च यथायोगं सिद्धं भवति 'कृष्णर्द्धिः' 'तवल्कार' इति रूपद्वयम्। नचात्र-एकार ओकारश्च कथं न रपरौ स्यातामिति शङ्कनीयम् पूर्वेणैव णकारेणात्र 'अण्' ग्रहणात्। प्रशास्तृणामित्यादिनिर्देशप्रामाण्यादिति **बालमनोरमा**। उः किम्। "ईद्यति" (६।४।६५) गेयम्। देयम्। अण् किम्। रीङादीनां रपरत्वं माभूत्। "रीङृतः" (७।४।२७) मात्रीयति। रिङ्। क्रियते॥

**लोपः शाकल्यस्य** । ८ । ३ । १९ । अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे ॥ **पूर्वत्रासिद्धम्** । ८ । २ । १ । सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह । विष्ण इह । हरयिह विष्णविह । **वृद्धिरादैच्** । १ । १ । १ । आदैच्च वृद्धिसंज्ञः स्यात् ॥ **वृद्धिरेचि** । ६ । १ । ८८ । आदेचि परे वृद्धिरेकादेशः । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यं । कृष्णौत्कण्ठ्यम् ॥ **एत्येधत्यूठ्सु** । ६ । १ । ८९ । अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् ॥ उपेतः । मा भवान्प्रेदिधत् ॥ **स्वादीरेरिणोः** । स्वैरं । स्वैरी । स्वैरिणी ॥ **अक्षादूहिन्यामुपसंख्यानम्** । अक्षौहिणी सेना । **प्रादूहोढोढ्येषैष्येषु** । प्रौहः प्रौढः प्रौढिः । प्रैषः । प्रैष्यः ॥ **ऋते च तृतीयासमासे** । सुखेन ऋतः सुखार्तः । तृतीयेति किम् । परमर्त्तः ॥ **प्रवत्सतरकम्बलवसनार्णदशानामृणे** । प्रार्णमित्यादि ॥ **उपसर्गाः क्रियायोगे** । १ । ४ । ५९ । प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र । परा । अप । सम् । अनु । अव ॥ निस् । निर् । दुस् । दुर । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । एते प्रादयः । **भूवादयो धातवः** १ । ३ । १ । क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ **उपसर्गादृति धातौ** । ६ । १ । ९१ । अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्छति ॥

**लोपः शाकल्यस्य** । 'भो भगो०' ( ८ । ३ । १७ ) इत्यतः 'अपूर्वस्य' इति 'अशि' इति चानुवर्त्तते । 'व्योर्लघुप्रयत्नतरः—( ८ । ३ । १८ ) इत्यतः 'व्योः' इत्यनुवर्त्तनीयम । 'अपूर्वस्य' इति व्योरित्यस्य विशेषणम् । अः=अवर्णः पूर्वः यस्मात् स अपूर्वः । तस्य अपूर्वस्य । वस्य मस्य चेति प्रत्येकमेकवचनत्वेनान्वयनीयम् । 'पदस्य' ( ८।१।१६ ) इत्यधिकृतम् । तच्च अवर्णपूर्वकाभ्यां यकारवकाराभ्यां विशेष्यते, विशेषणत्वाच्च तदन्तविधिः । ततश्च 'अवर्णपूर्वो यः यकारो वकारश्च तदन्तपदस्य लोपः स्यात् अशि प्रत्याहारे परे' इति सूत्रार्थः सम्पद्यते । एतदाशयेनैव वृत्तौ—'अवर्णपूर्वयो' रित्याद्युक्तम् । **पूर्वत्रासिद्धम्** । अष्टाध्याय्या अष्टमाध्याये द्वितीयपादस्येदमादिमं सूत्रम् । इतः पूर्वं सकलः सूत्रसमुदायः 'सपादसप्ताध्यायी' इत्युच्यते, ततः अग्रेतनः

सूत्रसमुदायः 'त्रिपादी' इति पदेन व्यवह्रियते। * 'अधिकारोऽयम्' इति। अधिक्रियते उपरितनसूत्रसमुदायशेषत्वेन पठ्यत इत्यधिकारः। कर्मणि घञ्। इदं सूत्रम्—अग्रेतनसूत्रेषु अनुवृत्त्यर्थमेव नतु स्वतन्त्रविधिरित्यर्थः। अत्र शास्त्रासिद्धत्वपक्ष एव मुख्यः, प्रक्रियाकौमुद्याद्युक्तः कार्यासिद्धत्वपक्षश्चाप्रामाणिक एव। कार्यासिद्धत्वं पूर्वपक्षत्वेनोत्थाप्य शास्त्रासिद्धत्वस्यैवास्य सूत्रस्य भाष्ये "**असिद्धवदत्राभात्**" (६।४।२२) इति सूत्रभाष्ये च सिद्धान्तितत्वात्। शब्देन्दुशेखरादौ त्वस्य बहु प्रपञ्चो, बालबुद्धिव्यामोहकरत्वादिह नोपात्तः। हर इह। हरयिह। विष्ण इह। विष्णविह। तत्र 'हरे इह' इत्यवस्थायाम् 'एचोऽयवायावः' इति सूत्रेण यथासङ्ख्यत्वात् रकारोत्तरवर्त्तिन एकारस्य 'अय्' इत्यादेशे कृते 'हर् अय् इह' इति जातम्। ततः 'लोपः शाकल्यस्य' इति सूत्रेण पक्षे (शाकल्यमते) अवर्णपूर्वस्य 'अय्' इति यस्य लोपे कृते "हर इह" इति जाते 'आद्गुणः' (६।१।८७) इति योगेन रेफोत्तरवर्त्तिन अकारस्य 'इह' इत्यादिवर्त्तिन इकारस्य चोभयोः पूर्वपरयोः स्थाने एकाररूपगुणादेशे लब्धे 'पूर्वत्रासिद्धम्' इति योगेन सपादसप्ताध्यायीस्थस्य 'आद्गुण' (६।१।८७) इति सूत्रस्य प्राप्तावसरे त्रिपादीस्थस्य 'लोपःशाकल्यस्य' (८।३।१९) इति योगस्य असिद्धत्वात् रेफोत्तरवर्त्त्यकारस्य, मध्ये यकारस्य विद्यमानत्वात् 'आद्गुण' इति सूत्रस्य प्राप्तिरेव न भवति, अर्थात् दर्शितरीत्या लोपशास्त्रस्य असिद्धत्वान्न स्वरसन्धिः। व्याकरणान्तरे तु—"लोपशि पुनर्न सन्धिः" इत्युक्तम्। † अन्यत्र 'लुप्करणसामर्थ्यात् न सन्धि' रित्यभिहितम्। 'य्' लोपाभाव पक्षे तु—'अज्झीनम्' इति परयोगे 'हरयिह' इति रूपं ज्ञेयम्। एवमेव 'विष्णो इह' इति स्थिते अवादेशे लोपःशाकल्येति पाक्षिके लोपे 'आद्गुण' इति पूर्वपरयोरेके एकारगुणादेशे प्राप्ते पूर्वत्रासिद्धमिति सूत्रेण लोपः शाकल्यस्येति योगस्यासिद्धत्वात् तत्र वकारलोपाभावं मत्वा नाद्गुणप्राप्तिरिति विज्ञेयम्।

**वृद्धिरादैच्**। वृद्धिसञ्ज्ञासूत्रमिदम्। आच ऐच इतीतरेतरयोगद्वन्द्वः। सौत्रमेकत्वम्। 'आदैच् वृद्धि' रिति सूत्रयितव्ये माङ्गलिक आचार्यः प्रथमं 'वृद्धि' शब्दं प्रयुङ्क्ते। **वृद्धिरेचि**। 'आद्गुण' इत्यतः 'आत्' पञ्चम्यन्तमनुवर्त्तते। 'एकः पूर्वपरयो'

---

* यद्ययं स्वतन्त्रो विधिः स्यात् तर्हि त्रिपादी पूर्वं प्रत्यसिद्धा इत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यात्'। तथाच 'प्रशान्' इत्यत्र "**मो नो धातोः**" (८।२।६४) इति नत्वस्य सिद्धत्वात् न लोपः स्यात्। नत्वविधेः सम्बुद्धौ चरितार्थत्वात्। तथा 'अनड्वान्' इत्यत्र संयोगान्तलोपस्य सिद्धत्वात् नलोपः स्यात् नुम्विधेस्तु सम्बुद्धौ चरितार्थत्वात् इत्यत आह **अधिकारोऽयम** इति। 'स्वदेशे वाक्यार्थशून्यत्वे सति परदेशैकवाक्यार्थतया स्वार्थबोधजनको**ऽधिकारः**।

† 'मुग्धबोधे'—तथाच तत्सूत्रम् "अयां य्वोर्लुग्वा" इति।

(६।१।८४) रित्यधिकृतम्। एतन्मत्वा 'आदेचि परे वृद्धिरेकादेशः स्यात्' इति व्याकृतं वरदराजेन। गुणापवादः = अयं योगः 'आद्गुण' इत्यस्य प्राप्तिं वारयतीत्यर्थः। 'कृष्णस्य एकत्वम्' इति षष्ठीसमासः। 'कृष्ण एकत्वम्' इति स्थिते 'वृद्धिरादैच्' इति एकारस्य वृद्धिसञ्ज्ञायां जातायां 'वृद्धिरेचि' इति सूत्रेण णकारोत्तरवर्त्तिन आत् परतः वृद्धिसञ्ज्ञकस्य एकारस्य पूर्वपरयोर्द्वयोः स्थाने वृद्धिरूपैकादेशप्राप्तिः। तत्र 'आ ऐ औ' इति त्रयो वर्णा वृद्धिसञ्ज्ञाः, सर्वेषां प्राप्तौ सत्यां केन वर्णेन भाव्यमित्याकाङ्क्षायां 'स्थानेन्तरतम' इति सूत्रेण अकारस्य एकारस्य च (स्थानिनः) मिलित्वा कण्ठतालुस्थानकस्य स्थाने तथाविध एकार एवैकादेशः। ततः 'कृष्ण् ऐकत्वम्' इति जाते परयोगे च कृते "कृष्णैकत्वम्" इति सिद्धम्। एवम्-'गङ्गा ओघः' इत्यवस्थायां पूर्ववत् वृद्धौ सर्वेषां वर्णानां प्राप्तौ स्थानान्तर्यात् आकारस्य ओकारस्य च कण्ठोष्ठस्थानकस्य स्थाने तादृश एव औकारः स्यात्। जाते चौकारे 'गङ्ग् औघ' इति रूपे परयोगे कृते "गङ्गौघः" इति सिद्धं भवति। गङ्गौघः = गङ्गाप्रवाह इत्यर्थः। अनयैव रीत्या देवैश्वर्यम्, कृष्णौत्कण्ठ्यम् इत्यपि साधनीयम्। 'देव ऐश्वर्यम्, कृष्ण औत्कण्ठ्यम्' इत्यसिद्धावस्था। एवमेव रामैक्यम्, इन्द्रैश्वर्यम् मुकुन्दौकः। भवौषधम्, इत्यादीनि साधनीयानि। **एत्येधत्यूठसु**। एतिश्च एधतिश्च ऊठ्च इति विग्रहः। 'वृद्धिरेचि' इत्यत 'एचि' इत्यनुवर्त्तते। 'यस्मिन्विधि' रित्यनेन तदादिग्रहणम्। तेन 'एजादौ' इत्यर्थो लब्धः। तच्च पदम्-एत्येधत्योरेव विशेषणम् नतु ऊठोऽपि। असम्भवात्। एकः पूर्वपरयोरित्यधिकृतम्। 'आद्गुण' इत्यतः आदिति पञ्चम्यन्तमनुवर्त्तते। तदेतत्सर्वमभिप्रेत्याह— **अवर्णादेजाद्यो**रिति। 'उप एति' इत्यवस्थायाम् अनेन सूत्रेण पकारोत्तरवर्त्यकारादेजादौ 'एति' परे पूर्वपरयोः स्थाने आन्तर्यात् ऐकारवृद्धौ जातायाम्—*'उपैति' इतिरूपम्। एवमेव—'उपैधते' 'प्रष्ठौह' इति च साधनीयम्। 'पररूपगुणापवादः' = एत्येधत्योरिति 'एङि पररूपम्' (६।१।६४) इत्यस्य, ऊठि 'आद्गुण' (६।१।८७) इत्यस्यचायमपवाद इत्यर्थः। **'एजाद्योः किम्'** इति। सूत्रे एजाद्योर्ग्रहणस्य किं फलमिति पृच्छति। तद्दर्शयति—(प्रत्युदाहरणेन)

---

* 'इण्' गतौ। अस्मात् लट्। तिप्। शब्लुक् 'सार्वधातुकार्ध०' (७।३।८४) इत्यनेन इकारस्य गुण एकारः एति इति रूपम्। ततः 'उप एति' इत्यसिद्धम्। एवम्—'एध' वृद्धौ। लट्। आत्मनेपदम्। तादेशः। शप्। "टित आत्मने पदानां टेरे' (३।४।७६) इत्येत्वम्। एधते। 'उप एधते' इत्यसिद्धावस्था। प्रष्ठं वहतीति प्रष्ठवाट्। "वहश्च" (३।२।६४) इति ण्विः। 'वेरपृक्तस्य'(६।१।६४) इति वलोपः। 'अत उपधायाः' ७।२।११६) इति वृद्धिः। ततः शसि 'वसोः सम्प्रसारणम्' (६।४।१३१) इत्यतः सम्प्रसारणानुवृत्तौ 'वाह ऊठ्' (६।४।१३२) इति, सम्प्रसारणसञ्ज्ञकस्य ऊठः 'सम्प्रसारणाच्च'(६।१।१०८) इति पूर्वरूपे 'प्रष्ठ उह् शस्' इति स्थिते अनेन सूत्रेण वृद्धिरौकार इति प्रक्रिया।

उपेतः ' इति ' माभवान् प्रेदिधत् ' इति च। अयमाशयः—' इण् ' गतौ। अस्मात् धातोर्लटि तसि शपि लुकि च सति 'सार्वधातुकमपित्' ( १ । २ । ४ ) इति तस्य कित्वात् तस्मिन् परतः इकारस्य ( धात्ववयवस्य ) न गुणः। 'इतः' इति प्रथमपुरुष द्विवचने रूपम्। ततः ' उप इत ' इत्यवस्थायां 'आद्गुण' इति सूत्रेण पूर्वपरयोरेकः एकार एव गुणादेशो वृत्तः नतु वृद्धिः। अत्र एतिधातोरेजादित्वाभावात्। यदि उक्तसूत्रे 'एजाद्यो' रिति न पठ्येत तदा वृद्धिरूपैकादेशे सति 'उपैतः' इत्यनिष्टं रूपमापद्येत, तदर्थम् 'एजाद्यो' रित्यावश्यकम्। एवम्—'माभवान् प्रेदिधत्' इति। अत्रहि 'एध' धातोर्णिच्। लुङ्। तिप्। ' नित्यं ङितः ' ( ३ । ४ । ९९) इत्यनेन इकारलोपः। ' णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् ' ( ३ । १ । ४८ ) इति चङ्। ' णौ चङ्युपधाया ह्रस्वः ' (७ । ४ । १) इति ह्रस्वः। ' चङि ' (६ । १ । ११) इत्यजादेर्द्वितीयस्य 'धि'शब्दस्य द्वित्वम्। 'अभ्यासेचर्च' ( ८ । ४ । ५४ ) इति जश्त्वम्। ' न माङ्योगे ' (६ । ४ । ७४) इत्यडभावः। शेषत्वात् प्रथमपुरुषः। ' प्र इदिधत् ' इति स्थिते सति उक्तयोगेन न वृद्धिः। प्रकृते ' एध ' धातोरेजादित्वाभावात्। उक्तविशेषणाभावे तु अत्रापि वृद्धौ जातायाम् ' माभवान् प्रैदिधत्' इत्यशुद्धं रूपमापद्येतेति भावः।

**स्वादीरेरिणोः**। 'स्व' शब्दाद् ईरशब्दे ईरिन् शब्दे च परे पूर्वपरयोरचो वृद्धिरेकादेशःस्यात्। 'स्व ईरः' इति स्थिते 'आद्गुण' इति गुणे प्राप्ते अनेन वार्त्तिकेन " अ इ " इति द्वयोः पूर्वपरयोरचोः स्थाने स्थानान्तर्यात् ऐकारो वृद्धिरादेशः। * स्वैरम्। एवमेव—'स्व ईरी' इत्यत्र पूर्ववद् गुणे प्राप्ते वृद्धौ † स्वैरी। तथैव 'स्व ईरिणी' इत्यत्र वृद्धौ सत्यां 'स्वैरिणी' इति सिद्धं भवति। 'स्वैरिणी' इति तु ‡ लिङ्ग विशिष्टपरिभाषया। **अक्षादूहिन्या०**। अक्षशब्दात् ऊहिनीशब्दे परे पूर्वपरयोरचो वृद्धिरेकादेशः स्यात्। 'अक्ष ऊहिनी' इत्यवस्थायां गुणे प्राप्ते अनेन वार्त्तिकेन कण्ठोष्ठस्थानकयोः अकार-ऊकारयोः स्थाने तादृश एव कण्ठोष्ठस्थानक औकारो वृद्धिः। 'अक्ष् औहिनी' इति जाते सति "पूर्वपदात्सञ्ज्ञायामगः" ( ८ । ४ । ३ ) इति सूत्रेण नस्य

---

* 'ईर' गतौ। अस्मात् धातोः भावे घञ्। स्वेन ईरः इति विग्रहः। "कर्त्तृकरणे कृता बहुलम्" ( २ । १ । ३२ ) इति समासः। † स्वेन छन्देन ईरितुं शीलमस्येति "सुप्यजातौ णिनिस्ताच्छील्ये" (३ । २ । ७८) इति 'ईर' धातोर्णिनिः प्रत्ययः 'स्वैरी' स्वच्छन्दचारीत्यर्थः। "उपपदमतिङ्" ( २ । २ । १९ ) इति उपपदसमासः।

‡ " प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् " इत्यनेन वृद्धिः सिद्ध्यति।

'मुग्धबोधे' तु—"**स्वाक्षयोरीरोहिण्योः**" इति सूत्रं पठित्वा 'ऊहिणी' इति मूर्धन्यनिर्देशात् अक्षान् ऊहितुं शीलमस्या इति वाक्ये सञ्ज्ञायां णत्वे "अक्षौहिणी" सेना। पाशकन्नी च। अन्यत्र "अक्षौहिनी" इत्युक्तम्॥

णत्वे विहिते + 'अक्षौहिणी' इति सिद्धम्। सेना=परिमाणविशेषविशिष्टा सेनेत्यर्थः। **प्रादूहोढोढ्येषैष्येषु**। प्रादुपसर्गात् ऊह, ऊढ, ऊढि, एष, एष्य एतेषु परेषु पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यात्। 'ऊह' वितर्के। भावे घञ्। गतिसमासः। 'प्र ऊह' इति स्थिते गुणे प्राप्ते अनेन वार्तिकेन पूर्वपरयोरचोः स्थाने स्थानसाम्यात् कण्ठोष्ठस्थानक औकारो वृद्धिरेकादेशः। प्रौह इति सिद्धम्। * प्रौढः, प्रौढिः, प्रैषः, प्रैष्य इत्यपि ज्ञेयम् 'प्रोढवान्' इत्यत्र तु न वृद्धिः। अर्थात् 'वह' धातोः 'क्तवतु' प्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु 'प्र ऊढवत्' इति स्थिते 'प्रादूहो०' इति वार्त्तिकेन 'ऊढ' शब्दपरत्वात् वृद्धिः प्राप्ता, परन्तु 'ऊढवत्' इति क्तवत्वन्तैकदेशभूत 'ऊढ' शब्दोऽनर्थकः। **'अर्थवद्ग्रहणे नानर्थस्य'** इति परिभाषया 'ऊढ' शब्दोऽत्रानर्थक इति न वृद्धिरिति भावः।

**ऋते च तृतीयासमासे**। तृतीयासमासे अकारात् ऋतशब्दे परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यात्। 'सुखेन ऋत' इति तु विग्रहः। प्रक्रिया तु—'सुख ऋतः' इति स्थिते आद्गुणे प्राप्ते अनेन स्थानसाम्यात् आकारो वृद्धिः। सच वृद्धिरुप एकादेशः "उरण्रपर" इत्यनेन रपरः अर्थात् खकारोत्तरवर्त्त्यकारतत्परवर्त्त्यृकारयोः स्थाने 'आर्' इत्याकारा वृद्धिः, तेन 'सुखार्त्त' इति सिद्धम्। 'ऋ' गतौ। अस्मात् धातोः "गत्यर्थाकर्मक०" (३।४।७२) इति सूत्रेण कर्त्तरि क्तः। 'प्रकृत्यादिभ्यः उपसङ्ख्यानम्' इति तृतीयासमासः। समासग्रहणस्य फलं दर्शयितुमाह—'तृतीयेति किम्' इति। परमर्त्तः। परमश्चासौ ऋतश्चेति कर्मधारयः नात्र तृतीयासमासः, तेन 'परम ऋत' इत्यवस्थायां

---

+ 'ऊह' वितर्के। भावे घञ्। ऊहनमूहः। सोऽस्यास्तीति ऊहिनी। मत्वर्थीय इनिः। नान्तत्वात् स्त्रियां ङीप्। अक्षाणामूहिनी इति विग्रहः। केचित्तु—ऊहः—समूहः सोऽस्यास्तीति ऊहिनी इत्यर्थमाहुः। 'अक्षाणाम्' इत्यस्य 'ऊह' शब्देन तु न समासः तथा सति 'अक्षोह' शब्दात् इनौ प्रत्यये 'अक्षोहिणी' इत्येव भवेत्, नतु वृद्धिः। अन्तरङ्गेण गुणेन बाधात्।

* 'वह' प्रापणे। अस्मात् क्तः। "वचिस्वपियजादीनां किति" (६।१।१५) इति सम्प्रसारणम्। ततः "सम्प्रसारणाच्च" (६।१।१०८) इति पूर्वरूपम्। "होढः" (८।२।३१) इति ढत्वम्। 'झषस्तथो र्धोऽधः' (८।२।४०) इति धत्वम्। 'ष्टुनाष्टुः' (८।४।४१) इति ष्टुत्वम्। 'ढोढेलोपः (८।३।१३) इति ढलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः (६।३।१११) इति दीर्घे प्र ऊढ इति स्थितिर्जाता। तत उक्तेन वार्त्तिकेन वृद्धौ 'प्रौढ' इति सिद्धमित्यर्थः। एवम्—प्रौढिः। अत्र 'वह' धातोः स्त्रियां क्तिन्। पूर्ववत् ढत्वधत्वष्टुत्वढलोपदीर्घाः 'प्र ऊढिः' इति स्थितौ गुणे प्राप्तेऽनेन वृद्धिः। 'इषु' इच्छायाम् तदादिः, 'इष् गतौ दिवादिः, इष्' आभीक्ष्ण्ये क्र्यादिः एषां घञि, ण्यति च सति लघूपधगुणे एषः, एष्यः इति रूपद्वयं सिद्ध्यति। तत्र 'प्र एषः' 'प्र एष्यः' इति स्थिते 'एङि पररूपम्' (६।१।९४) इत्यनेन प्राप्तं पररूपं बाधित्वा अनेन वृद्धिः।

आद्गुणः, सच रपरः। **प्रवत्सतर०**। अत्र पञ्चम्यर्थे षष्ठी। प्र, वत्सतर, कम्बल, दश, ऋण, एतेषां 'ऋण' शब्दे परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादिति वार्त्तिकार्थः। 'प्रगतमृणम्' इति विग्रहे "प्रादयो गत्याद्यर्थे प्रथमया" इति गतिसमासः। प्र ऋणम इति स्थिते "आद्गुण" इति प्राप्तं गुणं बाधित्वा अनेन पूर्ववत् आकारो वृद्धिः। रपरत्वञ्च। प्रार्णम्। एवमेव—वत्सरार्णम्, कम्बलार्णम्,वसनार्णम्, ऋणार्णम्, दशार्णश्चेतानि साधनीयानि इत्याशयेनाह—'इत्यादि' इति। 'प्रार्च्छति' इत्यादिप्रयोगसाधनाय उपसर्गसञ्ज्ञां दर्शयति—**उपसर्गाः०** इति। 'प्रादय' इत्यनुवर्त्तते। स्पष्टम्। के ते प्रादय इत्याह—प्र परा इत्यादि। धातुसञ्ज्ञामाह—"भूवादय" इति। भूश्च वाश्च भूवौ। आदिश्च आदिश्च आदी। प्रथम आदिशब्दः प्रभृतिवचनः, परस्तु प्रकारवचनः भूवौ आदी येषां ते भूवादयः, भूप्रभृतयः वासदृशाश्चेत्यर्थो लभ्यते। वासादृश्यञ्च क्रियावाचित्वमेवेत्याशयेनाह—"क्रियावचन" इति। 'क्रियावाचिन' इति किम्—'याः पश्यसि' इत्यादौ धातुत्वं माभूत्। सति हि तस्मिन् "आतो धातोः"(६। ४। १४७) इत्याकारलोपः स्यात्। 'भ्वादयः' किम्—'हिरुक् पृथक्' इत्यादिवर्जनक्रियाद्यर्थकान्ययानां 'शिश्ये' इति भावार्थकतिङन्तस्य च धातुत्वं माभूत्। स्तम्भ्वादीना मुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते। चुलुम्पादीनां "बहुलमेतन्निदर्शनम्" इति गणसूत्रेण सङ्ग्रहः। **उपसर्गादृति धातौ**। 'आद्गुणः' इत्यतः आदिति पञ्चम्यन्तमनुवर्त्तते, तच्च उपसर्गविशेषणम्। विशेषणेन च तदन्तविधिः। 'वृद्धिरेचि' (६। १।८८) इत्यतो 'वृद्धि' रित्यनुवर्त्तते। ऋतीति धातोर्विशेषणम्, यस्मिन्विधिरिति तदादिविधिः, ऋकारादाविति लब्धम् इति सर्वमभिप्रेत्य वृत्तिं पठति—"अवर्णान्तात्०" इति। 'प्र ऋच्छति' इत्यवस्थायाम् आद्गुणे प्राप्ते "उपसर्गाः०" इत्यनेन 'प्र' इत्यस्य उपसर्गसञ्ज्ञायां कृतायां 'भूवादयः०' इति योगेन भ्वादीनां धातुसञ्ज्ञायाञ्च भावितायां 'उपसर्गादृति धातौ' इति सूत्रेण पूर्वपरयोरचोः स्थाने आकारो वृद्धिरेकादेशः, सच रपर इत्यादि सर्वं पूर्ववज्ज्ञेयम्। **प्रार्च्छति**। 'उपसर्गात्' इति किम्—खट्वर्च्छति। ऋति किम्—उपेतः। तपरकरणमुत्तरार्थम् इह दीर्घऋकारादेर्धातोरम्भवेन व्यावर्त्याभावात्। धातौ किम्। उपर्कारः। प्रगता ऋच्छका यस्माद् देशात्, प्रर्च्छको देशः। नात्र वृद्धिः यत् क्रियायुक्ताः प्रादयस्तम्प्रत्येव गत्युपसर्गसञ्ज्ञकाः। ऋतीति किम्। उपेतः। तपरकरणं किम्। उप ऋकारीयति उपर्कारीयति इति काशिका।

**वासुप्यापिशलेः। ६। १। ९२। आदुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा। आपिशलिग्रहणं पूजार्थम्॥ अचो रहाभ्यां द्वे। ८। ४। ४६। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। इति प्राप्ते॥ शरोचि ।८।४। ४९। द्वे न॥ प्रार्षभीयति॥**

एङि पररूपम् । ६ । १ । ९४ । आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः। प्रेजते। उपोषति ॥ अचोन्त्यादि टि । १ । १ । ६४ । अचां मध्ये योन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । शकन्ध्वादिषु पररूपं वाच्यम् । तच्च टेः । शकन्धुः कर्कन्धुः कुलटा । सीमन्तः केशवेशे। सीमान्तोन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः । सारङ्गः पशुपक्षिणोः । साराङ्गोन्यः । आकृतिगणोयम । एवे चानियोगे । क्व भोदयसे । अनियोगे किम । तवैव । ओत्वोष्ठयोः समासे वा । स्थूलोतुः । स्थूलौतुः । विम्बोष्ठः । विम्बौष्ठः । समासे किम् । तवौष्ठः । ओमाङोश्च ६ । १ । ९५ । ओमि आङि चात्पररूपमेकादेशः ॥ शिवायोन्नमः । शिव आ इहि इति स्थिते ॥ शिवेहि । शिवेहि ॥ अकः सवर्णे दीर्घः । ६ । १ । १०१ । अकः सवर्णेऽचिपरे दीर्घ एकादेशः स्यात् । दैत्यारिः।श्रीशः । विष्णूदयः । होतॄकारः ॥ एङः पदान्तादति । ६ । १ १० ॥ पदान्तादेङोति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ॥ सर्वत्र विभाषा गोः । ६ । १ । १२२ ॥ लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते । गो अग्रं गोग्रम । एङन्तस्य किम । चित्रग्वग्रम् । पदान्तस्य किम । गोः ॥ अनेकाल् शित् सर्वस्य । १ । १ । ५५ । इति प्राप्ते ॥ ङिच्च । १ । १ । ५३ । ङिदनेकालप्यन्त्यस्यैव स्यात् ॥ अवङ् स्फोटायनस्य । ६ । १ । १२३ । पदान्ते एङन्तस्य गोरवङ् वा स्यादचि । गवाग्रम । पदान्ते किम । गवि ॥ इन्द्रे च । ६ । १ , १२४॥ गोरवङिन्द्रे । गवेन्द्रः। व्यवस्थितविभाषया । गवाक्षः॥ दूराद्धूते च ।८।२।८४। दूरात्संबोधने वाक्यस्य टेः प्लुतो वा ॥

वा सुप्यापिशलेः । 'उपसर्गादृति धातौ' इति सर्वं सूत्रमनुवर्त्तते । 'आद्गुणः' इत्यतः 'आत्' 'वृद्धिरेचि' इत्यतो वृद्धिरिति च । 'आत्' इत्यनेन 'उपसर्गात्' इति विशेषणीयम् । ततः तदन्तविधिः । प्रत्ययग्रहणपरिभाषया सुप्शब्देन सुबन्तप्रकृतिको धातुर्विवक्षितः । 'एकः पूर्वपरयोः' ( ६ । १ । ८४ ) इति चाधिकृतम । एतत्सर्वं हृदि कृत्वा व्याख्याति—'आदु०' इति । 'आपिशलि०' इति । 'वा' ग्रहणा-

देव विकल्पसिद्धेः आदरार्थमापिशलिग्रहणं करोतीत्यर्थः । 'प्र * ऋषभीयति' इति स्थिते एकान्तगुणे प्राप्ते अनेन वृद्धिराकारो रपरः । **प्रार्षभीयति** । वृद्ध्यभावपक्षे तु—आद्गुणे रपरे, **प्रर्षभीयति** । **एङि पररूपम्** । 'उपसर्गात्' इति 'धातौ' इति चानुवर्त्तते 'आद्गुण' इत्यतः 'आत्' इत्यनुवर्त्तमानं 'उपसर्गात्' इत्यस्य विशेषणम् । विशेषणेन तदन्तविधिः । 'यस्मिन्विधि॰'रिति परिभाषया तदादिग्रहणम् 'एकः पूर्वपरयो'रित्यस्त्यधिकारः इत्यभिप्रायेण सूत्रं व्याख्याति—'आदुपसर्गात्॰' इति । 'आत्' इत्यस्य अवर्णान्तादित्यर्थः । पररूप एकादेशः = पूर्वपरयोः स्थाने पररूप एकादेश इत्यर्थः । उदाहरणम्—प्रेजते । उपोषति । 'प्र एजते' इति स्थिते । 'वृद्धिरेचि' इत्यनेन प्राप्तायां वृद्धौ तां बाधित्वा अनेन 'प्र'—उत्तरवर्त्तिन अकारस्य † 'एजते' इत्यादिवर्त्तिन एकारस्य च द्वयोः पूर्वपरयोः स्थाने पररूपमेकारः संवृत्तः । हल् 'प्र्' एकारे-निविष्टः, **'प्रेजते'** इति सिद्धम् । एवमेव 'उप ‡ ओषति' इति स्थिते वृद्धिं बाधित्वा अनेन पररूप ओकारः **उपोषति** । क्वचित् टेः पररूपं विधातुं टिसञ्ज्ञां दर्शयति—**अचोन्त्यादि टि** इति । 'अच' इति निर्धारणे षष्ठी जातावेकवचनम् । अन्ते भवः अन्त्यः । अन्त्यः आदिर्यस्य तत् अन्त्यादीति । सूत्रस्य फलितार्थमाख्याति—'अचां मध्ये॰' इति । "शकन्ध्वादिषु" इति । शकन्ध्वादिषु विषये तत्साधनाय पूर्वपरयोः स्थाने परं रूपं वक्तव्यमित्यर्थः । अत एवाह—**'तच्च टे'**रिति । यदि 'आत्' इत्यधिकारात् अकारस्यैवेष्येत तर्हि 'मनीषा पतञ्जलि'रिति न सिध्येत् । शकन्ध्वादिगणं पठति—'शकन्धु' रित्यादिना । शकानां देशविशेषाणाम् अन्धुः कूपः इति विग्रहः । 'शक अन्धु' रिति स्थिते सवर्णदीर्घे प्राप्ते अचोन्त्यादिति ककारोत्तरवर्त्यकारस्य 'टि' सञ्ज्ञां कृत्वा अनेन पररूपे **'शकन्धुः'** इति सिद्धम् । अत्र 'शक' शब्दे द्वावचौ, तत्र अन्त्यः अच् ककारोत्तरवर्त्ती अकारः, तदादिः अकार एव अन्त्यः "आद्यन्तवदेकस्मिन्" (१।१।२१) इति परिभाषया, अन्यथा ककारस्यैव पररूपत्वमापद्येत तच्चाऽनिष्टम् । एवमेव—**कर्कन्धुः** । कर्काणां राजविशेषाणाम् अन्धुः इति विग्रहः । 'कर्क अन्धु' रिति । स्थितिः साधनप्रक्रिया-पूर्ववज्ज्ञेया । 'अट' गतौ । अस्मात् पचादित्वाद् 'अच्' । स्त्रियां टाप् । अटतीति अटा । कुलानामटा इति विग्रहः 'कुल अटा' इति पूर्वा स्थितिः । टकारोत्तरवर्त्तिन अकारस्य टिसञ्ज्ञां

---

* ऋषभमात्मन इच्छति इत्यर्थे 'सुप आत्मनः क्यच्' ( ३ । १ । ८ ) 'सनाद्यन्ता धातवः' ( ३ । १ । ३२ ) इति धातुसञ्ज्ञा । 'सुपोधातुप्रातिपदिकयोः' ( २ । ४ । ७१ ) इति सुपो लुक् । 'क्यचि च' ( ७ । ४ । ३३ ) ईत्वम् । 'ऋषभीय' इति जाते लट्, तिप्, शप्, पररूपञ्चेति सिद्धं भवति ऋषभीयति ।

† 'एजृ' दीप्तौ धातुः । अस्मात् लट् । तङ् । शप् एत्वम् । ‡ 'उष' दाहे । अस्मात् लट् । तिप् । शप् । लघूपधगुणः ।

पररूपं पूर्ववत्। या भिक्षार्थं व्यभिचारार्थं वा गृहान् अटति सा **कुलटा**। कुलानि अटतीति विग्रहे तु कर्मण्यण् 'टिड्ढाणञ्०' (४।१।१५) इति ङीपि 'कुलाटी' भवति। **सीमन्तः केशवेशे**। गणान्तर्गतसूत्रमिदम्। केशानां वेशः केशवेशः। केशवेशे गम्यमाने 'सीमन्' शब्दस्य 'अन्' इत्यस्य टेः 'अन्त'शब्दस्यादिवर्त्तिन अकारस्य च द्वयोः स्थाने पररूपं भवति। अत्रापि 'आत्' इत्यनुवर्त्त्येत चेत् तदा इदं न सिद्ध्येत। केशवेशरूपार्थाभावे तु 'सीमान्तः' इति। 'सीम्नोऽन्त' इति विग्रहः। सुपोलुक्। नलोपः। सवर्णदीर्घः। **मनीषा**। 'मनस ईषा' इति विग्रहः। अत्र—'अस्' मात्रस्य टिसञ्ज्ञायां तस्य टेः ईकारस्य चेति द्वयोः स्थाने पररूपमीकारः। मनीषा=बुद्धिः। 'बुद्धिर्मनीषा' इत्यमरः। ईष गतौ। अस्मात् "गुरोश्च हलः" (३।३।१०३) इति 'अ' प्रत्ययः। ततः टाप्। **हलीषा**। 'हलस्य ईषा' इति विग्रहः। ईषा लाङ्गलदण्डः। अत्र--आद्गुणे प्राप्ते अनेन पररूपे सिद्धम्। एवमेव--'लाङ्गलीषा' इत्यपि। पतञ्जलिः। पतन्त अञ्जलयोऽस्मिन् इति विग्रहः। अत्र 'पतत् अञ्जलिः' इति स्थिते 'अत्' इत्येतस्य टेः अकारस्य च स्थाने पररूपमकारः। **'सारङ्ग'** इति। इदमपि गणसूत्रम्। साराणि अङ्गानि यस्य इति विग्रहः। 'सार अङ्ग' इति स्थिते सवर्णदीर्घे प्राप्ते अनेन पररूपमकारः। पशुपक्षिणोर्गम्ययोः "सारङ्ग" इति भवति। तदितरत्रार्थे तु 'साराङ्गः'=उत्कृष्टाङ्गोपेत इत्यर्थः। **आकृतिगणोऽयम**। आकृत्या एव गण्यते, यानि यान्येवंरूपाणि तानि अत एव साधनीयानीत्यर्थः। अर्थात् लोकप्रयोगानुसारेण एवञ्जातीयकाः शब्दा अस्मिन्नेव गणे निवेश्याः। तत्फलन्तु 'मार्त्तण्ड' इत्यादिप्रयोगाणां सिद्धिः। मृतं अण्डं यस्य स 'मृतण्ड' इति कश्चिदृषिः 'मृत अण्ड' इति स्थिते सवर्णदीर्घं बाधित्वाऽत्र पररूपमकारः। ततः 'मृतण्डस्य अपत्यम्' इत्यपत्यार्थेऽणि आदिवृद्धौ **'मार्त्तण्ड'** इति सिद्धं भवति। मृतण्डादागतो मार्त्तण्डः। अण्विषय एव पररूपमिति **शेखरे**। **एवेचानियोगे**। नियोगोऽवधारणम्। अवधारणमन्ययोगव्यवच्छेदः। अवधारणाभिन्नेऽर्थे य एवशब्दः तस्मिन्नकारात् परे पूर्वपरयोः पररूपमेकादेशः स्यादित्यर्थः। "**क्वेव**" इति। 'क्व एव' इति स्थिते 'वृद्धिरेचि' इति प्राप्तां वृद्धिं बाधित्वा अनेन वार्त्तिकेन पररूपमेकारः। क्वेव भोक्ष्यसे इत्युक्ते स्थलसङ्कीर्णत्वादिना नास्ति सम्भवस्तव भोजनस्येति गम्यते। अन्ये तु त्वं भोक्ष्यसे इति न सम्भावये इत्यर्थ इति व्याचख्युः। प्रत्युदाहर्त्तुमाह—"अनियोगे" इति। तवैव। नान्यस्येत्यर्थः। 'तव एव' इति स्थिते वृद्धिः नतु पररूपम् अवधारणार्थकत्वादिति भावः। **ओत्वोष्ठयोः०**। अवर्णात् ओतुशब्दे परे ओष्ठशब्दे च परे पूर्वपरयोरचोः स्थाने पररूपं वा वक्तव्यमित्यर्थः। 'स्थूल ओतुः' इति स्थिते पाक्षिकीं वृद्धिं बाधित्वा अकारोकारयोर्द्वयोरचोः स्थाने पररूपमोकारः। **स्थूलोतुः**। पक्षे वृद्धौ—**स्थूलौतुः**। ओतुर्विडालः। स्थूलश्चासावोतुश्चेति विग्रहः। एवमेव--'बिम्ब ओष्ठ' इति स्थिते **बिम्बोष्ठः**,

**बिम्बौष्ठ** इति रूपद्वयम् । प्रत्युदाहर्त्तुमाह—"समासे किम" इति । 'तव ओष्ठ' इति स्थिते केवलं वृद्धिरेव नतु पररूपम् । **तवौष्ठः । ओमाङोश्च** । 'आत्' इति 'पररूपम्' इतिचानुवर्त्तते । "एकः पूर्वपरयो" रित्यधिकृतम् । एतन्मत्वा व्याख्याति "ओमि"० इति । 'शिवाय ओन्नमः' इत्यत्र वृद्धिं बाधित्वा अनेन पररूपम्=**शिवायोन्नमः** । 'शिव आ इहि' स्थिते "पूर्वं धातुरुपसर्गेण युज्यते" इति नियमेन 'आद्गुण' इति योगेन गुणे कृते 'शिव एहि' इति जाते सति अनेन योगेन पररूपैकादेशे च कृते सिद्धं भवति **शिवेहि** इति । ननु —'शिव आ इहि' इत्यवस्थायां सवर्णदीर्घे कृते पश्चात् आद्गुणे च सिद्धमिष्टं 'शिवेहि' इति तत्किमाङ्ग्रहणेन इति चेत् ? सत्यम् । "धातूपसर्गयोः कार्यमन्तरङ्गम्" इति पूर्वं गुणे कृते ततो वृद्धिरेकादेशः स्यात् तन्माभूदिति सूत्रे 'आङ्' ग्रहणमावश्यकमिति भावः । भाष्ये तु—'आ ऋश्यात्' गुणः अर्श्यात्, 'अद्य ऋश्यात्' अद्यर्श्यात् इत्यत्र सवर्णदीर्घनिवृत्त्यर्थमाङ्ग्रहणम् इति स्थितम् । **अकः सवर्णे दीर्घः** । 'अकः' इति पञ्चमी । 'इकोयणचि' इत्यतः 'अचि' इत्यनुवृत्तम् । 'एकः पूर्वपरयो' रित्यधिकृतम् । एतन्मत्वा व्याचष्टे—"अकः सवर्णे०" इति । 'दैत्य अरिः' इति स्थिते यकारोत्तरवर्त्यकारः तत्सवर्णः परोऽच् 'अरि' रित्याद्यवयवोऽकारः तयोर्द्वयोरकारयोरेको दीर्घ आकार एकादेशः । परयोगे च सिद्धं '**दैत्यारि**' रिति । एवमेव —'श्री ईश' इति स्थिते पूर्वपरयोर्द्वयोः ईकारयोरेक ईकारादेशः । 'विष्णु उदय' इत्यत्र उकारयोरुकारः । 'होतृ ऋकारः' इत्यत्र ऋकारयोः दीर्घ ॠकार एकादेश इति ज्ञेयम् ।

**एङः पदन्तादति** । "अमि पूर्व." इत्यतः पूर्वमित्यनुवर्त्तते । 'एकः पूर्वपरयो' रित्यधिकृतम्, इति मन्वानो व्याचष्टे—"पदान्तात्०" इति । 'हरे अव' इति स्थितौ सत्यां 'एचोयवायाव' इत्यनेन प्राप्तमयादेशं बाधित्वा अनेन द्वयोरचः स्थाने पूर्वरूपमेकारः । **हरेऽव** इति सिद्धम् । एवमेव—'विष्णो अव' इति स्थिते अवादेशं बाधित्वा पूर्वरूपमोकारः, **विष्णोऽव** इति सिद्धम् । एङः किम् । दध्यत्र । पदान्तात् किम् । चयनम्, लवनम्, अचिनवम् । 'अति' इति किम् । हरयिह, विष्णविह । तपरः किम् । वायवायाहि । **सर्वत्र विभाषा गोः** । 'एङ' इत्यस्मात् 'पदान्तात्' 'अति' इति चानुवर्तते । "प्रकृत्यान्तः पाद०" (६ । १ । ११५) इत्यतः 'प्रकृत्या' इति च । 'यजुष्युरः' (६ । १ । ११७) इत्यतो 'यजुषि' इति निवृत्तम्, तद्बोधनायैव 'सर्वत्र' इति पठितम् । एतस्यैव व्याख्यानं "लोके वेदे च" इति । तदेतत्सर्वमभिप्रेत्याह—'लोक०' इति । "गो अग्रम्" इत्यत्र पूर्वमयादेशप्राप्तौ 'सर्वत्रे' ति योगेन प्रकृतिभावे विहिते '**गो अग्रम्**' इत्येव रूपम् । 'विभाषा' ग्रहणेन पक्षे "एङः०" इति सूत्रेण पूर्वरूपे '**गोऽग्रम्**' इति भवति । लक्षणस्य पदकृत्यं दर्शयति -"एङन्तस्य किम्" इति । उक्त सूत्रे एङन्तानुवर्त्तनस्य किं फलमिति प्रश्नः । उत्तरयति-"चित्रग्वग्रम्" इति । चित्रा गावो यस्य सः चित्रगुः इति विग्रहः। चित्रगो अग्रम्' इति स्थिते "एकदेशविकृतमनन्यवत्" इति न्यायेन अत्रापि

प्रकृतिभावः प्रसज्येत तन्माप्रसाङ्क्षीत् इति 'एङन्तस्य' इत्युक्तम् । प्रतिपदोक्तस्य एङः सत्त्वे न दोषः । प्रकृते तु "ह्रस्वस्य गुणः"(७।३।१०८)इति सूत्रे सम्बुद्धौ ओकारस्य लाक्षणिकत्वम् "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति भावः । 'पदान्तस्य" इत्यस्य फलं दर्शयति—'गोः' इति । 'गो अस्' इति स्थिते 'गो' इत्योकारस्य पदान्तत्वाभावान्न प्रकृतिभावः । 'गवाग्रम्' इति साधनाय पूर्वं भूमिकामारचयति—**अनेकाल्०** इति । न एकः अनेकः, अनेक अल् यस्य स 'अनेकाल्' । 'श्' इत् यस्य सः 'शित्' अनेकाल् आदेशः शित् च आदेशः सर्वस्यैव भवतीत्यर्थः । अलोन्त्यसूत्रापवादोऽयम् । "इति प्राप्ते' = 'उक्तयोगस्य प्राप्तौ सत्यां पठति—**ङिच्च** इति । 'ङित्' आदेशोऽनेकाल् अपि अन्त्यस्यैव भवतीत्यर्थः । * अनेकाल्सूत्रापवादोऽयम् । **अवङ्०** । 'अति' इति निवृत्तम् । 'अचि' इत्यनुवर्तते । अत्र व्याख्यानमेव शरणम् अन्यथा **गवेशः, गवोद्धः** इत्यादि न सिद्ध्येत् । स्फोटः अयनं परायणं यस्य सः **स्फोटायनः** स्फोटप्रतिपादनपरो वैयाकरणः । तस्य स्फोटायनस्य ऋषेर्मते पदान्ते परे एङन्तस्य गोरवङ् आदेशो वा भवति अचि परे अन्यस्य तु नेत्यर्थः । 'गो अग्रम्' इति स्थिते अनेन योगेन गकारोत्तरवर्तिन ओकारस्य 'अवङ्' आदेशः । सच पूर्वं सर्वस्य प्राप्तः, अलोन्त्यपरिभाषया अन्त्ये नियमितः, अनेकाल्परिभाषया पुनः सर्वादेशतया विहितः 'ङिच्च' इत्यपवादेन अनेकालपि अन्त्यस्यैव कृतः 'ग् अव अग्रम्' इति जाते गकारस्य परयोगे 'गव अग्रम्' इति स्थिते सवर्णदीर्घे सिद्धं **गवाग्रम्** इति । अन्यस्य मते 'गो अग्रम् गोऽग्रम् । इति रूपद्वयमुक्तम् । 'पदान्ते किम्' इति । सूत्रे पदान्तग्रहणस्य किं फलमिति प्रश्नः । आह—**गवि** इति । 'गो इ' इति स्थिते इह ओकारस्य पदान्तत्वाभावान्न अवङ् । तदभावे तु अत्रापि अवङि 'गवे' इत्यनिष्टं रूपमापद्येत । **इन्द्रे च** । गोः, अवङ्, अचि इत्यनुवृत्तिं ज्ञात्वा आह—"गोरवङिन्द्रे" इति । 'गो इन्द्रः' इति स्थिते अवादेशप्राप्तौ अनेन अवङि ङस्येत्सञ्ज्ञायां, "तस्य लोप" इति ङलोपे च कृते, आद्गुणे च सिद्धं "गवेन्द्र" इति । **व्यवस्थित०** इति । क्वचिद्भवति, क्वचिन्न भवति, क्वचिदुभयथापीति लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थितविभाषा । "सर्वत्र विभाषा गोः" इत्यत्र आश्रयणीयेत्यर्थः । तत्फलन्तु—'गवाक्ष' इति सिद्धिः । अर्थात 'गो अक्ष' इति स्थिते नित्यमेव अवङादेशः । गवां किरणानामक्षीव इति विग्रहः । "अक्ष्णोऽदर्शनात" ( ५।४।७६ ) इति समासान्तोऽच् । † वातायने रूढोऽयम् । पुंस्त्वं लोकत् ।

---

* अपोद्यते बाध्यतेऽनेनेति **अपवादः** । † **शाकटायनस्तु—'वातायनेऽक्षे'** ( १।१।६८ ) गोशब्दस्य एङः अव इत्यादेशो भवति नित्यम् अक्षशब्दे परे वातायनेऽर्थे । गवाक्षः । पक्षे गो अक्षम् । गोऽक्षम्, इत्यसाधयत् । पाणिनीये तु सर्वत्र "**गवाक्ष**" इत्येव सिद्ध्यति तन्न सुवचम् । किन्तु वातायनार्थे एव गवाक्षः,

अथ प्रकृतिभावः।

**प्लुतप्रगृह्या अचि नित्यम्** । ६ । १ । १२५ । एतेचि प्रकृत्या स्युः ॥ आगच्छ कृष्ण ३ अत्र गौश्चरति ॥ **ह्रस्वं लघु** १ । ४ १० । **संयोगे गुरुः** १ । ४ । ११ ॥ संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ॥ **दीर्घं च** १ । ४ । १२ ॥ गुरु स्यात् ॥ **गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम्** ८ । २ । ८६ ॥ प्लुतो वा । दे ३ वदत्त। देवद३त्त। देवदत्त ३ । गुरोः किम ॥ वकारादकारस्य माभूत् ॥ अनृतः किम । कृष्ण ३ । एकैकग्रहणं पर्यायार्थम ॥ **ईदूदेद्द्विवचनं प्रगृह्यम्** १ । १ । ११ ॥ ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ ॥ गङ्गे अमू । मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ॥ **अदसोऽमात्** १ । १ । १२ ॥ अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्तेत ॥ **चादयोऽसत्वे** १। ४ । ५७ ॥ अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ॥ **प्रादयः** १ । ४ । ५८ ॥ एतेपि तथा ।

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोर्थो भेद्यत्वेन विवक्षितः ॥
लिङ्गसंख्यान्वययोग्यं द्रव्यम् ॥

**'अथ'** इति । प्रकृत्या = स्वभावेन निर्विकारस्वरूपेण भवनं = सत्ता प्रकृतिभावः । प्रकृतेर्यथावस्थितस्वरूपस्य भावोऽवस्थितिर्वा प्रकृतिभावः । सन्धियोग्या अपि स्वराः केचित्प्रकृतिस्था एव तिष्ठन्ति तस्मात्प्रकृतिरुच्यत इत्याशयः । **प्लुतप्रगृह्या०** । स्पष्टम 'आगच्छ कृष्ण ३ अत्र गौश्चरति' इत्यत्र 'दूराद्धूते च' ( ८ । २ । ८४ ) इति योगेन 'आगच्छ कृष्ण' इति वाक्यस्य टेः णकारादकारस्य प्लुतसञ्ज्ञां कृत्वा 'प्लुतप्रगृह्या०' इत्यनेन प्रकृतिभावः अर्थात् सवर्णे अकारे परे दीर्घप्राप्तिरासीत् सा अनेन वारिता ।

---

अन्यत्र गो अत्तम् इत्यादि तदनुयायिनः । **वोपदेवस्तु—'वावगोर्दान्त'** ( ३६ ) गोरिचः स्थाने अवः स्याद्वा अचि परे दान्ते । गवेशः, गवीशः, गो ईशः इत्येवं रूपाण्यसाधयत् । "गवेन्द्रगवाक्षौ नित्यम्" इति चोचिवान् । ततदनुयायिनः—उक्तसूत्रे 'गोरिच' इति ग्रहणात् "गवावादे" रिति सूत्रेण 'चित्रगो' इत्यत्रोकारस्य ह्रस्वभावे कृते " चित्रगु आचार्य " इत्यवस्थायाम् एकदेशमनन्यवदिति मत्वा " वावगोर्दान्ते " इति सूत्रे 'वा' शब्दं व्यवस्थावाचिनं मत्वा उकारस्यापि अवादेशे कृते **चित्रगवाचार्य** इतिरूपमप्युशन्ति ।

दे३वदत्तादिस्थले प्लुतं विधातुं भूमिकां रचयन् लघुगुरुसञ्ज्ञां दर्शयति—'ह्रस्वम्' इत्यादिना। 'संयोगे गुरुः' इत्यत्र 'ह्रस्वम्' इत्यनुवर्त्तते। 'दीर्घञ्च' इत्यत्र 'गुरु' पदमनुवर्त्त्य शिष्टं स्पष्टम्।

**गुरोरनृतोऽनन्त्यस्य०**। "दूराद्धूते च' इत्यनुवर्त्तते 'वाक्यस्य टेः प्लुत उदात्त' इत्यधिकृतम्। ततश्च दूरात्सम्बोधने यद्वाक्यं, तत्र सम्बोध्यमानवाचकं यत् पदं, तदवयवस्य ऋकारभिन्नस्य अनन्त्यस्य गुरोर्वा प्लुतः स्यात्। अन्त्यस्य तु टेरपि गुरोरगुरोश्च स्यादित्यर्थः, एतदाशयेन अतिसंक्षेपं वाञ्छन् व्याख्याति "प्लुतो वा" इति। 'दे३वदत्त' इत्यादिषु सर्वत्र वाक्यत्वसम्पत्तये आदौ 'एहि' पदाध्याहारो बोध्यः। अन्यथा 'एकतिङ् वाक्यम्' इत्यसङ्गतं स्यात्। पदकृत्यं करोति—'गुरोः किम्' इत्यादिना। सूत्रे 'गुरोः' इति पदनिवेशस्य किं फलमिति प्रश्नः। आह—वकारादिति। देवदत्तशब्दान्तर्वर्त्तिनो वकारादुत्तरं वर्त्तमानस्य अकारस्य प्लुतोच्चारणं न प्रसज्येत तदर्थं 'गुरो' रिति ग्रहणमावश्यकमिति भावः। 'अनृत' इति। 'कृष्ण' इत्यत्र षकारणकारसंयोगे परे पूर्वस्य ह्रस्वस्य ककारोत्तरवर्त्तिनः ऋकारस्य गुरुसंज्ञा, तेनास्यापि प्लुतत्वं स्यात् यदि 'अनृत' इति नोच्येत तन्मा प्रसाङ्क्षीत् इति 'अनृत' पदनिवेशो ज्ञेयः। एकैकग्रहणमिति—पर्यायार्थम् = अन्यथा सर्वेषां गुरूणां युगपत् प्लुतः स्यादिति भावः। इह 'प्राचाम्' इति योगो विभज्यते तेन सर्वः प्लुतो विकल्प्यते। एतेन 'द्वैपायनो विरहकातर आजुहाव' 'पुत्रेति तन्मयतया तरवोऽभिनेदुरित्यादि भागवतं व्याख्यातम्' प्लुतस्य वैकल्पिकत्वात्। **ईदूदेद्द्विवचनम्**। ईच ऊच एच एषां समाहार ईदूदेत्। द्विवचनस्य विशेषणम्,तेन तदन्तविधिः। द्विवचनमित्यत्र तु प्रत्ययत्वेऽपि न तदन्तं गृह्यते, "सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" इति तन्निषेधात् इत्याशयेनाह—"ईदूदेदन्त' मित्यादिना। 'हरी एतौ' इत्यत्र 'ईदूदेदन्त' मित्यनेन 'हरी' इत्यस्य प्रगृह्यसंज्ञां विधाय 'प्लुत प्रगृह्या" इति योगेन प्रकृतिभावे 'इकोयणचि' इत्यनेन प्राप्तो यण् न। '**हरी एतौ**' इत्येव साधु। एवमेव—**विष्णू इमौ, गङ्गे अमू। पचेते इमौ**, इत्यादि बोध्यम्। ननु—'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यादि भारतप्रयोगे 'मणी इव' इत्यत्र प्रगृह्यसञ्ज्ञायां प्रकृतिभावे दीर्घसन्धिर्न स्यात् इत्याशङ्कामाचष्टे—'मणीवोष्ट्रस्य' इति। "वं प्रचेतासि जानीयादिवार्थे च तदव्ययम्' इतिमेदिनीकोषादिप्रमाणादिति भावः। वृत्तिकृता तु "मणीवादीनां प्रतिषेधो वक्तव्य" इति वार्त्तिकं पठित्वा **मणीव, रोदसीव, जम्पतीवे**त्युदाहृतम्। एतच्च—मुनित्रयानुक्तत्वादप्रमाणमिति कैयटादय इति **तत्त्वबोधिनी**। दाधिमथास्तु—यदि च विभाव्यते "**दम्पतीवक्रतुविदाजनेषु**" इति (२मं, ३६ सू, २) इति मन्त्रस्य पदपाठे '**दम्पती ऽइवेति दम्पतीव**' इतीवेनैव परविभागस्य दर्शनात् तद्विरोधापत्त्या चिन्त्योयं (मूलोक्तः)

समाधिरिति, तदा प्रकृतिभावस्य नित्यपदेन प्रायिकत्वबोधनात् तदप्रवृत्तौ न कोपि दोष इति ध्येयमित्याहुः। एतेन वृत्तिकारपक्ष एव फलतीत्यस्माकमाभाति।

**अदसोमात्।** अदस इत्यवयवषष्ठी अदःशब्दावयवात्मकमकारादित्यर्थः। 'ईत्' इति 'प्रगृह्यम्' इति चानुवर्त्तते। 'एत्' इति नानुवर्त्तते—अदःशब्दे मकारात्परस्य एकारस्य असम्भवात्। 'द्विवचनम्' इत्यपि नानुवर्त्तते। अदःशब्दे मकारात्परस्य ईकारस्य बहुवचनत्वात् ऊकारस्य च मकारात्परस्य द्विवचनान्तेष्वेव सत्त्वेन व्यावर्त्त्याभावात् इति सर्वमालोच्य व्याचष्टे—"अस्मात्परौ०" इति। उदाहरति—'अमी ईशाः' इति। अदःशब्दात् जसि त्यदाद्यत्वम् पररूपम्, जसः शीभावः, आद्गुणः। 'अदे' इति स्थिते एकारस्य 'एत ईद्बहुवचने' (८।२।८१) इति ईत्वं, दस्य च मत्वम्। एवम्—'अमी' इति सिद्धम्। एतस्याग्रे 'ईशाः' इतिपदे वर्त्तमाने सवर्णदीर्घे प्राप्ते "अदसोमात्" इतिसूत्रेण अदःशब्दसम्बन्धिनो मकारात्परस्य ईकारस्य प्रगृह्यसञ्ज्ञां कृत्वा 'प्लुत प्रगृह्या०' इत्यनेन प्रकृतिभावः। एवमेव—'रामकृष्णावमू आसाते' इति साधनीयम्। अत्र इकः स्थाने यणः प्राप्तिरासीत् सा दर्शितरीत्या वारिता भवति।

सूत्रे 'मात्'-ग्रहणफलं दर्शयितुमाह—'मात् किम्' इति। 'अदसः' इत्येव-सूत्रमस्त्वित्याक्षेपः। माद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः। **अमुकेऽत्रेति।** अत्रायमाशयः "अव्ययसर्वनाम्नामकच् प्राक्टेः" (५।३।७१) इत्यकचि 'अदक' शब्दात् जसि, त्यदाद्यत्वं, पररूपं, जसः शीभावः, आद्गुणः, उत्वमत्वे, एवं सति 'अमुके' इति रूपं निष्पन्नम्। यदि सूत्रे 'मात्' इति न पठ्येत तदा अत्रापि एकारस्य प्रगृह्यसञ्ज्ञा प्रसज्येत। तथासति प्रकृतिभावे कृते 'अमुके अत्र' इत्येवमनिष्टं रूपं स्यात्, तदत्र प्रगृह्यसंज्ञावारणाय माद्ग्रहणमावश्यकम्। कृते चैवं माद्ग्रहणे अत्रादःशब्दस्य एकारस्य सत्त्वेऽपि मात्परत्वाभावान्न प्रगृह्यसञ्ज्ञेति सिद्धान्तः। "असति माद्ग्रहणे" इति। अस्यायमर्थः "अदस" इत्येव सूत्रं करिष्यामः, 'ईदूदेद्द्विवचनं प्रगृह्यम्' अस्मात् सूत्रात् 'एत्' इति नानुवर्त्तयिष्यामः, किन्त्वत्र ईदूतोरेव प्रगृह्यसञ्ज्ञां विधास्यामः, एवं 'अमुके' इत्यत्र प्रगृह्यसञ्ज्ञायाः प्राप्तिरेव नास्तीति व्यर्थः परिश्रमो माद्ग्रहणस्येति जायतेऽभ्यधिका शङ्का। अत आह 'असति' इति। यदि सूत्रे 'मात्' इति न पठेम तदा '**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः**' इति न्यायेन एकसमासपदोपात्तानामीदूदेतां मध्ये द्वयोरनुवृत्तौ एतोऽप्यनुवृत्तिः प्रसक्ता न निवारयितुं शक्यते। सति तु माद्ग्रहणे अदःशब्दसम्बन्धिनो मात्परस्य एतोऽसम्भवात् द्वयोरेवानुवृत्तिः नतु एतोऽपीति एकाराननुवृत्तिफलकमेव माद्ग्रहणमिति परः सारः। **चादयोऽसत्त्वे।** चः आदिर्येषां ते चादयः। 'निपाताः' इत्यधिकृतम्। 'सत्त्व' शब्देन द्रव्यमुच्यते। चादीनां समुच्चयाद्या अर्थाः यदा चादिभिर्गम्यन्ते तदा ते लिङ्गादिभिर्नान्विता भवन्ति, यदा तु ते समुच्चयादिशब्दगम्या तदा लिङ्गादिनान्विता भवन्ति। शब्दशक्तिस्वाभाव्यात्। न सत्त्वमसत्त्वम्=अद्रव्यम्

अद्रव्येऽर्थे वाचकतया विद्यमानाश्चादयो निपातसञ्ज्ञाः स्युरित्यर्थः। प्रादयः। असत्त्व इत्यनुवर्त्तते, निपाता इति च। तथा=निपातसञ्ज्ञाः स्युरित्यर्थः। असत्त्वे किम्। 'छागः पशुः' इति चादौ पठितस्य 'पशु' शब्दस्य प्रकृते द्रव्यवाचित्वान्न निपातसञ्ज्ञा। इह तु स्यादेव 'पुष्टं पशु मन्यते' 'लोधं नयन्ति पशुमन्यमाना' इति। 'पशु' इति सम्यगर्थेऽव्ययम्।

**निपात एकाजनाङ्। १। १। १४॥** एकोऽज्निपात आङ्वर्जः प्रगृह्यः॥ इ इन्द्रः॥ उ उमेशः। वाक्यस्मरणयोरङित्॥ आ एवं नु मन्यसे। आ एवं किल तत्। अन्यत्र ङित्॥ ईषदुष्णम्॥ ओष्णम॥ **ओत्। १। १। १५।** ओदन्तो निपातः प्रगृह्यः॥ अहो ईशाः। **संबुद्धौ शाकल्यस्येतावनार्षे १। १। १६।** संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे॥ विष्णो इति॥ विष्णविति॥ विष्ण इति॥ **मय उञो वो वा ८। ३। ३३।** मयः परस्य उञो वो वा स्यादचि॥ किमु उक्तम। किमवुक्तम्॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च। ६। १। १२१।** पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि॥ ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः॥ चक्रि अत्र चक्रयत्र॥ पदान्ताः किम्॥ गौर्यौ॥ न समासे॥ वाप्यश्वः। **ऋत्यकः। ६। १। १२८।** ऋति परे पदान्ता अकः प्राग्वत् वा। ब्रह्म ऋषिः। ब्रह्मर्षिः। पदान्ताः किम्। आर्च्छत्।

निपात०। 'प्रगृह्यम्' इत्यनुवर्त्तते। तस्य पुंस्त्वेन विपरिणामः। एकश्चासावच्चेति एकाच्। कर्मधारयः। तदाह—एकोऽजित्यादि। इ इन्द्रः। उ उमेशः। अत्र सवर्णदीर्घप्राप्तिः। 'इ' इति 'उ' इति चानयोः 'चादयोऽसत्त्वे' इत्यनेन निपातसञ्ज्ञायां कृतायां 'निपात०' इत्यनेन अस्यैकाचो निपातस्य प्रगृह्यसञ्ज्ञा। ततः 'प्लुतप्रगृह्या :-' इति प्रकृतिभावे न सन्धिः। इ, उ इति सम्बोधने निपातौ। सूत्रे 'अनाङ्' इत्युक्तङकारानुबन्धस्य फलमाह—"वाक्यस्मरणयोरिति"। "आ एवम" इति। *'आ एवं नु मन्यसे' इत्यत्र वाक्यार्थत्वात् †'आ एवं किल तत्' इत्यत्र स्मरणार्थकत्वाच्च अङितः आकारस्य 'निपात एका०' इत्यनेन प्रगृह्यत्वे 'प्लुतप्रगृह्या०' इत्यनेन प्रकृतिभावे उभयत्रापि 'वृद्धिरेचि' इति प्राप्ता वृद्धिर्न भवति।

---

* पूर्वमित्थं ना मंस्थाः, इदानीन्तु मन्यसे इत्यर्थः। † स्मरणद्योतकोऽयमाकारः।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ इति । *

'आ उष्णम्' इत्यत्र ईषदर्थत्वात् आकारस्य ङित्वम्, ङित्त्वाच्च सूत्रे 'ऽनाङ्' इति पर्युदासात् आकारस्य प्रगृह्यत्वं नास्ति, अद्गुणे 'ओष्णम्' इति जातम् । 'ईषदुष्ण' मित्येतस्यैव अर्थ उक्तः । इदन्तु ज्ञेयम्—एकोऽच् यस्य स एकाच् इति बहुव्रीहिः समासस्तु नाश्रितः तथा सति 'प्रेदम्' इत्यादावपि प्रगृह्यसञ्ज्ञापत्तेः । **ओत्** । 'निपात' इत्यनुवर्त्तते । 'ओत्' इति तस्य विशेषणम् । तेन तदन्तविधिः । 'प्रगृह्यम्' इत्यप्यनुवर्त्त्य पुंस्त्वेन विपरिणाम्यश्चेति तदाह—'ओदन्त' इत्यादि । 'अहो ईशाः' 'एचो०' इति योगेन अवादेशप्राप्तौ 'ओत्' इति सूत्रेण हकारोत्तरवर्त्तिन ओकारस्थ प्रगृह्यसञ्ज्ञायां 'प्लुतप्रगृह्या' इति प्रकृतिभावः ।

**सम्बुद्धौ शाकल्यस्य०** । 'सम्बुद्धौ' इति निमित्ते सप्तमी । 'ओत्' इत्यनुवृत्तेन तस्या अन्वयः । 'प्रगृह्यम्' इत्यनुवर्त्तते 'अर्थवशाद्विभक्तेर्विपरिणाम' इति नियमेन पुंस्त्वेन तस्य विपरिणामः । ऋषिर्वेदः । तदुक्तमृषिणा इत्यादौ तथादर्शनात् । ऋषौ भवः आर्षः न आर्षः अनार्षः इति सर्वमभिप्रेत्याह—"सम्बुद्धिनिमित्तक"—इति । 'विष्णो इति' स्थिते 'सम्बुद्धौ०' इतिसूत्रेण णकारोत्तरवर्त्तिन ओकारस्य अनार्षे इति

* एतदाशयेनैव 'मुग्धबोधे' इत्थमुक्तम्—

मर्यादायामभिविधौ क्रियायोगेषदर्थयोः ।
य आकारः स ङित्प्रोक्तो वाक्यस्मरणयोरङित् ॥ उदाहृतञ्च—
आत्मबोधादैकदेशादालोक्योपरतैर्हरिः ।
आ एवं तत्त्वमर्यादा आ एवं तत्कृतं मया ॥

तत्र मर्यादा = सीमा, अभिविधिः व्याप्तिः । क्रियायोगः क्रियावाचकधातुपूर्ववर्त्तित्वम्, ईषदर्थः = अल्पार्थः । वाक्यम् = वाक्यार्थः, स्मरणं = पूर्ववाक्यार्थानुभवः । आ उपरतै ओपरतैः ईषद्विरक्तैर्जनै आ आत्मबोधात् = आत्मबोधात् आत्मज्ञानपर्यन्तम् आ एकदेशात ऐकदेशात् एकदेशं करचरणादिकं व्याप्य हरिः श्रीकृष्णः आ आलोकि = आलोकि दृष्ट इत्यर्थः । एषु मर्यादादिष्वर्थेषु वर्त्तमानत्वात् आङः सन्धिरभूत् । अथ हरिं दृष्टवता सन्तुष्टेन उपरतेन पुरुषेण उच्यते—आ एवं तत्त्वमर्यादा । आ एवं तत्त्वस्य ब्रह्मणोमर्यादाः इति वाक्यम् अतो ङित्त्वादत्र सन्धिर्न । 'तत्त्वं ब्रह्मणि तद्भावे' इति धरणिः । आ एवं तत्कृतं मया, मया अधमेनापि तद्धरिदर्शनं कृतमिति स्मरणम् अत्रापि ङित्त्वादाङो न सन्धिः । किञ्च—'**नञ निर्दिष्टमनित्यम्**' इति न्यायात् 'प्लुतस्येतौ परे सन्धिः प्लुतेकारस्य वा भवेत्' इतिवचनात् कृष्णेति । गौरीति, गौरि इति । इत्यादयः प्रयोगा अप्यनुन्धेयाः ।

शब्दे परे प्रगृह्यसञ्ज्ञायां कृतायां 'प्लुतप्रगृह्या०' इत्यनेन प्रकृतिभावः। अत्र ओकारः "ह्रस्वस्य गुणः" (७।४।१०८) इतिसम्बुद्धिनिमित्तकः। 'वा' ग्रहणात् पक्षे 'एचोऽयवायावः' इत्यनेन अव्। विष्णविति। 'लोपः शाकल्यस्य' इति सूत्रेण शाकल्यमते वलोपे 'विष्ण इति' त्रीणि रूपाणि। ओदन्तत्वेऽपि निपातत्वाभावात् अप्राप्ते विभाषेयम्।

**मय उञो वो वा**। 'मय' इति पञ्चमी, 'उञ' इति षष्ठी। 'ङमोह्रस्वादाचि०' (८।३।३२) इत्यतो 'ऽचि' इत्यनुवर्त्तते इत्याशयेन व्याख्याति—'मयः परस्य०' इति। 'किम् उक्तम्' इत्यवस्थायां 'मय०' इति सूत्रेण मकारोत्तरवर्त्तिन उकारस्य वकारः, ततो मवयोः परयोगे 'किम्वुक्तम्' इति सिद्धम्। पक्षे 'निपात०' इति सूत्रेण उकारस्य प्रगृह्यत्वे प्रकृतिभावे च कृते 'किमु उक्तम्' इति द्वितीयं रूपम्। अत्र मकारादुकारस्य उञो 'निपात एका०' इति नित्यं प्रगृह्यत्वात् प्रकृतिभावात् यणभावे प्राप्ते वचनमिदम्। अत्र— * वत्वस्याऽसिद्धत्वान्नानुस्वारः।

**इकोऽसवर्णे०**। 'इक' इति षष्ठी। 'एङः पदान्तात्' (६।१।१०९) इत्यतः पदान्तादित्यनुवर्त्तते। तस्य षष्ठ्या विपरिणामः। 'अचि' इत्यप्यनुवर्त्तते तदाह—"पदान्ता इको ह्रस्वाः" इत्यादि। 'चक्री अत्र' इत्यत्र 'इको यण०' इत्यनेन यणि प्राप्ते, अनेन असवर्णे अचि परे शाकल्यस्य मतेन ह्रस्वे कृते 'चक्रि अत्र' इति जातम्। एवमपि यण् प्राप्तौ आह—"ह्रस्वविधिसामर्थ्यात् न स्वरसन्धिः" इति। इदं भाष्यकारतम्। अस्मिन् मते प्रकृत्या इत्यनुकर्षणार्थं चकारो न कर्त्तव्यः व्यर्थत्वात्। अन्यथा यणमेव विदध्यात्। एवञ्च 'चक्रि अत्र' इति ह्रस्वसमुचितप्रकृतिभावपक्षे रूपम्। एतदभावपक्षे तु—यणि कृते 'चक्र्यत्र' इति। सूत्रे 'पदान्त' पदानुवर्त्तनस्य फलं दर्शयितुमाह—"पदान्ता इति किम्" इति। यद्याचार्यः 'पदान्ता' इति नापठिष्यत तदा 'गौरी औ' इत्यत्रापि 'इकोऽसवर्णे शाकल्यस्य०' इत्यनेन योगेन रेफोत्तरवर्त्तिन ईकारस्य ह्रस्वप्राप्तिरभविष्यत् सा च नेष्यतेऽतस्तन्निवारणाय 'पदान्ता' इत्यनुकृष्टम्। 'गौरी औ' इत्यवस्थायां तु ईकारस्य पदान्तत्वं नास्ति, तस्मात् 'इकोयणचि' इति यणेव। 'अचो रहाभ्याम्०' (८।४।४६) इति यद्वित्वे परयोगे गौर्य्यौ, द्वित्वाभावे तु गौर्यौ। इक इति किम्। खट्वेन्द्रः। असवर्णे इति किम्। कुमारीन्द्रः। शाकल्यग्रहणं पूजार्थम्। आरम्भसामर्थ्यादेव यणादेशेन सह विकल्पः सिद्ध इति **वामनः**। **न समासे** वार्तिकमिदम्। समासे उक्तः शाकलविधिर्न, ह्रस्वत्वं प्रकृतिभावश्च समासे न भवत इत्यर्थः। **वाप्यश्वः**। 'वाप्यामश्व' इति विग्रहः। शौण्डादेरा-

---

* 'मय उञो वो वा' (८।३।३३) इत्यस्य त्रैपादिकत्वात् अनुस्वारदृष्ट्या असिद्धत्वेन हल्परत्वाभावात् 'मोनुस्वारः' (८।३।२३) इत्यनेन नानुस्वारप्राप्तिरित्यर्थः। अन्यथा 'इकोयणचि' (६।१।७७) इत्यस्यानन्तरमस्य पठनेन यणोऽनुवृत्त्या एव सिद्धे वत्वविधानं व्यर्थमापद्येत इति भावः।

कृतिगणत्वात् सुप्सुपेति वा समासः । सुपोलुकि 'वापी अश्व' इति स्थिते अत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदान्तत्वात् 'इकोऽसवर्णे०' इति यकारोत्तरवर्त्तिन ईकारस्य ह्रस्वत्वं प्राप्तं समासेऽनेन निषिध्यते । ततः 'इकोयणचि' इति यणि 'वाप्यश्व' इति सिद्धम । **ऋत्यकः** । 'अक' इति षष्ठी । 'शाकल्यस्य ह्रस्वश्च' इत्यनुवर्त्तते 'अचि' इति, 'एङः पदान्तात्०' इत्यतः पदान्तात् इति चानुवर्त्तते, तस्य षष्ठ्या विपरिणामः । फलितं तदाह—'ऋति परे'-इत्यादि । ब्रह्मा ऋषिः' इत्यत्र अनेन योगेन पदान्तस्य अक्प्रत्याहारान्तःपातिनो मकारोत्तरवर्त्तिन आकारस्य ह्रस्वभावे कृते "ब्रह्मऋषिः" इति जातम । पक्षे 'आद्गुण' इति पूर्वपरयोः स्थाने गुणे रपरे च कृते सति 'ब्रह्मर्षिः' इति द्वितीयं रूपम् । पदान्तपदानुकर्षणफलं दर्शयन्नाह—'पदान्ताः किम्' इति । उत्तरमाह--आर्च्छत् । 'ऋ' गतौ । अस्मात् लङ्, तिप्, शप् । "प्राघ्राध्मा" ( ३ । १ । १३७ ) इति सूत्रेण ऋच्छादेशः । 'इतश्च' (३।४।१००) इत्यनेन ईकारलोपः । 'आडजादीनाम्' ( ६ । ४ । ७२ ) इत्याडागमः । 'आटश्च' ( ६ । १ । ९० ) इतिवृद्धिरितिवस्तुस्थितिः । यदि सूत्रे 'पदान्त' ग्रहणं न कुर्वीमहि तदा 'आ ऋच्छत्' इत्यवस्थायाम् आकारस्य अको वा प्रकृतिभावसमुच्चितो ह्रस्वः स्यात्, सूत्रे पदान्तग्रहणे तु अत्र पदान्तत्वाभावात् नैव ह्रस्व इत्येतदर्थं पदान्तग्रहणमावश्यकमिति भावः ॥

इत्यच्सन्धिः * ॥

प्रसङ्गसङ्गत्या द्रव्यस्य लक्षणमाह—**वस्त्विति** । अत्रोपलक्षणशब्दार्थः वक्तव्यांशैकदेशोच्चारणम्, नतु अविद्यमानं सत् व्यावर्त्तकम् । "भू सत्तायाम्" सत्ताद्यर्थस्तूपलक्षणमित्यादावप्ययमेवार्थो बोध्यः ॥

अथ हल्सन्धिः ॥

**स्तोः श्चुना श्चुः । ८ । ४ । ४० । सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः ॥ हरिश्शेते । रामश्चिनोति सच्चित् । शार्ङ्गिञ्जय ॥ शात् । ८ । ४ । ४४ । शात्परस्योक्तं न स्यात् । विश्नः । प्रश्नः । ष्टुना ष्टुः । ८ ४ । ४१ । स्तोः ष्टुना योगे ष्टुः । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥ न पदान्ताट्टोरनाम् । ८ । ४ । ४२ । पदान्ताट्टवर्गात् परस्य स्तोष्टुर्न ॥ षट्-**

---

* स्वरसन्धिरित्यर्थः । 'अच्सन्धिः' इत्यत्र 'सिद्धमनच्त्वात्' इति वार्त्तिके प्रयोगेण 'अल्पाच्तरम्' ( २ । २ । ३४ ) इतिसौत्रप्रयोगेण 'कथमनच्त्वम्' इति भाष्यप्रयोगेण च वृत्तिघटकाच्पदे पदान्तकार्यस्य तत्सान्निधानेन स्तुत्वस्य चाभावो बोध्यत इति केचिदिति 'शब्देन्दुशेखरे ।

सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् ॥ अनाम्नवतिनगरीणामुपसंख्यानम् ॥ षण्णाम् । षण्णवतिः । षण्णगर्यः ॥ तोः षि । ८ । ४ । ४३ । न ष्टुत्वं । सन् षष्ठ ॥ **झलां जशोऽन्ते** । ८ । ४ । ३९ । पदान्ते झलां जशः स्युः । वागीशः । चिद्रूप ॥ **यरोऽनुनासिकेऽनुनासिको वा** । ८ । ४ । ४५ । यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा । एतन्मुरारिः, एतद्मुरारिः स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः ॥ **प्रत्यये भाषायां नित्यम्** ॥ तन्मात्रम् । चिन्मयम् ॥ **तोर्लि** । ८ । ४ । ६० ॥ परसवर्णः ॥ तल्लयः ॥ विद्वांल्लिखति । नस्याऽनुनासिको लः ॥ **उदः स्थास्तम्भोः पूर्वस्य** ८ । ४ । ६१ ॥ उदः परयोः स्थास्तम्भोः पूर्वसवर्णः । तस्मादित्युत्तरस्य १ । १ । ६७ । पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥ **आदेः परस्य** १ । १ । ५४ ॥ परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । अघोषस्य महाप्राणस्य विवारस्य श्वासस्य सस्य तादृश एव थकारः ॥ **झरो झरि सवर्णे** ॥ ८ । ४ । ६५ ॥ हलः परस्य झरो लोपो वा सवर्णे झरि ॥ **खरि च** ॥ ८ । ४ । ५५ ॥ झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ॥

**स्तोश्चुनाश्चुः** । स् च तुश्च अनयोः समाहारः स्तुः । पुंस्त्वमार्षम् । तस्य स्तोः । एवं 'श्चुना' 'श्चु'रित्यपि बोध्यम् । 'श्चुना' इति सहार्थे तृतीया । 'योगे' इत्यध्याहार्यम् । अस्मादेव निर्देशात् 'सह' शब्दाभावेऽपि तदर्थे गम्यमाने तृतीया । इति सर्वमभिप्रेत्याह—'सकारतवर्गयो' रित्यादि । अत्र स्थान्यादेशयोर्यथासङ्ख्यम्, निमित्तकार्यिणोस्तु न, 'शात्' ( ८ । ४ । ४ ) इति ज्ञापकात् । एवञ्च – सकारस्य शकारः तवर्गस्य चवर्गः । तत्रापि—त थ द ध नानां क्रमेण च छ ज झ ञाः भवन्ति इति फलितम् । तथदधनेत्यादिक्रमो ऽप्यनादिलोकसिद्धः । 'श्चुना योगे' इत्यत्र यथासङ्ख्यानाश्रयणे सकारस्य तवर्गस्य शकारेण च वर्गेण च यथासम्भवं योगेऽपि 'श्चुत्वम्' हरिस् शेते' इति स्थिते सकारस्य शकारेण योगात् 'स्तोःश्चुनाश्चुः' इत्यनेन सकारस्य शकारः सञ्जातः ततः *'हरिश्शेते' इति जातम् । श्चुना योगे यथासङ्ख्यं नाश्रितमिति दर्शयितुं

---

*'वा शरि' (८ । ३ । ३६) इति पाक्षिकत्वात् 'विसर्जनीयस्य सः' (८ । ३ । ३४) इति सः तस्य शेन योगे शः । पक्षे 'हरिः शेते' इति वक्ष्यति ॥

सकारस्य चकारयोगे उदाहरणमाह—'रामश्चिनोति' इति। अत्र 'रामस् चिनोति' इत्यवस्थायामुक्तेन सूत्रेण सस्य चवर्गान्तर्गतचकारयोगात् शकारः । यदि तु 'श्चुना योगे इत्यस्मिन्नंशेऽपि यथासङ्ख्यमाश्रीयेत तदा सकारस्य शकारयोगाभावात् शकारो न स्यादिति हृदयम् । 'सत् चित्' इत्यत्र तवर्गान्तर्वर्त्तिनः तकारस्य स्थाने चवर्गसम्बन्धिनः सर्वेऽपि प्राप्ताः । परं दर्शितरीत्या यथासङ्ख्यत्वात् तकारस्य चकारे 'सच्चित्' इति रूपम् । वस्तुतस्तु—'सत् चित' इत्यवस्थायां त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्' इति नियमेन (८।२।३९) जश्त्वापेक्षया श्चुत्वस्य (८।४।४०) असिद्धत्वात् पूर्वं जश्त्वेन तकारस्य दकारः, तस्य श्चुत्वेन जकारे कृते 'खरिच' (८।४।५५) इति चर्त्वेन जकारस्य चकारे कृते सच्चित्' इति साधनीयम् । 'शार्ङ्गिन् जय' इति स्थितेऽत्र तवर्गस्य चवर्गेण योगात् तवर्गान्त्यस्य नकारस्य चवर्गान्त्यो ञकारः संवृत्तः, ततः "शार्ङ्गिञ्जय" इति रूपं भूतम् । एवमेव – 'कस् शुभः, तत् शेते, तत् चरति, तत् छादयति, तत् जयति, यज् नः, तद् झाषयति, इत्यादीनि यथाक्रमं कश्शुभः, तच्शेते, तच्चरति, तच्छादयति, तज्जयति यज्ञः, तज्झाषयति इत्यादिरूपाणि सिद्धानि भवन्ति

**शात्** । 'न पदान्तात्'–(८।४।४२) इत्यतः 'न' इत्यनुवर्त्तते । 'स्तोः०' इत्यतः 'तोः' इति 'चु' इति च । सकारः शकारश्च नानुवर्त्तते । 'शात्' इति पञ्चमी दिग्योगे । तदाचष्टे—'शात्परस्ये'ति । तवर्गस्य चुत्वं न स्यादित्यर्थः । * 'विश्नः' इत्यत्र 'स्तोःश्चुना०' इत्यनेन शकारयोगे नकारस्य तवर्गत्वात् प्राप्तो ञकारः 'शात्' इति योगेन शकारात् परत्वात् तवर्गान्तःपातिनो नकारस्य चवर्गान्तःपाती ञकारो निषिद्धः । किन्तु नस्य 'न' एव स्थितः । एवमेव 'प्रश्नः' इत्यपि ज्ञेयम् ।

**ष्टुनाष्टुः** । अत्रापि—ष् च टुश्चानयोः समाहारः ष्टुः । पुंस्त्वं सौत्रं पूर्ववत् । 'स्तोः' इत्यनुवर्त्तते । इहापि कार्यिनिमित्तयोर्यथासङ्ख्यं नास्ति, 'तोः षि' इति ज्ञापकात् किन्तु स्थान्यादेशानामेव तत् इत्याशयेन व्याख्याति—'स्तोः ष्टुना०' इति । 'रामस् षष्ठः' इति स्थिते अनेन सूत्रेण सकारस्य षकारेण सह योगात् षकारे कृते परयोगे च 'रामष्षष्ठः' इति सिद्धम् । अत्रापि ष्टुना योगे यथासङ्ख्यं नाश्रितमिति स्पष्टीकर्त्तुं सकारस्य टवर्गयोगेऽपि उदाहरति—'रामष्टीकते' इति । 'रामस् टीकते' इति स्थिते 'ष्टुना ष्टुः' इति सूत्रेण सकारस्य टवर्गीयटकारयोगे सति षकारः । 'तत् टीका' इत्यत्र उक्तेन सूत्रेण तस्य टत्वे 'तट्टीका' इति सिद्धम् । 'तस्य टीका' इति विग्रहः ।

---

* 'विच्छ' गतौ । अस्मात् धातोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३।३।९०) इति 'नङ्' प्रत्ययः 'च्छ्वोःशूठ्'–(६।४।१९) इति छस्य शः । ङित्त्वात् गुणाभावः । अत्र शकारयोगात् तवर्गीयस्य नकारस्य श्चुत्वेन ञकारे प्राप्ते 'शात्' इत्यनेन तन्निषेध इत्यर्थः । एवम्—'प्रच्छ' ज्ञीप्सायाम् । अस्मादपि पूर्ववदेव नङादि ज्ञेयम् ।

'चक्रिन् ढौकसे' इत्यत्र तवर्गीयनकारस्य टवर्गीयटकारयोगे ष्टुत्वेन यथासङ्ख्यत्वात् णकारः सञ्जातः, ततः परयोगे च कृते 'चक्रिण्ढौकसे' इति रूपम् ।

**नपदान्तात्०** । 'अनाम्' इति 'तो' रित्यस्य विशेषणम् । तच्च लुप्तषष्ठीकं बोध्यम् । नामवयवभिन्नस्येत्यर्थः । 'स्तोः ष्टुः' रित्यनुवर्त्तते इत्याशयेनाह—'पदान्तात्०' इति । 'षट् सन्तः' इति स्थिते 'ष्टुनाष्टु' रितिसूत्रेण सस्य षत्वं प्राप्तम्, 'न पदान्ताट्टोरनाम्' इति सूत्रेण निषिध्यते अर्थात् पदान्तात् टवर्गात् परस्य सस्य षत्वं न जातं, किन्तु 'षट् सन्त' इत्येव साधु। एवमेव षट् ते' इत्यपि । अत्र तवर्गस्य टकार-प्राप्तिर्निषिद्धा । सूत्रे 'पदान्तात्' इति पदस्य फलं दर्शयितुमाह—'पदान्तात्०' इति । किमर्थं पदान्तग्रहणं कृतमिति प्रश्नः । उत्तरार्थमाह —' ईट्टे' इति । अयमाशयः 'ईड' स्तुतौ धातुः । आत्मनेपदी च । तत्र 'ईड् ते' इत्यवस्थायां जातायां 'खरि च' ( ८ । ४ । ५५ ) इतिसूत्रेण डस्य चर्त्वेन टकारः, ततः परस्य तवर्गीयतकारस्य 'ष्टुनाष्टुः' इति—योगेन ष्टुत्वेन टकार एव जातः नतु 'न पदान्तात्०' इति निषेधः तकारस्य टवर्गात् परत्वेऽपि पदान्तात्परत्वं नास्ति अतो न ष्टुत्वनिषेधः, यदि 'न टोर-नाम्' इत्येव सूत्रं पठ्येत तदाऽत्रापि निषेधः प्रवर्त्तेतेति भावः । सूत्रे 'टो०' इत्यस्य फलं ज्ञातुं पृच्छति—* टोः किम्' इति । तत्फलं दर्शयति—'सर्पिष्टमम्' इति ।

---

* अस्ति तावत् 'परस्परान्वितपदार्थानां सहैव प्रवृत्तिनिवृत्ती भवत' इत्यर्थिका 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्ति'रिति परिभाषा । अत्र 'वा' शब्द एवकारार्थे । अनया परिभाषया 'न पदान्ताट्टोरनाम्' इत्यतः सूत्रात् पूर्ववर्त्तिनः 'ष्टुनाष्टु' रिति सूत्रात् 'ष्टुना' इत्यनुवर्त्य 'पदान्तात्' इत्यनेन सामानाधिकरण्य-लाभाय पञ्चम्या विपरिणमय्य 'पदान्तात् षकारटवर्गात् परयोः स्तोः ष्टुर्न स्यात्' इत्यर्थे परिकल्पितेऽपि पदान्तषकारस्य जश्त्वेन डकारस्यैव सम्भवात् ततः परस्य ष्टुत्व-निषेधस्य इष्टत्वेनातिप्रसङ्गाभावात् सूत्रे 'टो' रिति ग्रहणं व्यर्थमेवेति शङ्काकर्तुराशयः । अयं नियमो नःसार्वत्रिक इत्याशयेन समाधत्ते -'सर्पिष्टमम्' इति । अत्र 'ह्रस्वात्तादौ तद्धिते' (८ । ३ । १०१ ) इत्यनेन विहितस्य षत्वस्यासिद्धत्वात् जश्त्व ( ८।२।३९ ) प्रवृत्तिरेव नास्ति इति पदान्तषकारादपि ष्टुत्वनिषेधस्य अप्रवृत्तिरायास्यति, येन सर्पिष्टमम्' इति न सेत्स्यति, अतोऽस्य प्रयोगस्य सिद्धयै सूत्रेऽस्यावश्यकं टोर्ग्रहणमिति भावः।

यदि तु —'एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते' इति परिभाषान्तरं पठयते तदा 'ष्टुना' इत्यतः एकदेशस्य 'टो'रित्यस्यैव अनुवृत्तिः, 'ष्टुना' इत्य-समस्तमेव च ततोऽपि 'टो' रेवानुवृत्ति, एवमनुवृत्त्या 'पदान्तात् टवर्गात्' इत्यर्थस्यैव लाभात् 'सर्पिष्टमम्' इत्यादौ नैव दोष इत्युच्येत तदा टोर्ग्रहणं न कर्त्तव्यम् ( न पदान्ता-दनाम्' इत्येवमेव सूत्रमस्तु ) अदृष्टार्थं वा तदिति दिक् ।

'सर्पिष् तमम्' इत्यवस्थायां 'स्वादिष्वसर्वनामस्थाने' (१।४।१७) इति सूत्रेण अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य वा पदसञ्ज्ञायां जातायां षकारस्य पदान्तत्वात् तत उत्तरस्य तकारस्य ष्टुत्वनिषेधो नैव प्रवर्त्तते, पदान्तात् टवर्गाभावात् (प्रकृते तु पदान्तः टवर्गोऽस्ति) जाते च ष्टुत्वे 'सर्पिष्टमम्' इति रूपं सिद्धम्। **अनाम्नवतिनगरीणामुपसङ्ख्यानम्**। सूत्रे 'अनाम्' इत्युक्तम्, तदल्पम् किन्तु नवत्यादित्रिकं पठनीयमित्यर्थः। नामनवतिनगरीसम्बन्धवर्जिततवर्गस्य टवर्गो न स्यादिति सूत्रार्थोऽङ्गीकार्य इति सारः। तथाच—'षष् नाम्' इत्यवस्थायां 'स्वादिष्वसर्वनामस्थाने' इत्यनेन पदसञ्ज्ञासत्त्वे 'झलां जशोऽन्ते' (८।२।३९) इति जश्त्वेन डकारः। ततः 'अनाम्' इत्यादिपर्युदासोक्तेः प्रकृते 'नाम्'सम्बन्धिनो नस्य 'ष्टुनाष्टु' रिति णत्वे 'यरोऽनुनासिके०' (८ ४।४५) इति विकल्पं बाधित्वा 'प्रत्यये भाषायां नित्यम्' इति वार्त्तिकेन डकारस्य नित्यमनुनासिको णकारः। षण्णाम् इति सिद्धम्। एवमेव 'षड् नवतिः, षड् नगर्यः' इति कृत्वा * षण्णवतिः षण्णगर्य इति साधनीयम्। अर्थात् अत्रापि नकारस्य न ष्टुत्वनिषेधः, नवतिनगरीशब्दयोरपि पर्युदासात्। 'षडधिका नवति' रितिविग्रहः। षण्णगर्यः इति पृथक्पदे। **तोः षि**। 'ष्टु' रिति नेति चानुवर्त्तते। तदाह—तवर्गस्येति। 'सन् षष्ठः' इति स्थिते 'ष्टुना ष्टु' रित्यनेन नकारस्य षकारयोगात् प्राप्तं ष्टुत्वं निषिद्धम्। अस्मादेव ज्ञापकात् 'ष्टुना ष्टु' रिति सूत्रे ष्टुना योगे यथासङ्ख्यं नास्तीति ज्ञायते इति नैव विस्मरणीयम्। **झलां जशोऽन्ते**। 'पदस्य' इत्यधिकृतम् अतो व्याख्याति–पदान्त इति। 'वाक् ईशः' इत्यवस्थायाम् अनेन सूत्रेण झल्प्रत्याहारान्तर्वर्तिनः ककारस्य स्थाने जशः पञ्चापि आदेशभूता वर्णाः प्राप्ताः 'स्थानेऽन्तरतम' इति नियमेन कण्ठस्थानकस्य ककारस्य स्थाने तादृशो जश्सम्बन्धी गकार एव जातः, ततः परयोगे "वागीश" इति सिद्धम्। 'वाच ईश' इति विग्रहः। वागीशो विद्वान् देवगुरुर्वा। एवम्–'चित्रूपम्' इति स्थिते पदान्तझलन्तर्वर्त्तिनः तकारस्य स्थानसाम्यात् जशन्तर्वर्त्तिनि दकारे संवृत्ते 'चिद्रूपम्' इति भवति। चिद्रूपम् = ब्रह्म।

**यरोऽनुनासिकेऽनुनासिको वा**। 'न पदान्ताट्टो' रित्यतः 'पदान्तात्' इत्यनुवर्त्तते। तस्य षष्ठ्यन्तत्वेन विपरिणामः इत्यतो व्याचष्टे—'यरः पदान्तस्य०' इति। 'एतद् मुरारिः' इति स्थिते 'यरः' इति सूत्रेण यरन्तर्वर्त्तिनो दकारस्य स्थाने सर्वेषामनुनासिकानां प्राप्तिः, ततः 'स्थाने०' इति नियमेन दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च दकारस्य नकारे जाते 'एतन्मुरारिः' इति रूपम्। पक्षे—'एतद्मुरारिः' इत्यपि।

---

* 'यरोऽनुनासिके ऽनुनासिको वा' इत्यनुनासिकाभावपक्षे षड् नवतिः षड् नगर्य इति रूपान्तरमपि।

"स्थानप्रयत्नाभ्याम्" इति। *चतुर्+मुखः इत्यत्र 'यरो॰' इति सूत्रेण पदान्तस्य यरो रेफस्य अनुनासिके मकारे परे 'ऋटुरषाणां मूर्धा' इति शिक्षाबलात् रेफणकारयो मूर्धस्थानसाम्यात् णकार आदेशः प्राप्नोति इति जायते शङ्का। तत्परिहारं हृदि कृत्वा सिद्धान्तफक्किकां लिखति—स्थानेति। अस्यायमाशयः—अस्ति हि 'स्थानेन्तरतम उरण्रपरः' इति संहितापाठः। अत्र 'अन्तरतमे' इति सप्तम्यन्तपाठाश्रयणे 'अन्तरतमे =सदृशतमे स्थानिनि आदेशः स्यात्' इत्यर्थाश्रयणेन प्रत्यादेशं लक्षणोपप्लवाङ्गीकारे 'णकार आदेशः स्वसदृशतमे स्थानिनि स्यात्' इत्येकवाक्यतयार्थः फलति, अतः णकारः स्वकीय-मूर्धस्थानस्पृष्टप्रयत्नाभ्यामन्तरतमे स्पर्शे (षण्णाम्,षण्णवतिः इत्यादौ) टवर्गे चरितार्थ इति केवलं मूर्धस्थानसमे रेफे न प्रवर्त्तते। अतः चतुर्मुख इत्यत्र न णकार इति फक्किकार्थः। यदि तु—'यरोऽनुनासिके ऽनुनासिको वा' इत्यत्र 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रात् 'सवर्ण' पदमपकृष्येत तदा 'यस्य यरः सवर्णोऽनुनासिको भवति तस्यैवानुनासिकः' इति लक्षणस्योपप्लवे कृते "रेफोष्मणां सवर्णा न सन्ति" इति भाष्योक्तेः रेफस्य सवर्णानु-नासिकाभावात् अत्र लक्षणप्राप्तिरेव नास्तीति सर्वं निरवद्यम्। अतिकल्पना बालबुद्धि-व्याकुलताभयान्न कृता। अचरदृष्ट्या अत्यन्तं सरलः फक्किकार्थस्तु—'एतन्मुरारिः' इत्यादौ स्थानतः प्रयत्नतश्च अन्तरतमे स्पर्शे चरितार्थोऽयमनुनासिकविधिः केवलं स्थानेन आन्तर्यमादाय रेफे प्रवृत्तिं नार्हति। पदान्तस्येत्येव। वेद्मि। **प्रत्यये भाषायाम्॰।** वार्त्तिकमिदम्। अत्र वेदभिन्नः प्रयोगो 'भाषा' शब्देन व्यवह्रियते भाषायां = लौकिके प्रयोगे प्रत्यये विद्यमाने ऽनुनासिके परतोऽनुनासिको नित्यं स्यादित्यर्थः। तत् प्रमाणं यस्य तत् तन्मात्रम् अत्र 'तत्' शब्दात् 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (५।२।३७) इति सूत्रेण प्रमाणेऽर्थे 'मात्रच्' प्रत्ययः। 'तद् मात्रम्' इति स्थिते उक्तेन वार्त्तिकेन स्थानसाम्यमादाय तादृश एवानुनासिको नित्यं नकारः। एवमेव—'चिन्मयम्' इत्यपि। 'चित्' शब्दात् 'नित्यं वृद्धशरादिभ्यः' (४।३।१४४) इतिसूत्रे 'नित्यम्' इति योगं विभज्य ताद्रूप्ये मयट् प्रत्ययः। चिदेव चिन्मयम्। 'चिद् मयम्' इत्यसिद्धं रूपम्। 'मदोदग्राः ककुद्मन्तः' इति तु यवादिगणे दकार-निपातनात्। "अवसाने च यरो वाद्वे भवत इति वक्तव्यम्"। वाक्। वाक्क्। षट्।

---

†"स्थानेऽन्तरतमः उरण्रपरः" इति प्रथमान्तसंहितापाठपक्षे आदेशस्यान्तर-तमो यः स्थानी तत्रैव षष्ठी उपसंहर्त्तव्या, यत्रैव षष्ठी तत्रैवादेश इति सूत्रार्थेन प्रकृतिर्नि-यम्यते। तथाच—'स्थानिनामन्तरतम आदेशो भवति' इत्यर्थस्य फलितत्वात् यत्रानेक विधमान्तर्यं तत्र स्थानत आन्तर्यं बलीय इति परिभाषया ऽन्यान्तर्यापेक्षया स्थानकृतान्त-र्यस्य बलवत्त्वबोधनेन चतुर्मुख इत्यादौ मूर्धस्थानजन्यरेफस्थानेऽन्यादेशापेक्षया मूर्धस्थान-जन्यत्वसमानाधिकरणनासिकास्थानजन्यत्वेन सादृश्यात् तादृशणकाररूपोऽनुनासिकः स्यादिति प्रथमान्तपाठमाश्रित्याक्षेपः।

षट्। तोर्लि:। 'अनुस्वारस्य ययि०' इत्यतः 'परसवर्ण इत्यनुवर्त्तते। तवर्गस्य लकारे परे परसवर्णः स्यादिति सूत्रार्थः। 'तद् लयः' इति स्थिते अनेन तवर्गान्तर्गतस्य दस्य स्थाने लकारसवर्णाः सर्वे दन्त्याः प्राप्ताः, परमत्र स्थानतः सावर्ण्यं परित्यज्य प्रयत्नतः सावर्ण्यं ग्राह्यम्, तत्रैवं सति 'वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणा' इत्यनेन अल्पप्राणप्रयत्नवतो दकारस्य स्थाने तादृशयणन्तर्गतोऽल्पप्रयत्नवान् लकारः। तस्य च परयोगे कृते "तल्लयः" इति सिद्धम्। एवं 'विद्वान् लिखति' इत्यत्र नकारस्य स्थानिनः अनुनासिकस्य परसवर्णोऽनुनासिको जायमान आन्तर्यादनुनासिक एव लकारो जातः 'अनुनासिकाननुनासिकभेदेन यवला द्विधा इत्युक्तत्वात्। इत्याशयेनाह—"नस्य" इति। ततश्च—"विद्वाँल्लिखति" इति सिद्धम्। एवं 'तल्लुनाति, भवाँल्लुनीते' इत्याद्या अपि ज्ञेयाः। **उदः स्थास्तम्भोः०**। अत्र—'अनुस्वारस्य ययि' इत्यत समासे निर्दिष्टमपि 'सवर्ण' पदं निष्कृष्यते एकदेश एव स्वरितत्वप्रतिज्ञानात्। 'उद' इति पञ्चमी। 'तस्मादित्युत्तरस्य' इति परिभाषया 'उदः परयो'रित्यर्थलाभः अतो व्याचष्टे—'उदः परयोः'—इति। **तस्मात्०**। पञ्चम्यन्तानुकरणमिदम्। तदाह—'पञ्चमीनिर्देशेन' इत्यादि। **आदेः परस्य**। स्पष्टम्। 'उद् स्थानम्' इत्यवस्थायां 'उदः स्था०' इति प्राप्तिः। यतोऽत्र उदः परः स्थाशब्दो वर्त्तते, तस्य प्राप्तः पूर्वसवर्णः कुत्र स्यादित्यपेक्षायां 'तस्मादित्युत्तरस्य' इति परिभाषया वर्णान्तरव्यवधानरहितस्य परस्य 'स्था' इत्यस्य स्थाने स्यात् इत्यागतम्। परन्तु उदः परं यत् 'स्था' इति, तत्र (हलौ) द्वौ वर्णौ वर्त्तेते सकारः थकारश्च, एवञ्च सकारात्परस्य थकारस्य पूर्वसवर्णविधिनिमित्तभूतो यो दकारः,ततसवर्णो य आदेशः तत् प्राप्तिः स्यात्। ततः सूत्रं प्रवर्त्तते "आदेः परस्य" इति। परस्य अर्थात् प्रकृते थकारस्य यत् विहितं पूर्वदकारसवर्णरूपं कार्यं तत् तस्य थकारस्य अर्थात् थकारापेक्षया आदेः सकारस्य बोध्यम् = भवेदित्यर्थः। एवञ्च सकारस्यैव स्थाने पूर्वसवर्णो विधातव्यः, इत्थं सतीदं चिन्तनीयं भवति यत् पूर्वसवर्णविधिनिमित्तदकारसवर्णेषु तथदधनेषु प्राप्तेषु युगपदेकस्थानिकानेकादेशासम्भवात् तेषां मध्ये क इहादेशः स्यादिति सन्देहोपस्थितौ समाधानमुच्यते। "अघोषस्य'—इति। अयमाशयः। सकारथकारयो र्दन्तस्थानकत्वेन विवारश्वासाघोषमहाप्राणप्रयत्नवत्त्वेन च सादृश्यात् 'स्थानेऽन्तरतम' इत्यनेन सकारस्थाने थकार एवादेशो भवेत्, जाते च थकारे 'उद् थ् थानम्' इत्यवस्थायां 'झरोझरि सवर्णे' (८।४।६५) इत्यनेन (एकस्मिन् पक्षे) तस्य लोपे सति 'उद् थानम्' इति जाते 'खरि च' (८।४।५५) दकारस्य चर्त्वेन तकारे एकथकारम 'उत्थानम्' इति रूपं सिद्धम्। लोपाभावपक्षे तु थकारस्यैव श्रवणं ननु 'खरिच' इति चर्त्वम् चर्त्वं (८।४।५५) प्रति थकारस्य (८।४।६१) असिद्धत्वात् = खरिचेतिसूत्रापेक्षया उदस्थादिति सूत्रस्य परत्वादिति भावः। एवञ्च—एकतकारं द्विथकार-

मित्यपरं 'उत्‌थ्थानम्' इत्याकारकं रूपं ज्ञेयम् । एवम्—'उद् स्तम्भनम्' इति स्थिते पूर्ववदेव सूत्रप्राप्तिक्रमो ज्ञेयः । किन्तु एकं रूपमेकतकारमेकथकारम् यथा—'उत्थम्भनम्' इति, अपरञ्च द्वितकारं यथा—'उत्तम्भनम्' इति विशेषः । *

झयो होऽन्यतरस्याम् ८ । ४ । ६२ ॥ झयः परस्य हस्य वा पूर्वसवर्णः । संवारस्य नादस्य घोषस्य महाप्राणस्य हस्य तादृशो वर्गचतुर्थः । वाग्घरिः । वाग्हरिः ॥ शश्छोऽटि ८।४।६३ ॥ पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । तच्छिवः । तच्शिवः । पदान्तातिकम् । विरप्शम ॥ छत्वममीति वाच्यम् । तच्छ्लोकेन । मोनुस्वारः ८ । ३ । २३ ॥ मान्तस्य पदस्यानुस्वारो हलि ॥ हरिं वन्दे । पदस्य किम । गम्यते ॥ नश्चापदान्तस्य झलि । ८ । ३ । २४ ॥ नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते । झलि किम । मन्यते ॥ अनुस्वारस्य ययि परसवर्णः । ८ । ४ । ५८ ॥ शान्तः । अङ्कितः ॥ वा पदान्तस्य ॥ ८ । ४ । ५९ । त्वङ्करोषि । त्वंकरोषि ॥ मो राजि समः क्वौ ८ ।३।२५॥ क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ हे मपरे वा ३ । ३ २६ ॥ मपरे हकारे मस्य मो वा । किम्ह्मलयति । किंह्मलयति ॥ यवलपरे यलवा वा । किय्ँह्यः किंह्यः । किव्ँह्वलयति किंह्वलयति । किल्ँह्लादयति । किंह्लादयति । नपरे नः ८ । ३ । २७॥ नपरे हकारे नस्य नो वा । किन्ह्नुते । किंह्नुते ॥ ङः सि धुट् ८ । ३ । २९ ॥ ङान्तस्य सस्य धुड् वा ॥ आद्यन्तौ टकितौ १ । १ । ४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः । षट्सन्तः ॥

---

* 'उत्थानम्' उत्पूर्वकात् 'ष्ठा' गतिनिवृत्तौ । अस्माद्धातोः भावे ल्युट् । 'उत्तम्भनम्' इति उत्पूर्वकात् 'ष्टभि' प्रतिष्टम्भे । अस्मात् भावे ल्युट् । उत्थानादिप्रयोगाणां सरलः साधनप्रकारः शाकटायने यथा—'उदः स्थास्तम्भः' (१।१।१३४) उदः परयोः स्थास्तम्भोर्धातोः सकारस्य लुग् भवति जरि परे । एवं सकारस्य लुकि कृते 'चर्०' (१ । १ । १३५) जरः स्थाने चरादेशो भवति जरि परे इति उदो दकारस्य चर्त्वम् । उत्थितः । उत्तम्भितम् । स्थास्तम्भोरिति किम् । उत्स्नातः ।

**झयोहो०**। 'झय' इति पञ्चमी। ह इति षष्ठी। 'उदः स्था०' इत्यतः पूर्वस्य 'अनुस्वारस्य०' इत्यतः सवर्ण इति चानुवर्त्तनीयं मत्वा सूत्रं व्याचष्टे—"झयः परस्य" इति। 'वाक् हरिः' इति स्थिते 'झलां जशोऽन्ते' इति जश्त्वेन गकारे 'वाग् हरिः' इति जाते सति 'झयो होऽन्यतरस्याम्' इति सूत्रेण झयः परस्य हकारस्य पूर्वसवर्णप्राप्तिः। अत्र 'वाक्' इत्यस्य ककारो झय्, ततः परो 'हरि'रित्यस्य हकारः, तस्य स्थाने सर्वेऽपि क ख ग घ ङ इति ककारसवर्णाः प्राप्ताः यतस्तेषां हकारेण स्थानिनः स्थानत आन्तर्यमविशिष्टं 'अकुहविसर्जनीयानां कण्ठः' इति। परन्तु—आभ्यन्तरप्रयत्नसाम्यं पञ्चानामपि स्थानिनां हकारेण नैवास्ति स्पृष्टविवृतप्रयत्नभेदात्, अतः आन्तरतम्यपरीक्षया निर्वाहं कर्तुमाह—"संवारस्य०" इति। 'हशः संवारोनादो घोषश्च' इति संवारनादघोषप्रयत्नवता हकारेण 'वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणा' इत्युक्तेः महाप्राणप्रयत्नवता च तेन (संवारनादघोषमहाप्राणप्रयत्नचतुष्टयवता हकारेण स्थानिना) तादृश एव संवारनादघोषमहाप्राणप्रयत्नचतुष्टयवान् आदेशो घकारो भवति। इत्थं 'वाग्घरिः' इति रूपम्। पूर्वसवर्णाभावपक्षे तु—'वाग् हरिः' इति। केचित्तु—'वाच् हरिः' इति स्थापयित्वा 'चोःकुः' (८।२।३०) इति कुत्वे कृते 'वाक् हरिः' इति जाते दर्शितरीत्या हकारस्य घकारे कृते पश्चात् 'झलां जशोन्ते' इत्यनेन स्थानसाम्यात् पदान्ते वर्त्तमानस्य ककारस्य स्थाने 'गं' कृत्वा 'वाग्घरिः' पक्षे तथैव गकारे कृते 'वाग्हरिः' इति साधयन्ति, एवमपि फले नैव विशेषं प्रक्रियादोषञ्च पश्यामः। **शश्छोऽटि**। 'झय' इति पञ्चम्यन्तमनुवर्त्तते। 'पदान्तात्' इति च। 'श' इति षष्ठ्येकवचनम्। तदाह—"पदान्तात्०" इति। 'तद् शिव' इति स्थिते 'स्तोः श्चुना श्चुः' इत्यनेन यथासङ्ख्यत्वात् दस्य चुत्वेन जकारः। तस्य 'खरि च' इति चर्त्त्वेन जकारस्य चकारः। 'तच् शिव' इति जाते सूत्रं प्रवर्त्तते—"शश्छोऽटि" इति। अत्र पदान्तात् झय्प्रत्याहारान्तर्वर्त्तिनश्चकारात्परस्य शस्य अट्प्रत्याहारान्तर्वर्त्तिनि शकारोत्तरवर्त्तिनि इकारे परे छकारो जातः, ततः "तच्छिवः" इति सिद्धम्। छत्वाभावपक्षे तु 'तच् शिवः' इत्येव। स चासौ शिवस्तच्छिवः, तस्य शिवो वा तच्छिवः इति द्वौ विग्रहौ। पदान्तानुवृत्तिफलं पृच्छति—"पदान्तात् किम्" इति। उत्तरमाह—"विरप्शम्" इति। 'मध्वश्चोतन्त्यभितो विरप्शम्' इति वेदमन्त्रः। विपूर्वकादपेरौणादिकः शः प्रत्ययः। यदि पदानुवृत्तिर्न स्यात् तदा झयन्तर्वर्त्तिनः पकारात् परस्य प्रत्ययभूतशकारस्यापि छकारः स्यात् तत्परेऽपि अट्प्रत्याहारान्तर्गतोऽकारोऽस्त्येव। परन्तु 'अप्' इति पकारः झय् सन्नपि पदान्तो नास्ति अतोऽत्र तत्परस्य शस्य नैव छकार इत्येतदर्थं 'पदान्त' पदानुकर्षणम्। सूत्रे न्यूनतापूरणायाह—'छत्वम्०' इति। वार्त्तिकमिदम्

'शच्छोऽटि' इति सूत्रे 'अटि' इति पदं विहाय 'अमि' इति पदं देयम्। * 'शच्छोमि' इति सूत्रं पठनीयमित्यर्थः। उदाहरणम्—'तच्छ्लोकेन' इति। 'तत् श्लोकेन' इति स्थिते तकारस्य 'स्तो०' इत्यनेन चुत्वेन चकारे कृते अनेन वार्त्तिकेन शस्य छकारः। अत्र शकारोत्तरवर्त्ती 'अम्' प्रत्याहारान्तर्गतो लकार। तादृशसूत्रपाठे तु लकारोऽटि न वर्त्तते इति शकारस्य छो न स्यात्। अत्र स चासौ श्लोकः, तस्य श्लोक इति वा विग्रहः। 'श्लोको यशसि पद्ये च' इत्यमरः। **मोऽनुस्वारः**। 'पदस्य' इत्यधिकृतम्। 'म' इति षष्ठयन्तस्य विशेषणम्। विशेषणेन तदन्तविधिः। "हलि सर्वेषाम्" ( ८ । ३ । २२ ) इत्यतो 'हलि' इत्यनुवर्त्तते इत्याशयेन सूत्रं व्याचष्टे—'मान्तस्य०' इति। 'हरिम् वन्दे' इत्यवस्थायाम् उक्तसूत्रेण हलन्तर्गतवकारवर्णे परे सति 'हरिम्' इत्याकारकस्य मान्तपदस्य ( सर्वस्य ) स्थानेऽनुस्वारे प्राप्ते ऽलोन्त्यसूत्रेण अन्त्यस्यैव 'म' मात्रस्यानुस्वारः। 'हरिं वन्दे" इति सिद्धम्। एवमेव--'शिवं स्तौति' इत्यादि साध्यम्। "पदस्य किम्" इति। 'पदस्य' इत्यधिकृतस्य किं फलमिति प्रश्नः। उत्तरमाह—"गम्यते" इति 'गम्लृ' गतौ। अस्मात् कर्मणि लुट्। 'भावकर्मणोः' ( १ । ३ । १३ ) इत्यात्मने पदं, यक्। अत्र मस्य पदान्तत्वं नास्ति, अतो नानुस्वारः। यदि 'पदस्य' इत्यधिकृतं न स्यात् तदा 'गंयते' इत्यनिष्टं रूपमापद्येतेति भावः। हलि किम्। त्वमत्र। किमत्र। इत्यादौ नानुस्वारः। **नश्चापदान्तस्य झलि**। 'च' इत्यनेन 'म' इति षष्ठयन्तस्य 'अनुस्वार' इत्यस्य चानुकर्षः इत्याह--"नस्य०" इति। 'यशान् सि' इति स्थिते अनेन सूत्रेण पदान्तरहितस्य नस्य 'झल्' प्रत्याहारान्तर्वर्त्तिनि सकारे परेऽनुस्वारे "यशांसि" इति सिद्धम्। इदं रूपं 'यशस्' शब्दे जसः शौ नपुंसकस्य इति नुमि सान्तेति दीर्घे कृते भवति। एवम्--आक्रम् स्यते' इत्यत्रापि अनेन मस्य अनुस्वारे "आक्रंस्यते" इति ज्ञेयम्। आङ्पूर्वात् क्रमेः कर्त्तरि लृट् 'आङ् उद्गमने' ( १ । ३ । ४० ) इत्यनेन आत्मनेपदे 'स्नुक्रमोः-' इति इति नियमेन इडभावे सिद्ध्यति। 'झलि किम्' इति। आह—मन्यते। अत्र मस्य झल्परकत्वाभावात् नोक्तेन सूत्रेणानुस्वारः। अन्यथा 'मंयते' इत्यशुद्धं स्यात्। 'मन्यते इति कर्मणि लटि तङि यकि रूपम्। एवं 'रम्यते' इत्यादावपि नानुस्वारः। **अनुस्वारस्य०**। स्पष्टम्। 'शम' उपशमे। अस्मात् कर्त्तरि क्तः। 'वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' ( ७ । २ । २७ ) इति निपातनात् इडागमो न। 'अनुनासिकस्य क्विझलोः' ( ६ । ४ । १५ ) इति दीर्घः। 'नश्चापदान्तस्य०' मस्य अनुस्वारः 'शांतः' इत्यवस्थायामनेन

* शाकटायनेन तु--'शच्छोमि' ( १ । १ । १४४ ) इत्येव सूत्रितम्। अत्र--'अच्छेषम्, अच्शेषम्, त्रिष्टुप्छ्रूयते, त्रिष्टुप्श्रूयते। वाक्छूरः, वाक्शूरः। षट्छ्यामाः षट्श्यामाः। तच्छ्वेतम्, तच्श्वेतम्, इत्यादीन्युदाहरणान्तराणि ज्ञेयानि।

सूत्रेण तकारस्य परसवर्णो नकारः "शान्त" इति जातम्। एवमेव—अङ्कितः। अञ्चितः। कुण्ठितः, गुम्फित इत्यादि ज्ञेयम्। **वा पदान्तस्य**। पदान्तस्यानुस्वारस्य यथि परतो वा परसवर्णादेशो भवति। 'त्वम् करोषि' इति स्थिते 'मोऽनुस्वार' इति मस्यानुस्वारे कृते 'वा पदान्तस्य' इत्यनेन सूत्रेण परवर्त्तिनः कस्य सवर्णो ङकारः। 'त्वङ्करोषि' इति जातम्। तदभावपक्षे अनुस्वारश्रुतिरेव 'त्वं करोषि' इति। एवम् तन्तनोति, तं तनोति, तञ्जानाति तं जानाति। तम्पृच्छति, तं पृच्छति इत्यादि। सँय्यन्ता संयन्ता। सँव्वत्सरः संवत्सरः, यँ ल्लोकम् यं लोकम् इत्यत्रानुस्वारस्य पक्षे अनुनासिका यवलाः।

**मोराजि०**। 'म' इति प्रथमान्तम्। 'मोऽनुस्वार' इत्यतः 'म' इति स्थानषष्ठ्यन्तमनुवर्त्तते। 'सम' इत्यवयवषष्ठी प्रत्ययग्रहणपरिभाषया 'क्वि' ग्रहणेन क्विबन्तलाभः इति सर्वं हृदि कृत्वा सूत्रं विवृणोति—"क्विबन्ते०" इति। 'राजृ' दीप्तौ। सम्पूर्वादस्मात् 'सत्सूद्विष०' (३।२।६१) इत्यादिना क्विप्। 'व्रश्चभ्रस्ज'— (८।२।३६) इति सूत्रेण षत्वे कृते ततः 'झलां०' इति जश्त्वेन 'डः'। तस्य 'वाऽवसाने' (८।४।५६) इति पक्षे चर्त्वेन 'टः'। समराट् इति स्थिते 'मोऽनुस्वार०' इत्यनेनानुस्वारे प्राप्ते अनेन सम्सम्बन्धिनि क्विबन्ते राजतौ परे तन्निषेधे मस्य म एव "सम्राट्" इति रूपम्। **हे मपरे वा**। 'मोऽनुस्वार' इत्यतो 'म' इति षष्ठ्यन्तमनुवर्त्तते। 'मोराजि०' इत्यतः 'म' इति प्रथमान्तञ्च 'मः परो यस्मात्' इति विग्रहः। तदाह—"मपरे०" इति। 'किम् ह्मलयति' इति स्थिते इत्यनेन मस्य मत्वे कृते किम्ह्मलयति। पक्षे 'मोऽनुस्वार' इत्यनुस्वारे किं ह्मलयति। **यवलपरे०**। वार्त्तिकमिदम्। यवलाः पराः यस्मात् तस्मिन्। यवलपरके हकारे परे मस्य म एव वा भवेत् इति वार्त्तिकार्थः। 'किम् ह्यः' इत्यत्र उक्तेन वार्त्तिकेन 'य' परकहकारस्य परत्वात् अनुनासिकस्य मस्य तादृश एवानुनासिको यकारः किँय् ह्यः। पक्षेऽनुस्वारः 'किंह्यः' इति रूपद्वयम्। एवमेव—'किँव् ह्वलयति' इत्यत्र वपरके हकारे मस्य अनुनासिको वः। पक्षेऽनुस्वारे च 'किं ह्वलयति इति। किँल् ह्लादयति' इत्यत्र लपरे हकारे मस्यानुनासिको लः। पक्षे तु पूर्ववदनुस्वारे 'किं ह्लादयति' इति ज्ञेयम्। **नपरे नः**। हेति वेति म इति चानुवर्त्तते। नः परो यस्मादिति बहुव्रीहिः। तदाह—"नपरे०" इति। 'किम् ह्नुते' इत्यत्र नपरे हकारे परे सति उक्तेन सूत्रेण मस्य वा नकारः 'किन् ह्नुते' पक्षेऽनुस्वारे 'किं ह्नुते इति' इति। **ङः सिधुट्**। 'ङ' इति पञ्चमी 'सि' इति षष्ठ्यर्थे सप्तमी लाघवार्था। 'हेमपरेवा' इत्यतो 'वा' इत्यनुवर्त्त्याह— 'ङात्परस्य०' इति। धुटः क्व प्राप्तिः स्यात् आदौ अन्ते वेति निश्चाययितुं सूत्रमाह— **'आद्यन्तौ०'** इति। आदिश्च अन्तश्च आद्यन्तौ टश्च कृच टकौ। टकाराकार उच्चारणार्थः। टकौ इतौ ययोस्तौ टकितौ। 'अन्त' शब्दः प्रत्येकं सम्बन्धनीयः।

टित्किताबाद्यन्तावयवौ स्तः यस्य तौ विहितौ तयोरित्यर्थो लब्धं मत्वा वृत्तिं करोति—"टित्किता"विति। आद्यवयवः टित्। अन्तावयवः कित् इति परमार्थः। 'षड् सन्तः इत्यवस्थायां चर्त्वस्यासिद्धत्वात् 'ङः सि धुट्' इति डात्परस्य सस्य धुट् प्राप्तः सच 'आद्यन्तौ०' इति परिभाषया सस्य आद्यवयवः टित्वात्। ततः 'षड् धुट् सन्तः' इति जाते टस्य 'हलन्त्यम्' इति सूत्रेण उकारस्य 'उपदेश०' इति सूत्रेण इत्संज्ञायां 'तस्य लोप' इति लोपे कृते 'खरि च' इत्यनेन धस्य चर्त्वेन तकारः, डस्य टकारः। "षट्त्सन्त" इति सिद्धम्। धुडभावपक्षे डस्य चर्त्वेन टकारे कृते "षट् सन्त" इति रूपद्वयम्।

**ङ्णोः कुक्टुक् शरि**।८।३।२८। वा स्तः। प्राङ्षष्ठः। प्राङ्क्षष्ठः। सुगण्ट्षष्ठः। सुगण्षष्ठः। **नश्च**।८।३।३०। नान्तात्परस्य सस्य धुड्वा। सन्त्सः॥ सन्सः। **शि तुक्**।८।३।३१। नस्य पदान्तस्य शे तुक् वा॥ सञ्छम्भुः। सञ्च्छम्भुः। सञ्च्शंभुः। सञ्शभुः॥ *

अछौ अचछा अचशा अशाविति चतुष्टयम्।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्॥

**ङमो ह्रस्वादचि ङमुण्नित्यम्**।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुट्। प्रत्यङ्ङात्मा। सुगण्णीशः सन्नच्युतः॥ **समः सुटि**।८।३।५। समो रुः सुटि॥ **अत्राऽनुनासिकः पूर्वस्य तु वा**।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा॥ **अनुनासिकात्परोऽनुस्वारः**।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः॥ **खरवसानयोर्विसर्जनीयः**।८।३।१५। खरि अवसाने च पदान्तस्य रेफस्य विसर्गः॥ **संपुंकानां सो वक्तव्यः**॥ सँस्कर्ता। संस्कर्ता॥ **पुमः खय्यम्परे**।८।३।६। अम्परे खयि पुमो रुः। पुँस्कोकिलः। पुंस्कोकिलः॥ **नश्छव्यप्रशान्**।८।३।७। अम्परे छवि नान्तस्य पदस्य रुः॥ **विसर्जनीयस्य सः**।८।३।३४। खरि। चक्रिँस्त्रायस्व। चक्रिंस्त्रायस्व। अप्रशान्

---

* भजञ्छौर्यं वहञ्शौचं पालयञ्शरणागतान्।
जनोऽस्यान्तरनन्तश्रीर्वदञ्छ्च्योतति मध्विव॥ (द्वया० म० का०)
दीर्घरेखाङ्कितेषु यथायोगं सन्धिकार्यं जानीत॥

**किम्। प्रशान्तनोति। पदस्य किम्। हन्ति। अम्परे किम्। सन्त्सरुः खड्गमुष्टिः।**

ङ्णोः कुक्०। 'हे मपरे वा' इत्यतो 'वा' इत्यनुवर्त्तते। ङ् च ण् च, तयोः ङ्णोः। कुक् च टुक् चेति समाहारः। 'आद्यन्तौ टकितौ' इत्यस्यैकवाक्यतां मत्वाह–'आगमौ' इति। यथासङ्ख्यपरिभाषया ङस्य कुक्, णस्य टुक्। 'क्' इत्। *उकार उच्चारणार्थः। प्राङ् षष्ठः। सुगण् षष्ठ इति स्थिते अनेन यथाक्रममाद्यन्तपरिभाषया कित्त्वादन्तावयवः कुक् टुक् च जातः। ततः 'प्राङ् कुक् षष्ठः' सुगण् टुक् षष्ठः' इत्यवस्थायामुकारककारयोरित्सञ्ज्ञायां लोपे प्राङ्क् षष्ठः, सुगण् क् षष्ठ' इति स्थिते †क्षसंयोगे 'क्ष' इत्यक्षरे जाते प्राङ्क्षष्ठः, सुगण्क्षष्ठ इति सिद्धम्। आगमाभावपक्षे तु––प्राङ् षष्ठः, सुगण् षष्ठ इत्येव। सिद्धान्तकौमुद्यान्तु––"चयो द्वितीयाः शरि ‡पौष्करसादेः" इति वार्त्तिकं पठित्वा एकत्र पक्षे कस्य खत्वे टस्य ठत्वे कृते यथाक्रमं प्राङ् ख् षष्ठः, सुगण् ठ् षष्ठ इति रूपमपि साधितम्। तेन प्रत्येकं त्रीणि त्रीणि रूपाणि ज्ञेयानि। **नश्च**। 'न' इति पञ्चमी। 'पदस्य' इत्यधिकृतं पञ्चम्या विपरिणमते। सि धुट् वा इति सर्वमनुवर्त्तते। तदाह––"नान्तात्०" इति। 'सन् सः' इति स्थिते 'सन्' इत्यस्य नान्तपदत्वात् 'नश्च' इत्यनेन 'धुट्' आगमः, स च टित्त्वात् सस्यादौ जातः, एवं 'सन् धुट् सः' इति जाते उकारटकारयोरित्सञ्ज्ञायां लोपे च कृते 'सन् ध् सः' इति भूतम्। ततः "खरि च" इत्यनेन झलन्तर्वर्त्तिनो धस्य चर्त्वेन तः। हलां संयोगे च कृते 'सन्त्सः' इत्येकं रूपम्। पक्षे 'सन्सः' इत्येव। **शि तुक्**। 'नश्च' इत्यतः 'नः' इति पञ्चम्यन्तमनुवर्त्य *षष्ठ्या नेयम्। 'पदस्य' इत्यधिकृतं अवयवषष्ठ्यन्तमाश्रीयते 'हेमपरे' इत्यतो 'वा' इति चानुवर्त्तते। तदाचष्टे—"नस्य०" इति। "सन् शम्भुः" इत्यत्र 'शि तुक्' इत्यनेन पदान्तनस्य अन्तावयवे 'तुक्' इत्यागमे कृते 'सन् तुक् शम्भुः' इति स्थितिर्जाता। उकारककारयोर्यथायोगं 'उपदेशे०' इति 'हलन्त्यम्' इति चेत्संज्ञायां 'तस्य लोपः' इति तयोर्लोपे कृते सति 'सन् त् शम्भुः' इति स्थिते 'शश्छोऽटि' इत्यनेन 'शम्भु' रित्यत्र अट्परकस्य शस्य पक्षे छकारः, तेन 'शन् त् छम्भुः' इति जातम्। ततः 'स्तोः श्चुना श्चुः' इति तस्य चः। पुनरनेनैव नस्य ञः। एवं कृते—(१)

---

*इति केचित्–वस्तुतस्तु 'उपदेशे०' इत्यनेनोकारस्य इत्सञ्ज्ञां कृत्वा लोपनीयमिति सम्प्रदायविदः।

† कुक्टुकोरसिद्धत्वात् जश्त्वं नेति **सिद्धान्तकौमुदी**। ‡ शीति सप्तमी पूर्वत्र कृतायाः 'न' इति पञ्चम्याः षष्ठीं कल्पयति इत्यर्थः।

* पुष्करे तीर्थविशेषे सीदतीति 'पुष्करसत्' तस्यापत्यं पौष्करसादिः आचार्यो वैयाकरणः। बाह्वादित्वादिञ्, अनुशतिकादित्वादुभयपदवृद्धिः।

'सञ्छम्भुः' इत्याकारमेकं रूपम। 'झरो झरि०' इत्यनेन पाक्षिके च लोपे कृते सति (२) 'सञ्छम्भुः' इत्यपरम्। तुगभावपक्षे 'सन् शम्भुः' इत्यत्रापि चुत्वेन ञकारे (३) 'सञ्शम्भुः' इति। छत्वाभावपक्षे—'सन् त् शम्भुः' इत्यत्र पूर्ववत् 'स्तोः०' इत्यनेन तकारस्य चकारे पुनः नकारस्य ञकारे कृते (४) 'सञ्च्शम्भुः' इति चत्वारि रूपाणि। उक्तञ्च—

ञछौ ञचछा ञचशा ञशाविति चतुष्टयम्। रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्॥इति।

**ङमो ह्रस्वात्०**। 'ङम्' इति प्रत्याहारः। पञ्चम्यन्तम्। 'पदस्य' इत्यधिकृतं 'ङम्' इति पञ्चम्यन्तस्य विशेषणत्वेन पञ्चम्यन्ततया विपरिणम्मते। 'अचि' इति सप्तमी षष्ठ्यर्थे इति सर्वमाश्रित्य सूत्रस्य वृत्तिं करोति—'ह्रस्वात्परः०' इति। ङमुडागम इत्यस्यायमाशयः। सञ्ज्ञायां कृतं टित्त्वं सामर्थ्यात् सञ्ज्ञिभिः सम्बध्यते तेन यथासङ्ख्यं ङुट्-नुट्-णुटः प्रवर्त्तन्ते। अर्थात् ङान्तात् ङुट्, नान्तात् नुट्, णान्तात् णुट्। * नित्यग्रहणं स्पष्टार्थम्। "प्रत्यङ् आत्मा" इति स्थिते अनेन सूत्रेण ह्रस्वात्परो ङम्प्रत्याहारान्तर्गतो ङकारः, ततः परस्य 'अच्' प्रत्याहारान्तर्वर्त्तिन 'आत्मा' इति पदस्य आकारस्य सङ्ख्यातानुदेशेन 'ङुट्' आगमो जातः सच टित्वादाद्यावयवः। ततः 'प्रत्यङ् ङुट् आत्मा' इत्यवस्थायां उटोरित्सञ्ज्ञया लोपे कृते संयोगे च 'प्रत्यङ्ङात्मा' इति सिद्धं रूपम्। अनयैव रीत्या 'सन् अच्युतः' नुटि कृते, 'सुगण् ईशः' इत्यत्र णुटि कृते यथाक्रमं 'सन्नच्युतः' इति 'सुगण्णीश' इति च साधनीयं, पाठगौरवन्तु नाश्रितम्। ङम इति किम्—त्वमास्से। ह्रस्वादिति किम्—प्राङास्ते। अचि इति किम्—प्रत्यङ् करोति। **समः सुटि**। 'सम' इति षष्ठी। 'मतुवसो रु सम्बुद्धौ छन्दसि" (८।३।१) इत्यतो 'रुः' इत्यनुवर्त्तते। तदाह—"समो रुः०" इति 'सुट्' अत्रागम एव गृह्यते व्याख्यानात्। **अत्रानुनासिकः०**। अत्र इत्यस्य रुप्रकरणे इत्यर्थः 'मतुवसो रु सम्बुद्धौ छन्दसि' इत्यनेन रुविधानानन्तरं पठितत्वात्। 'रोः पूर्वस्य' इति। उपलक्षणमेतत् लोपस्यापि। **अनुनासिकात्०**। अनुनासिकात् इति "ल्यप्लोपे कर्मण्यधिकरणे च" इति ल्यब्लोपे पञ्चमी। अतएव व्याख्याति 'अनुनासिकं विहाय' इति। अनुनासिकाभावपक्षे इत्यर्थः। अर्शआद्यचा अनुनासिकघटितप्रयोगमित्यर्थः। 'रुः' 'पूर्वस्य' इति इतिपदद्वयमनुवर्त्त्य योग्यतया विभक्तिविपरिणमय्य व्याचष्टे—"रोः पूर्वस्मात् पर" इति। **खरवसानयोः**। 'रोरिः'

---

* 'हे मपरे'—इति 'मय उञो वो वा' इति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभसम्भवात् स्पष्टप्रतिपत्तये सूत्रे 'नित्यम्' इति पठितम्। **दधिमथास्तु**—नित्यप्रहसितः नित्यप्रज्वलितः इत्यादौ यथा प्रायोऽर्थे नित्यपदं, तथैवात्र प्रायःसमानार्थकं तत्। तेन—"इको यणचि" "सुप्तिङन्तं पदम्" "सनाद्यन्ता धातव" इत्यादौ ङमुट् न कृत इत्याचक्षते।

इत्यतः 'रु' इति षष्ठ्यन्तमनुवर्त्तते तच्च 'पदस्य' इत्यधिकृतस्य विशेषणम्, तेन च 'येनविधि:०' इत्यनेन तदन्तविधिलाभे 'रेफान्तस्य' इत्यर्थो लब्धः। तदाह—"खरि"--इति। **सम्पुङ्कानाम०।** सम्, पुम्, कान् एतेषां विसर्गस्य सकारो वक्तव्य इत्यर्थः। सम् कर्त्ता' इति स्थिते 'सम्परिभ्यां करोतौ भूषणे' (६।१।१३७) इति सूत्रेण सुडागमे कृते 'सम सुट् कर्त्ता' इति जातम् ततः "समः सुटि" इति सूत्रेण सुटि परतः सर्वस्यापि 'सम्' इत्यस्य रुत्वप्राप्तौ अलोन्त्यपरिभाषया अन्त्यस्यैव मस्य रुत्वे कृते उटः यथायोगमित्सञ्ज्ञायां कृतायां लोपे 'रु' इत्यस्याप्युकारस्येतसञ्ज्ञोत्तरं लोपे च 'स र् स् कर्त्ता' इत्यवस्थायाम् 'अत्रानुनासिक:०' इत्यनेन रोः पूर्वस्य विकल्पेन अनुनासिके कृते 'सँ र् स् कर्त्ता' इत्याकारो निष्पन्नः। यत्र नानुनासिकत्वं तत्र पक्षान्तरे 'अनुनासिकात्०' इत्यनेन अनुस्वारे विहिते सति 'सं र् स् कर्त्ता' इति जातम्। ततः उभयत्रापि 'खरवसानयोर्विसर्जनीयः' इति सूत्रेण खर्प्रत्याहारान्तर्गते सकारे परे रेफस्य विसर्गे कृते 'सँः स्कर्त्ता, संःस्कर्त्ता' इत्याकारे च स्थिते 'विसर्जनीयस्य सः' (८।३।३४) इत्यनेन उभयत्रापि विसर्गस्य सकारप्राप्तौ एतदपवादभूतेन 'वा शरि' (८।३।३६) इति योगेन पाक्षिके विसर्गे प्राप्ते वार्त्तिकं प्रवृत्तं "सम्पुङ्कानां सो वक्तव्य" इति। तदनेन प्रकृते विसर्गस्य समःसम्बन्धित्वात् नित्यमेव सः। सकारस्य च परयोगे 'सँस्कर्त्ता, संस्कर्त्ता' इति रूपद्वयं भवति। "सिद्धान्तकौमुद्यां" तु अष्टोत्तरशतसङ्ख्यानि-रूपाणि उक्तानि। तदत्र बालबुद्धिव्याकुलताभयात् चातुर्यमात्रप्रकाशनप्रयोजनत्वाद्वोपेक्षितानि। **पुमः०।** 'मतुवसो'—इत्यतो 'रुः' इत्यनुवर्त्त्याह—"अम्परे"—इति। अम् परो यस्मात् इति बहुव्रीहिः। 'पुमः' इति पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम्। पुमान् चासौ कोकिलः इति कर्मधारये 'सुपो धातुप्रातिपदिकयोः' (२।४।७१) इति सुपो लुकि कृते सति 'संयोगान्तस्य लोप' (८।२।२३) इत्यनेन सकारलोपे च कृते सति 'पुम् कोकिल' इत्यवस्थायां 'पुमः खय्यम्परे' इत्यनेन पुमो मस्य रुत्वे रेफोत्तरवर्त्तिन उकारस्येत्सञ्ज्ञायां 'तस्य'—इति लोपे 'पुर् कोकिल' इति जातम्, ततः पूर्वसाधितप्रयोगवत् अनुनासिकानुस्वारविकल्पौ, रेफस्य 'खरवसानयोः'—इति विसर्गे, तस्य 'विसर्जनीयस्य'—इति नित्यसकारप्राप्ते तदपवादभूतेन 'वा शरि' इत्यनेन पाक्षिके विसर्गे प्राप्ते तस्याप्यपवादेन "सम्पुङ्कानाम्"—इति वार्त्तिकेन नित्यं सकारे सिद्धे-भवतः 'पुँस्कोकिलः पुंस्कोकिलः' इति द्वे रूपे। एवमेव—पुँस्पुत्रः। पुंस्पुत्रः इत्यपि ज्ञेयम्। सूत्रे—खयि इति किम्। पुंदासः पुंगवः। अम् पर इति किम्। पुंक्षीरम्। पुंक्षुरः। परग्रहणं किम्। पुमाख्यः। पुमाचारः। **नश्छव्यप्रशान्।** 'न' इति षष्ठ्यन्तं 'पदस्य' इत्यधिकृतस्य विशेषणम् तत्त्वेन तदन्तविधिः। 'अम्परे' इत्यनुवर्त्तते 'रु' इति चेति तदाह—"अम्परे"—इति। 'अप्रशान्' इति षष्ठ्यर्थे प्रथमा। तेन नतु प्रशान्शब्दस्य इत्यर्थो बोध्यः। 'नकारान्तस्य पदस्य प्रशान्वर्जितस्य रुर्भवत्यम्परे

छवि परत ' इति फलितोऽर्थः। "चक्रिन् त्रायस्व" इति स्थिते अनेन नस्य रुत्वे पूर्ववदेव इत्सञ्ज्ञा लोपानुनासिकानुस्वारविकल्पाः, ततः विसर्गः, सत्वम्। 'चक्रिँस्त्रायस्व चक्रिंस्त्रायस्व' इति द्वे रूपे। एवमेव—'शार्ङ्गिन् छिन्धि' इत्यत्रापि सर्वा प्रक्रिया ज्ञेया केवलमत्र रकारस्य विसर्गोत्तरं सकारे कृते सस्य 'स्तोश्चुना'—इति श्चुत्वेन शकारः।'शार्ङ्गिँश्छिन्धि, शार्ङ्गिंश्छिन्धि' इति भवतः। पदकृत्यमाह—' अप्रशान् किम् ' इति। प्रश्नोऽयम्। उत्तरमाह— ' प्रशान् तनोति ' इति। यदि सूत्रे ' प्रशान् ' इत्यस्य निषेधो न क्रियेत तदाऽत्रापि नान्तपदत्वात् रुत्वे ' प्रशाँस्तनोति प्रशांस्तनोति ' इत्यशुद्धं रूपमापद्येत, एवं माभूदिति निषेधः। ' पदस्य किम् ' इति। हन्ति। ' हन् ति ' इति स्थिते अस्यापि नान्तत्वात् रुत्वप्राप्तिः स्यात् यदि ' पदस्य ' इत्यधिकृतं न गृह्येत। पदस्येत्युक्ते तु हनो नस्य पदत्वाभावान्नानिष्टप्रसक्तिरिति भावः। ' अम्परे किम् ' इति। ' सन्त्सरुः ' इति। अत्र यद्यपि सन् इति नान्तं पदम्, यद्यपि च परे छव्प्रत्याहारान्तर्वर्त्ती तकारोऽस्ति, परन्तु नासौ अम्परकः, किन्त्वसौ सकारपरकः, स तु नास्ति छव्प्रत्याहारेषु, अतोत्र न रुत्वप्रसक्तिः अन्यथाऽत्राप्यनिष्टं रूपमापद्येत, तदर्थम् ' अम्परे ' इति ' छवि ' इत्यस्य विशेषणमुक्तम्। ' त्सरुः ' इत्यस्यार्थः खड्गमुष्टिरिति।

**नॄन्पे।८।३।१०। नॄनिस्य रुर्वा पे॥ कुप्वोः ≍क≍पौ च। ।८।३ ३७। कवर्गे पवर्गे च परे विसर्गस्य≍क≍पौ स्तः चाद्विसर्गः। नॄँ≍पाहि। नॄं≍पाहि। नॄँः पाहि। नॄंः पाहि। नॄन्पाहि॥ सोपदादौ। ८।३।३८। विसर्गस्य सः स्यादपदाद्योः कुप्वोः॥ पयस्पाशम्। पयस्कल्पम्॥ यशस्काम्यति॥ अनव्ययस्येति वाच्यम्। प्रातःकल्पम् काम्ये रोरेवेतिवाच्यम्। नेह। गीःकाम्यति। इणः षः ८।३।३९। इणः परस्य विसर्गस्य षः स्यात् पूर्वविषये। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति। कस्कादिषु च।८।३।४। इण्विण उत्तरस्य विसर्गस्य षः स्यादन्यस्य तु सः। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका। धनुष्कपालमित्यादि। आकृतिगणोऽयम्॥ तस्य परमाम्रेडितम्।८।१.२ द्विरुक्तस्य परमाम्रेडितं स्यात्। कानाम्रेडिते। ८।३।१२। कान्नकारस्य रुराम्रेडिते। काँस्कान्। कांस्कान्। छे च। ६।१।७३। ह्रस्वस्य छे तुक्। स्वच्छाया। शिवच्छाया। आङ्माङोश्च।६।१।७४। तुक् छे। आच्छादयति। माच्छिदत्॥ दीर्घात्**

**६।१।७५। तुक् छे। म्लेच्छति॥ पदान्ताद्वा।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा। लक्ष्मीच्छाया। लक्ष्मीछाया॥**

इति हल्सन्धिः॥

---

नॄन्पे। 'नॄन्' इति द्वितीयान्तं शब्दस्वरूपं षष्ठ्यर्थे। षष्ठ्याश्च सौत्रत्वात् लुक्। 'मतुवसोरु॰' (८।३।१) इत्यतो 'रु' इत्यनुवर्तते। 'उभयथर्क्षु' ( ) इत्यतः 'उभयथा' इत्यनुवृत्तेर्विकल्पः फलितस्तदाह—"नॄन् इत्येतस्य" इति। 'पे' इति पकारोपरि अकार उच्चारणार्थः तेन 'नॄँः पुनाति' इत्याद्यपि सिद्धं भवति। "कुप्वोः"—"विसर्जनीयस्य स" इत्यतो विसर्जनीयस्य इत्यनुवर्त्तते तदाह—"कवर्गे"—इति नॄन् पाहि' इति स्थिते 'नॄन्पे' इत्यनेन सर्वस्य रुत्वे प्राप्ते ऽलोन्त्यपरिभाषया। अन्त्यस्य नस्य रुत्वम्। रोरुकारस्य 'उपदेशे'—इतीत्सञ्ज्ञायां लोपे कृते 'नॄर् पाहि' इति जाते सति 'अत्रानुनासिकः'—इति रोः पूर्वस्य 'नॄ' इत्यस्य 'नॄँ' इत्येवमनुनासिके पक्षे 'अनुनासिकात्परः'—इति अनुस्वारे च 'खरवसानयोः'—इत्यनेन रस्य विसर्गे 'कुप्वोः—इत्युपध्मानीये च सति नॄँ᳴पाहि, नॄं᳴पाहि, उपध्मानीयाभावे च नॄँः पाहि, नॄंः पाहि, रुत्वाभावपक्षे तु नॄन् पाहि इति पञ्च रूपाणि। **सोपदादौ**। 'कुप्वोः' इत्यनुवर्त्तते। 'अपदादौ' इति तस्य विशेषणम्। द्वित्वे एकवचनं सौत्रम्। 'विसर्जनीयस्य' इत्यप्यनुवर्त्तत इतिसर्वं मत्वा व्याचष्टे—"विसर्गस्य"—इति। कुत्सितं पय इति पयस्पाशम्। 'याप्ये पाशप्' (५।३।४७) इति कुत्सितार्थे पाशप्। 'पयः पाशम्' इति स्थिते 'कुप्वोः'—इति प्राप्ते 'सोपदादौ' इत्यनेन तत् बाधित्वा विसर्गस्य सः। एवमेव—ईषदसमाप्तं पय इति पयस्कल्पम्। अत्रापि 'पयः कल्पम्' इति स्थिते 'कुप्वोः'—इत्यस्यापवादो विसर्गस्य सकारः। एवं 'यशस्काम्पति' इति। यश आत्मनः इच्छतीत्यर्थे 'काम्यच्' इति वार्त्तिकेन काम्यच् 'सनाद्यन्ताः'—इति धातुत्वेन लडादयः। सत्वमेव। **अनव्ययस्येति वाच्यम्**। वार्त्तिकमिदम्। सोपदादाविति यदुक्तं तत् अव्ययविसर्गस्य न भवतीत्यर्थः। तेन—प्रातःकल्पम् इत्येव। ईषदसमाप्तः प्रातःकाल इत्यर्थः। "ईषदसमाप्तौ कल्पप्"—इति कल्पप् **काम्ये रेव॰**। काम्यप्रत्यये परे रुस्थानिकस्यैव विसर्गस्य सोऽपदादावित्युक्तो विधिर्भवतीति वार्त्तिकार्थः। तदाह—नेह गीः काम्यति। नात्र रुस्थानिको विसर्गः अपितु *'गिर्' शब्दस्य यो रेफः तत्स्थानिक। गिरमात्मन इच्छति इत्यर्थे पूर्ववत् काम्यच्। **इणः षः**। 'इण' इति पञ्चमी 'विसर्जनीयस्य'

---

* 'गॄ' धातोः क्विपि 'ॠत इद्धातोः' (७।१।१००) इत्यनेन इत्वे रपरत्वे रेफस्य विसर्गः तस्य रुस्थानिकत्वाभावान्न सकार इत्यर्थः।

इत्यनुवर्तते। 'परस्य' इत्यध्याहारलभ्यम् अतो व्याचष्टे-"इणः परस्य"-इति । 'सोऽपदादौ' इत्यस्यापवादः ।' सर्पिः पाशम् ' इति स्थितिः । अत्र पकारोत्तरवर्त्तिनः इण्प्रत्याहारान्तर्गतेकारात्परस्य विसर्गस्य षकारः । सर्पिष्पाशम् । एवमेव 'सर्पिष्कल्पम्' इत्यादि ज्ञेयम् **कस्कादिषु च** । 'इण' इत्यनुवर्त्तते 'विसर्जनीयस्य ' इति च । 'कस्कादिषु' इति विषये सप्तमी । एषु इणः परस्य विसर्गस्य षत्वम् अनिणः परस्य तु सत्वमिति विवेकः । ✕क✕ पथोरपवादः । कस्कः । कः कः इत्येवं वीप्सायां द्वित्वे पूर्वस्मिन् खण्डे अकारात्परस्य विसर्गस्य सकारः, नतु जिव्हामूलीयः । वीप्सायां द्विर्वचने कुतः कुत आगत इत्यर्थे 'तत आगतः' ( ४।३।७४ ) इत्यण् । आणि वृद्धिः " अव्ययानां भमात्रे टिलोपः " इति टिलोपे विसर्गस्य सकारः । कौतस्कुतः । सर्पिष्कुण्डिका इत्यत्र इणः परत्वात् विसर्गस्य षत्वम् । एवं धनुष्कपालं, चतुष्कपालमित्याद्यपि ज्ञेयम्. अत आह—इत्यादीति । आकृतिगणोऽयम् । एवं सम्पुङ्कानामिति वार्त्तिके ' कान् ' ग्रहणं न कर्त्तव्यमिति भावः । **तस्य०** । स्पष्टम् । **कानाम्रेडिते** । कानिति द्वितीयान्तं स्वरूपपरं षष्ठयन्तम् तस्याः सौत्रो लुक् । नलोपाभावोऽपि सौत्रः । 'रु'रित्यनुवर्त्तते, इति मत्वा व्याचष्टे—' कान्नकारस्य "—इति । ' कान् ' इत्यस्य वीप्सायां द्विर्वचने सति ' कान् कान् ' इत्यवस्थिते प्रथमनकारस्य रुत्वे इत्सञ्ज्ञया उकारलोपे च सति ' अत्रानुनासिक ' इत्यनुनासिके ' काँर् कान् ' पदे ' अनुनासिकात्०' इत्यनुस्वारे ' कांर् कान् ' इति जातम् । तत्र ' खरवसानयोः '—इत्युभयत्रापि रेफस्य विसर्गे प्राप्ते " सम्पुङ्कानाम् "—इति वार्त्तिकेन सकारे कृते काँस्कान्, कांस्कान् इति द्वे रूपे भवतः । **छे च** । अत्र ' संहितायाम '( ६ । १ । ७२ ) इत्यधिकृतम् । ' ह्रस्वस्य पिति कृति तुक् ' ६ । १ । ७१) इत्यतः ' तुक् ' इत्यनुवर्तते तदाह—" ह्रस्वस्य "—इति । 'स्व छाया' इति स्थिते ' छे च ' इति सूत्रेण ' स्व ' इति ह्रस्वस्य तुक् । सच कित्वात्तदन्तावयवः, उकौ यथायोगं लोपे ' स्व त् छाया ' इति भूते सति ' स्तोःश्चुना '—इति तस्य चुत्वेन चे कृते परयोगे च *' स्वच्छाया ' इति सिद्धम् । एवमेव—"शिवच्छाया" इत्याद्या अपि प्रयोगा ज्ञेयाः । **आङ्माङोश्च** । छे तुक् इत्यनुवर्त्तते । ' पदान्ताद्वा ' इति विकल्पस्यायमपवादः । आ छादयति, मा छिदत् इति स्थिते तुकि कृते सति पूर्ववदेव प्रक्रिया ज्ञेया । **दीर्घात्** । छे तुक् इत्यनुवर्त्तते । इत्याह—' तुक् छे' इति । 'म्ले छति' इति स्थिते तुकि पूर्ववत् प्रक्रिया । एवम्—† चेच्छिद्यते ।

---

* अत्र वस्तुभूता प्रक्रिया तु—चुत्वस्य (८ । ४ । ४०) असिद्धत्वात् जश्त्वेन दः । ततः चर्त्वस्य ( ८ । ४ । ५५ ) असिद्धत्वात् पूर्वं चुत्वेन जः । तस्य चर्त्वेन चः । चुत्वस्य असिद्धत्वात् " चोः कुः " ( ८ । २ । ३० ) इति कुत्वं न इति **सिद्धान्तकौमुदी ।**

† अत्रेदं बोध्यम—दीर्घस्यायं तुक् नतु ह्रस्य "--सेनासुराच्छाया"--इति ज्ञापकात् । अस्यायमाशयः--" उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इति छकारस्य तुक्

पदान्ताद्वा । तुक्, छे, दीर्घात् इतित्रयमनुवर्त्तते इति मत्वा व्याचष्टे— "दीर्घात्"–इति । 'लक्ष्मी छाया' इति स्थिते अनेन सूत्रेण तुकि कृते सर्वापि प्रक्रिया पूर्ववत् । लक्ष्मीच्छाया । तुगभावे तु लक्ष्मीछाया * । इति हल्सन्धिः ।

अथ विसर्गसन्धिः ॥

**विसर्जनीयस्य सः ।८।३।३४।** खरि । विष्णुस्त्राता ॥ **शर्परे विसर्जनीयः ।८।३।३५।** शर्परे खरि विसर्गस्य विसर्गो नत्वन्यत् । कः त्सरुः । घनाघनः क्षोभणः ॥ **वा शरि ।८।३।३६।** शरि विसर्गस्य विसर्गो वा । हरिः शेते । हरिश्शेते ॥ **खर्परे शरि विसर्गस्य लोपो वा वक्तव्यः ॥** हरिस्फुरति । हरिः स्फुरति ॥ **ससजुषो रुः ।८।२।६६।** पदान्तस्य सस्य सजुषशब्दस्य च रुः स्यात् ॥ **अतो रोरप्लुतादप्लुते ।६।१।११३।** अप्लुतादतः परस्य रोरुः स्यादप्लुतेतति । शिवोऽर्च्यः । अतः किम् । देवा अत्र । अतीति किम । श्व आगन्ता । अप्लुतात्किम । एहि सुस्रोत ३ अत्र स्नाहि । प्लुतस्याऽसिद्धत्वादतः परोयम । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम । तपरकरणस्य तु न सामर्थ्यम । दीर्घनिवृत्त्या चरितार्थत्वात । अप्लुतेति किम । तिष्ठतु पय अ३ग्निदत्त ॥ **हशि च ।६।१।११४।** तथा । शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि ।८।३।१७।** एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह । देवायिह । भोस्भगोस्अघोस् इति सान्ता निपाताः । तेषां रुत्वे कृते ॥ **व्योर्ल-**

---

अन्तावयवः स्यात् ततश्च––छिदिधातोर्यङि, द्वित्वे, हलादिशेषे, अभ्यासचर्त्वे "गुणो यङ्लुकोः" (७ । ४ । ८२) इत्यभ्यासगुणे, तङि चे छिद्यते इति स्थिते छकारस्यान्त्यावयवे तुकि, तस्य चुत्वेन चकारे सति तत्पूर्वस्य छकारस्य "खरि च" (८ । ४ । ५५) इति चर्त्वेन चकारे सति "चेच्चिद्यते" इति एकारात् द्विचकारमेव रूपं स्यात्, छकारो न श्रूयेत अत उक्तं दीर्घस्यायमिति । ततश्च छकारात् प्राक् दीर्घस्योपरि तुकि जश्त्वचुत्वचर्त्वेषु "चेच्छिद्यते" इति छकारश्रवणं रूपं निर्बाधम् ।

* **अत्राहुर्मौग्धाः**—"विश्वजनादेः परो वेति केचित्" । विश्वजनच्छत्रम् । विश्वजनछत्रम् । दधिच्छाया । दधिछाया । 'मदनकतरुशाखा लम्बिछोलक्षयुग्मम्' इत्यादीति । "अनन्तपारं किल शब्दशास्त्र"मिति मे मतिः ।

लघुप्रयत्नतरः शाकटायनस्य ।८।३।१८। अशि पदान्ते । ओतोगार्ग्यस्य ।८।३।२०। ओकारात्परस्य पदान्तस्याऽलघुप्रयत्नस्य यस्य नित्यं लोपः॥ भो अच्युत। लघुप्रयत्नपक्षे। भोयच्युत। पदान्तस्य किम्। तोयम्॥ हलि सर्वेषाम् ।८।३।२२। भोभगोअघो अपूर्वस्य यस्य नित्यं लोपः स्याद्धलि। भो देवाः। भगो नमस्ते। अघो याहि। देवा यान्ति॥

**विसर्जनीयस्य सः**। 'खरि' इति 'खरवसानयोः'—इति सूत्रात् मण्डूकप्लुत्या ऽनुवर्त्तते। 'विष्णु' शब्दात् सुप्रत्यये तस्य रुत्वे विसर्गे सति 'विष्णुः' इति रूपं भवति।। 'विष्णुः त्राता' इति स्थिते अनेन सूत्रेण 'खर्' प्रत्याहारान्तर्गते तकारे परे विसर्गस्य सः। अज्झीनमिति परयोगे—"विष्णुस्त्राता' इति सिद्धम्। '**शर्परे**'—'विसर्जनीयस्य' इत्यनुवर्त्तते। पूर्ववत् 'खरवसानयोः'—इत्यतः 'खर्' इत्यनुवर्त्तते। शर्परो यस्मात् इति बहुव्रीहिः 'खर' इति विशेष्यं पदम् तदाह—' शर्परे०' इति। विसर्गस्य विसर्गविधानं तदितरपरिसङ्ख्यानार्थम्। परिसङ्ख्या च नियम एव। उदाहरति—"कः त्सरुः"—इति। 'कः त्सरुः' इत्यत्र विसर्गस्य सत्वं 'घनाघनः क्षोभणः' 'कुप्वोः'—इति जिह्वामूलीयश्च न भवतीत्यर्थः। एवञ्च—'विसर्जनीयस्य' 'कुप्वो'-रित्यस्य चायमपवादः। "खर्परे शरि"—इति। खर् परो यस्मादिति तु बहुव्रीहिः। 'शर्' इति विशेष्यम्। खर्परके शरि परे विसर्गस्य विकल्पेन लोपो भवतीति वक्तमित्यर्थः। 'रामः स्थाता' इति स्थिते अनेन वार्त्तिकेन विसर्गलोपः शर्प्रत्याहारान्तर्गतसकारस्य खर्प्रत्याहारान्तर्गतथकाररूपखर्परकत्वात्, तेन 'रामस्थाता' इत्यविसर्गमेकं रूपम्। लोपाभावपक्षे तु—'वा शरि' इत्यनेन विसर्गस्य विसर्गो वा। तथाच—रामः स्थाता, रामस्स्थाता इत्येकं सविसर्गम् एकं द्विसकारञ्चेत्येवं * त्रैरूप्यम्। एवमेव—'हरिस्फुरति, हरिःस्फुरति' इति विसर्गस्य लोपपक्षे लोपाभावपक्षे च यथायोगं द्वे रूपे। तदुभयाभावपक्षे तु—सकारे कृते † द्विसकारमेकं रूपम् इति मिलित्वा च त्रीणि। **ससजुषो रुः**। ससजुषो रुः इति द्वे पदे। 'रो रि' (८।३।१४) इति सूत्रेण रेफलोपः। सश्च सजूश्च ससजुषौ तयोः 'ससजुषो'रिति द्वन्द्वः। 'पदस्य' इत्यधिकृतम्। तच्च सकारेण सजुष्शब्देन च विशेष्यते, विशेषणत्वेन तदन्तविधिः। तदाह—"पदान्तस्य०" इति। 'सकारान्तं सजुष्शब्दान्तञ्च यत्पदं तस्य रुः स्यात् इत्यर्थः। सच अलोन्त्यपरिभाषया अन्त्यस्य भवति। एवञ्च—'पदान्तस्य सस्य' इत्यादि फलितरूपेण उक्तम्। '**अतो रो**'—'अत उत्' (६।१।१११) इत्यतः 'उत्' इत्यनुवर्त्तते। अत इति पञ्चमी। 'एङः पदान्तादति' (६।१।१०६) इत्यतः 'अति' इत्यनुवर्तते एतत्सर्वं मत्वा व्याचष्टे—'अप्लुतादतः' इत्यादि। 'शिवस् अर्च्यः' इत्यवस्थायाम्

* विकल्पद्वयसामर्थ्यादिति भावः। † 'हरिस्स्फुरति' इत्यर्थः।

'ससजुषो रुः'--इति सूत्रेण सस्य रुत्वे 'अतो रो'--इत्यनेन रोः उत्वे 'आद्गुणः' इत्यनेन पूर्वपरयोः स्थाने गुणे कृते 'एङः पदान्तादति' इति अनेन 'अर्च्यः' इत्यस्य आद्यस्य अकारस्य पूर्वरूपादेशे च विहिते "शिवोर्च्यः" इति सिद्धम्। एवम्—देवोऽयम्, रामोऽसौ, इत्येवमाद्याः प्रयोगा ज्ञेयाः। "अत" इति। 'अत' इति तपरः किमित्यर्थः। आह--"देवा अत्र" इति। यदि तपरकरणं न स्यात् तदा 'देवास् अत्र' इत्यवस्थायामपि वकारोत्तरवर्त्याकारात्परस्य रोः उत्वेऽनिष्टं * रूपं स्यादित्यर्थः। "अति इति किम्" श्व आगन्ता। 'श्वस् आगन्ता' इति स्थिते सस्य रुः। तस्य परे ह्रस्वाकारो नास्ति अतोत्र रोरुत्वं न, किन्तु यत्वं लोपश्च। "अप्लुतात् किम्" इति। 'अत' इत्यस्य 'अप्लुतात्' इति विशेषणं किमर्थमित्यर्थः। आह--'एहि सुश्रोत ३ अत्र स्नाहि' इति। सुश्रोतःशब्दः (सान्तः) कस्यचित् सञ्ज्ञा तत्सम्बुद्धौ 'दूराद्धूते च' (८।२।८४) इत्यनेन टेः प्लुतः। 'सुश्रोतर् अत्र' इति स्थिते प्लुतात्परस्य रोः उत्ववारणाय 'अप्लुतात्' इति पदं दत्तमित्यर्थः। ननु--नायं रुः अतःपरः, अपितु प्लुतात्परः, तदभावादेव नात्र उत्वप्रसक्तिः, किन्तु उत्वनिवृत्तिरेव तस्मात् 'अप्लुतात्' इति विशेषणोपादानं व्यर्थमितिशङ्कायामाह—"प्लुतस्याऽसिद्धत्वात्०" इति। उत्वे (६।१।११३) कर्त्तव्ये प्लुतस्य (८।२।८४) असिद्धत्वात् अयं रुः अतः पर एव, अतस्तस्य उत्वप्राप्तिः, एवं तन्निवृत्त्यर्थम् 'अप्लुतात्' विशेषणमावश्यकमेव। ननु--कृतेऽपि 'अप्लुतात' इति विशेषणे रोरुत्वं वारयितुमशक्यम् उत्वे कर्त्तव्ये प्लुतस्यासिद्धतया अप्लुतात्परत्वस्यापि सम्भवात् अत आह--"अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्" इति। अस्यायमाशयः--यदि उत्वे कर्त्तव्ये प्लुतस्यासिद्धत्वं स्यात् तर्हि 'अप्लुतात्' इति विशेषणं निष्फलं स्यात् सति तु तस्मिन् प्रतियोगित्वेन प्लुतस्याश्रयणात् नासिद्धत्वमित्यर्थः। ननु--अत इति तपरकरणादेव प्लुतात् परस्य रोः उत्वनिवृत्तिरेवेत्यत आह-- 'तपरकरणस्य तु न सामर्थ्यम्' इति। प्लुतस्य असिद्धत्वाभावसाधने तपरकरणस्य तु न सामर्थ्यमित्यर्थः। अत्र हेतुमाह--'दीर्घनिवृत्त्या चरितार्थत्वात्' इति। 'देवा अत्र' इत्यादौ दीर्घव्यावृत्तिरेव तपरकरणप्रयोजनमित्यर्थः। दीर्घव्यावृत्त्या लब्धप्रयोजनं तपरकरणं प्लुतस्यासिद्धत्वाभावं गमयितुं न समर्थमिति भावः। "अप्लुते इति किम्" इति। 'अप्लुते' इति पदं 'अति' इत्यस्य किमर्थं विशेषणम्? आह—तिष्ठतु पय अ३ग्निदत्त। अत्र पयस् इति स्थिते सस्य रुः। तस्य प्लुतपरकत्वादुत्वं नेत्यर्थः 'अप्लुते' इत्यनुक्तं तु अत्रापि रुत्वं स्यात् तद्वारणायेवेदमुक्तमिति भावः। 'अ३ग्निदत्त' इत्यत्र 'गुरोरनृतः'-(८।२।८६) इत्यनेन प्लुतः। **हशि च**। अत्र 'अतोरोरप्लुतात्' इति पद

---

* 'देवोऽत्र' इत्यशुद्धं रूपं स्यात्। 'देवस् अत्र' इति स्थिते 'देवाऽत्र' इति जातं रूपं तु नाशुद्धमिति भावः।

मनुवर्त्तते । 'अत उत्' ( ६ । १ । १११ ) इत्यतः 'उत्' इति पदञ्च । तदाह— "अप्लुतात्०" इति । उदाहरति—"शिवो वन्द्य" इति । 'शिवस् वन्द्य' इति स्थिते 'ससजुषोरुः' ( ८ । २ । ६६ ) इत्यनेन सस्य रुत्वे कृते 'हशि च' इत्यनेन हश्प्रत्याहारान्तःपातिनि 'वद्य' इत्यस्य वकारे परे रोः उत्वे, 'आद्गुणः' ( ६ । १ । ८७ ) इति सूत्रेण पूर्वपरयोः स्थाने स्थानसाम्यात् ओकारे गुणे कृते "शिवो वन्द्य" इति सिद्धम् । एवमेव—धर्मो जयति, रामो नम्यः, चोरो दण्ड्य इत्यादयः प्रयोगाः साधनीयाः । * रोरित्युकारानुबन्धग्रहणान्नेह-प्रातरत्र, धातर्गच्छ । "**भो भगो अघो०**" । 'रोः सुपि' ( ८ । ३ । १७ ) इत्यतः 'रोः' इत्यनुवर्त्तते । भो भगो अघो अ इत्येषां द्वन्द्वः । एते पूर्वे यस्मादिति बहुव्रीहिः । पूर्वशब्दस्य प्रत्येकमभिसम्बन्धः । भोपूर्वकस्य भगोपूर्वकस्य अघोपूर्वकस्य अकारपूर्वकस्य च रोर्यादेशः स्यादशि प्रत्याहारे परे इत्याशयेन सूत्रं व्याचष्टे- "एतत्पूर्वकस्य०" इति । 'देवास् इह' इति स्थिते 'ससजुषो रुः' इत्यनेन सस्य रुत्वे 'भोभगो'—इति सूत्रेण अकारपूर्वकस्य रोर्यादेशः 'देवाय् इह' इति स्थितिर्जाता । ततः "लोपः शाकल्यस्य" ( ८ । ३ । १९ ) इति वैकल्पिके यलोपे—देवा इह, देवा यिह इति रूपद्वयं ज्ञेयम् । अशि किम् । देवास्सन्ति । देवास् सन्ति इति स्थिते सस्य रुः । तस्य अश्परकत्वाभावान्न यत्वम्, किन्तु—'खरवसानयोः'—इति विसर्गे 'विसर्जनीयस्य सः' इति सत्वम् । "**सान्ता निपाता**" इति—चादेराकृतिगणत्वादिति भावः । '**तेषां रुत्वे यत्वे कृते**'—'भोभगोअघो—इति सूत्रेणेत्यर्थः । अर्थात् भोय् अच्युत, भोय् देवाः, भगोय् नमस्ते, अघोय् याहि इत्याकारायां स्थितौ जातायां 'लोपः शाकल्यस्य' इति तु न भवति यकारस्य अपूर्वकत्वाभावात् किन्तु-- '**व्योर्लघुप्रयत्नतरः शाकटायनस्य** इति सूत्रं प्रवर्त्तते । व् च य् च व्यौ तयोर्व्योः । 'पदस्य' इत्यधिकृतम् । तच्च यकारवकाराभ्यां विशेष्यते । विशेषणत्वेन तदन्तविधिः अतो वान्तस्य यान्तस्य च पदस्य इत्यर्थो लभ्यते । अलोन्त्यपरिभाषया तत् अन्त्यस्य भवति इति "पदान्तयोर्यवयो"रित्यर्थः फलति । लघुः प्रयत्नो यस्य उच्चारणे स लघुप्रयत्नः, अतिशयितो लघुप्रयत्न इति लघुप्रयत्नतरः लघूच्चारणतर इत्यर्थः । सच आन्तरतम्यात् वस्य वः, यस्य यः । 'अशि' इति पूर्वसूत्रादनुवर्त्तते । शाकटायनग्रहणं विकल्पार्थम् । एवं सति--'पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशिपरे' इति । सूत्रार्थः सम्पद्यते सर्वमिदं हृदि कृत्वा संक्षेपेणं व्याख्याति--'**अशि पदान्ते**' इति । यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स **लघूच्चारणः** । अतो

* ननु--प्रातरत्र धातर्गच्छ इत्यत्र रेफस्य "अतोरो०"--इति "हशि च" इति चेति यथायोगमुत्वं कुतो न स्यादित्यत आह--"रोरित्युकारानुबन्धग्रहणात्" इति । उकारोऽनुबन्धः इत् यस्य स उकारानुबन्धः तस्यैव उत्वविधौ ग्रहणात् प्रातरत्र धातर्गच्छ इत्यत्र रेफस्य उत्वं न भवतीत्याशयः ।

**गार्ग्यस्य**। ओत इति पञ्चमी। 'व्यो' रित्यतो यग्रहणमनुवर्त्तते नतु वकारोऽपि ओतः परस्य तस्यासम्भवात्। 'पदस्य' इत्यधिकृतं यकारविशेषणम् तेन तदन्तविधिः। ओकारात्परो यः यकारः तदन्तस्य पदस्येति लब्धे अलोन्त्यपरिभाषया पदान्तस्य यकारस्येत्यर्थः फलति। 'अशि' इत्यनुवर्त्तते। 'लोपः शाकल्यस्य' इत्यतो 'लोप' इति च। तदिदं सर्वं मत्वा सूत्रं व्याकरोति—"ओकारात्परस्य०" इति। गार्ग्यग्रहणं पूजार्थं व्याख्यानात्। अनेन यलोपे "भो अच्युत" इति रूपं जातम्। लघुप्रयत्नपक्षे तु "भोयच्युत" इति भवति। अत्र लघुप्रयत्नस्य विधानसामर्थ्यान्न लोपः। पदान्तस्य इति किम् तोयम्। अत्र यकारस्य ओतः परत्वेऽपि पदान्तत्वाभावात् "ओतो गार्ग्यस्य" इति न भवति। * **हलि सर्वेषाम्**। भो भगो अघो अपूर्वस्येति त्वनुवर्त्तते। 'व्योर्लघुप्रयत्नतरः'—इत्यतो यकारग्रहणञ्चेति मत्वाह—"भोभगोअघोअपूर्वस्ये"ति। सर्वेषां ग्रहणं शाकटायनस्यापि लोपो यथा स्यात् लघुप्रयत्नतरो माभूत्। 'व्यो'रित्यतो वकारस्तु नानुवर्त्तते भोभगोअघोअपूर्वस्याऽसम्भवात्। यद्यपि वृक्षं वातीति वृक्षवाः, तमाचष्टे वृक्षव्, णयन्तात् क्विप्, इष्ठवद्भावात् टिलोपः। "णेरनिटि" (६।४।५१) इति णिलोपः। 'वृक्षव् करोति' इत्यत्र अपूर्वकस्य तस्य सम्भवः तथापि नात्र लोपप्रसङ्गः अशीत्यनुवर्त्त्य अशा हलो विशेषणात् 'अशात्मके हलि' इति भाष्ये व्याख्यातत्वात्। 'वृक्षव् हसति' इति तूक्तभाष्यानुरोधादेवा ऽसाधु रिति वदन्ति। 'गव्यम्' इत्यत्र तु पदान्तत्वं नास्ति। 'गव्यूतिः' इत्यत्र तु वकारप्रश्लेषान्न वलोप इति **दीक्षिताः**। एवं यलोपे—भो देवाः, भगो नमस्ते, अघो याहि, देवा यान्ति इति सिद्धानि रूपाणि।

**रोऽसुपि ।८।२।६९। अह्नो रेफादेशो नतु सुपि। अहरहः। अहर्गणः। असुपि किम्। अहोभ्याम्। अत्राहन्निति रुत्वम्॥ रूपरात्रिरथन्तरेषु रुत्वम् वाच्यम्॥ अहोरूपम्। गतमहो रात्रिरेषा॥ एकदेशविकृतन्यायेनाहोरात्रः। अहोरथन्तरम्॥ अहरादीनां**

* एतद्विषये—'**अच्यस्पष्टश्च**' (१।१।१५४) इति जैनशाकटायनसूत्रम्—अस्यायमर्थः—अवर्णादघोभोभगोभ्यश्च परयोः पदान्तयोर्व्योरचिपरे ग्लुगास्पष्टोऽव्यक्तश्रुतिश्चासन्नो भवति। पट उ। पटवुँ। त उ। तयुँ। तस्मा उ। तस्मायुँ। अघो उ। अघोयुँ। अघो अत्र अघोयँत्र। भगो अत्र भगो यँत्र। ग्लुचि—'गितः' इति सन्धिप्रतिषेधः। असौ इन्दुः तस्मै आसनम्। देवाम् आसते इति स्थिते '**वाऽऽत्यात्**' (१।१।१५५) अवर्णात्परयोः पदान्ते यकारवकारयोः ग्लुगस्पष्टश्रुतिश्च तदासन्नो वा भवति अचि परे नोञि। पक्षे तादवस्थ्यम्। असा इन्दुः। असाविँन्दुः। असाविन्दुः। तस्मा आसनम्। तस्मायाँसनम्। तस्मायासनम्। देवा आसते। देवायाँसते। देवायासते। इत्येवं त्रीणि त्रीणि रूपाणि भवन्ति। अस्पष्टश्रुतिशब्देन अनुनासिको भण्यते।

पत्यादिषु वा रेफः। विसर्गापवादः। अहर्पतिः। गीर्पतिः। धूर्पतिः पक्षे विसर्गोपध्मानीयौ॥ **रोरि** ।८।३।१४। रेफस्य रेफे परे लोपः॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ।६।३।१११। ढरेफयोर्लोपनिमित्तयोः। पुना रमते। हरी रम्यः। शंभू राजते॥ **ढो ढे लोपः** ।८।२।१३। लीढः। अणः किम्। तृढः। वृढः। मनस् रथ इत्यत्र रुत्वे कृते "हशि च" (६।१।११४) इत्युत्वे "रोरि" (८।३।१४।) इति लोपे च प्राप्ते॥ **विप्रतिषेधे परं कार्यम्** ।१।४।२। तुल्यबलविरोधे परं कार्यं स्यात्। इति लोपे प्राप्ते। पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव। मनोरथः॥ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि नतु नञ्समासे। एष विष्णुः। स शंभुः। अकोः किम्। एषको रुद्रः। अनञ्समासे किम्। असःशिवः। हलि किम्। एषोऽत्र॥ **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४। स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत। सिमामविड्ढि प्रभृतिम्। सैष दाशरथी रामः॥ **इति विसर्गसन्धिः**॥

**रोऽसुपि**। रः, असुपि इति पदच्छेदः। "अहन्" (८।३।६८) इति सूत्रमनुवर्त्तते तच्च लुप्तषष्ठीकमिति मत्वा वृत्तिं करोति 'अह्नो०' इति। 'नतु सुपि' इति प्रसज्यप्रतिषेध आश्रितः, पर्युदासाश्रयणेतु नञिवयुक्तन्यायेन सुब्भिन्ने सुप्सदृशे प्रत्यये परे' इत्यर्थः स्यात्, तथा सति 'अहर्वान्' इत्यादावेव रेफः स्यात् नतु 'अहर्भाति' इत्यादावपि। उदाहरति—अहरहः, अहर्गणः इति। "नित्यवीप्सयोः" (८।१।४) इति द्विर्वचने 'अहन् अहन्' इति स्थिते 'रोऽसुपि' इति सूत्रेण सर्वस्य अहन् शब्दस्य रेफादेशे प्राप्ते 'अलोन्त्यस्य' अन्त्यस्य नस्यैव रेफः। ततः 'खरवसानयोः'—इत्यवसानरेफस्य विसर्गे पूर्वरेफस्य परयोगे च कृते 'अहरहः' इति सिद्धम्। एवमेव—अन्हां गण इति विग्रहे अहन् गण इति स्थिते अनेन रेफादेशे "अहर्गण" इति। इदं सूत्रं रोरपवादः। "असुपि किम्" इति। 'अहन् भ्याम्' इति स्थिते "अहन्" (८।३।६८) इति सूत्रेण रुत्वे "हशिच" (६।१।११४) इत्युत्वे आद्गुणे च कृते अहोभ्याम इति सिद्धयति, अत्राऽसिद्धावस्थायां नकारस्य सुप्परकत्वान्न रेफः। **रूपरात्रि०**। अहन्शब्दस्येति शेषः। 'रोऽसुपि' इति रत्वस्यापवादः। अहोरूपम्। 'अहन् रूप' मिति स्थिते अनेन वार्त्तिकेन नकारस्य रुत्वम्, उत्वम्, आद्गुणः

रुत्वे तु "हशि च" इत्युत्वं न स्यात् । एवमेव-गतमहो रात्रिरेषा इति । अर्थात् 'अहन् रात्रिः' इति स्थिते रुत्वे, उत्वे, आद्गुणे च सिद्धयति । (वार्त्तिकाभावे) रुत्वे कृते तु पूर्ववत् उत्वं न स्यात् । ननु-'अहोरात्र' इत्यत्र कथं रुत्वम् नकारस्य रात्रिशब्दपरकत्वा-भावादित्यत आह—**एकदेशेति** । एकदेशविकृतं अन्यवन्न भवतीति न्यायार्थः । नहि कर्णे पुच्छे वा छिन्ने गर्दभोऽश्वो भवति किन्तु गर्दभ एव । एवमेव—अहश्च रात्रिश्च इति द्वन्द्वे समासे "अहः सर्वैकदेश"—इति सूत्रेण समासान्ते अचि "यस्येति च" (६।४।१४८) इकारलोपे 'अहन् रात्र' इति स्थिते नकारस्य रुत्वे, उत्वे, आद्गुणे च कृते "रात्रान्हाहाः पुंसि" इति पुंस्त्वे "अहोरात्र" इति रूपम् । अत्र नकारस्य रात्रिशब्दपरकत्वाभावेऽपि रात्रशब्दे एकदेशविकृतन्यायेन 'रात्रि' रूपप्रतीतेः रुत्वमेवेति भावः । एवमेव—'अहोरथन्तरम्' इति ज्ञेयम् । अहश्च रथन्तरञ्चेति द्वन्द्वसमासः । 'रथन्तरम्' इति सामविशेषनाम । **अहरादीनाम०** । स्पष्टम् । अहरादीनां रेफविशिष्टस्य उपादानात् रेफस्य रेफविधानार्थं वार्त्तिकारम्भो व्यर्थ इति शङ्कायामाह-*"**विसर्गापवाद**" इति अन्हां पतिः, गिरां पतिः, धुरां पतिः इति यथायथं षष्ठीतत्पुरुषविग्रहः । उभयत्रापि- "र्वोरुपधाया दीर्घ इकः" इति दीर्घः । सन्धौ कर्त्तव्ये असिद्धरूपस्थितिस्तु—अहर् पतिः, गीर् पतिः, धूर् पतिः इति ज्ञेया । "पदे" इति । रुत्वाभावपक्षे—"कुप्वोः"— इति विसर्गस्य उपध्मानीयविसर्गौ । अहः पतिः अह $\asymp$ पतिः । †गीः पतिः । गी $\asymp$ पतिः । धूः पतिः धू $\asymp$ पतिः इत्याद्येवं त्रीणि त्रीणि रूपाणि सन्तीत्यर्थः । अत्र वाशब्दस्य व्यवस्था-वाचित्वात् समास एवायं विधिः तेन 'इयं गीः, पतिरयं पशूनाम्' इत्यादौ न रेफः इति **बोपदेवानुसारिणः** । 'अपर आह – सामान्येन रेफादौ रुत्वं भवति । अहोरम्यम् । अहोरत्नानीति" इति **काशिका** । **रोरि** । 'रः' इति षष्ठी । "ढोढे लोप" इत्यतो लोप इत्यनुवर्त्तते तदाह—'**रेफस्य**' इति । 'पुनर् रमते' इति स्थिते अनेन रेफपरकरेफस्य लोपे 'पुनः रमते' इत्याकारे च जाते सूत्रं प्रवर्त्तते—**ढ्लोपे पूर्वस्य-दीर्घोऽणः** । ढश्च रश्च ढ्रौ तौ लोपयतीति ढ्लोपः । णिजन्तात् कर्मण्यणि उपपदसमासः । ढलोपनिमित्ते ढकारे रेफलोपनिमित्ते रेफे च परतः पूर्वस्याणो दीर्घ इत्यर्थं हृदि कृत्वा

---

* "मो राजि समः क्वौ" (८।३।२५) इत्यत्र यथा राजतौ परे समो मस्य मविधानम् एवमत्रापि रेफस्य रेफविधानं विकारनिवृत्त्यर्थमिति भावः ।

†"मुग्धबोधे" तु—"**खपि वा**" (७४ वि० सं० पा०) अचः परस्य रेफस्य वेः (विसर्गस्य) रेफः स्याद्वा खपि परे इत्युक्त्वा गीर्पतिः, गीष्पतिः, गीः पतिः धूर्पतिः, धूष्पतिः, धूः पतिः, अहर्पतिः, अहस्पतिः, अहः पतिः इति साधयन्ति । तदेतत् कौमाराणां सम्मतं मतमिति **काचित्** । पाणिनीयानां मते तु 'गीष्पतिः धूष्पतिः' इत्याद्याः प्रयोगाः कस्कादित्वात्साधनीया इति नः प्रतिभाति ।

संक्षेपेण व्याख्याति—"ढरेफयोर्लोपनिमित्तयो"रिति। एवञ्चोक्तोदाहरणे "रोरि" इति रेफलोपनिमित्तकरेफे परतः पूर्वस्य अण्प्रत्याहारान्तर्गतनकारोत्तरवर्त्त्यकारस्य दीर्घः। "पुनारमते" इति सिद्धम्। एवमेव—हरीरम्यः, शम्भूराजते। नीरक्तम्, अग्नीरथः, इन्दूरथः, पुनारक्तम्, प्राताराजक्रयः इत्यादि च ज्ञेयम्। **ढोढे लोपः**। स्पष्टम्। **लीढः**। लिह् आस्वादने। अस्मात् 'क्त' प्रत्यये ढत्वधत्वष्टुत्वेषु 'लिढ् ढ' इति स्थिते अनेन ढलोपे "ढ्लोपे"—इति पूर्वस्य अणः इकारस्य दीर्घे रूपम्। एवमेव मीढः उपगूढ इत्याद्यपि। 'अणः किम्' इति। 'ढ्लोपे' इति अणः इत्यस्य किं फलमिति प्रश्नः। उत्तरमाह—"तृढः वृढः" इति। 'तृहू' हिंसायाम् 'वृहू' उद्यमने। आभ्यां क्त प्रत्यये "होढः" (८।२।३१) इति ढत्वे "झषस्तथोर्धोऽध" (८।२।४०) इति सूत्रेण तकारस्य धत्वे तस्य "ष्टुनाष्टुः" इति ष्टुत्वेन ढे कृते "ढोढेलोप" इति पूर्वस्य ढकारस्य लोपे सति 'तृढः वृढः' इति रूपे भवत इति वस्तुस्थितिः। यदि सूत्रे 'अणः' इति नोच्येत तदाऽत्रापि ढलोपनिमित्ते ढकारे परे पूर्वस्य ऋकारस्य दीर्घः स्यात्, न चेष्यते अत ऋकारस्य दीर्घनिवृत्त्यर्थमण्ग्रहणमिति भावः। कृतेत्वण्ग्रहणे ऋकारस्यानण्त्वान्न दीर्घ इति परः सारः। अत्र बहु वक्तव्यं बालानां काठिन्य-भयान्नोक्तम्। "मनोरथः" इति प्रयोगं दर्शयितुं भूमिकां रचयति—'मनस् रथ' इति। ***विप्रतिषेध**। द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र लक्ष्ये युगपत्सम्भवस्तुल्य-बलविरोधो **विप्रतिषेधः**। कार्यस्य परत्वन्तु परशास्त्रविहितत्वम्। "**इतिलोपे प्राप्ते**" इति। 'हशिच' (६।१।११४) इत्यस्यावकाशः शिवोवन्द्य इति, रेफलोप-स्यावकाशः पुनारमते इति। अत्र 'रोः' इत्युकारानुबन्धग्रहणात् 'हशि च' इत्युत्वं प्रसक्तम्, रेफपरकरेफसत्त्वात 'रोरि' इति पूर्वरेफलोपः प्रसक्तः इत्येवं द्वयोस्तुल्यबलयोः उत्वरेफलोपयोः 'मनोरथ' इत्यत्र युगपत्सम्भवात् अन्यतरस्य बाधनीयत्वे परत्वादुत्वं बाधित्वा रेफलोपप्राप्तिरित्यर्थः। सा च प्रकृते नेष्टा अत आह—†**पूर्वत्रासिद्धमिति** सिद्धाऽसिद्धयोरतुल्यबलत्वेन 'विप्रतिषेधे--' इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेवेति सिद्धान्तः। तदुक्तं पूर्वत्राऽसिद्धे नास्ति प्रतिषेधादभावादुत्तरस्येति। **एतत्तदो०**। अत्रैकशेषस्य त्यदाद्यत्वस्य चाभाव आर्षः। सु इति लुप्तषष्ठीकं पदम्। एतत्तदोरित्यने-नान्वेति। एतत्तदोः सकारस्येत्यर्थः। अत एव सोर्लोप सुलोप इति न षष्ठीसमासः

---

* विप्रतिपूर्वात सेधतेर्घञि उपसर्गवशात् परस्परविरोधे विप्रतिषेधशब्दः। विरोधश्च तुल्यबलयोरेव लोकसिद्धः नहि मशकसिंहयोर्विरोध इति तदाह **तुल्यबलेति**। द्वयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसम्भविकार्यसमर्पणे परं कार्यमित्यर्थः।

† अत्र रेफलोपस्यासिद्धत्वादित्यनुक्त्वा 'रोरि' इत्यसिद्धत्वादिति ब्रुवन् पूर्वत्रा-सिद्धमित्यत्र शास्त्राऽसिद्धत्वमेवाभ्युपैति नतु कार्यासिद्धत्वम्।

सामर्थ्याभावात्। अविद्यमानः ककारो ययोस्तौ अकौ तयोः अकोरिति बहुव्रीहिरित्येवं सर्वं मत्वा व्याचष्टे—**अककारयोः**—इति। **नतु नञ्समास** इति। अनञ्समास इति न पर्युदासः तथासति नञिवयुक्तन्यायेन नञ्समाससदृशे समास एव स्यात् नतु 'एष विष्णुः' इत्यादिवाक्येषु तस्मात्प्रसज्यप्रतिषेध एवेति भावः। "एषस् विष्णुः सस् शम्भुः" इति यथाक्रमं स्थिते अनेन सूत्रेण वकारादिहलि परतः सकारस्य लोपे सिद्धं भवति एष विष्णुः, स शिवः इति। एवमेव—एष करोति, स याति, एष कृष्णः, स हरिः इत्यादिरूपाणि ज्ञेयानि। **अकोः किम्** इति। 'एषको रुद्र' इति। अत्र—"अव्ययसर्वनाम्नामकच् प्राक्टेः" इत्यकच्। एषकस् रुद्र इति स्थिते अत्र एतच्छब्दस्य सककारत्वात् नास्ति सुलोपः, किन्तु उत्वे सति आद्गुणः। यद्यस्मिन्सूत्रे अकोरिति नापठिष्यत्सूत्रकारः तर्ह्यत्रापि सोर्लोपे 'एषकरुद्र' इत्यसाधुः प्रयोगोऽभविष्यत् अतस्तद्वारणाय 'अकोः' रिति पठितम्। एवमेव—तच्छब्दे अकचि 'सको रुद्र' इत्यत्रापि ज्ञेयम्। ननु—अकच्सहितयोः तयोः शब्दान्तरत्वमेव, अतो नातिप्रसङ्ग इति चेत् न, "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति परिभाषया साकच्कयोस्तयोः शब्दान्तरत्वाभावात्। इदमेव "अकोः" रिति ग्रहणमेतस्याः परिभाषाया ज्ञापकमितिभावः। "**अनञ्समासे किम्**"* इति। एतत्पदस्य सूत्रे किं प्रयोजनमिति प्रश्नः। आह—"असः शिव" इति। न सः असः इति नञ्तत्पुरुषविग्रहः। अत्र नञ्समासत्वात् 'एतत्तदो' रितिसूत्रस्याप्राप्तौ 'ससजुषोरु' रिति सस्य रुत्वे 'खरवसानयोः'—इति रस्य विसर्गे 'असः' इति सिद्धम्। ततः 'असः शिवः' इत्यवस्थायां "वा शरि" इत्यनेन 'असश्शिवः, असः शिव" इति रूपद्वयं भवति नतु सोर्लोपः नञ्समासत्वात्। एवम्—अनेषः शिव इत्यपि प्रत्युदाहरणम्। "हलि किम्" इति। एषस् अत्र इति स्थिते सस्य रुत्वे, उत्वे आद्गुणे पूर्वरूपे च कृते सिद्धं भवति "एषोऽत्र" इति। अत्र हल्परकत्वाभावान्न सुलोपः। **'सोऽचिलोपे'**० सस् इति प्रथमान्तस्य लुप्तषष्ठीकस्यानुकरणम्। 'अचि' इति विस्पष्टार्थम्। तदाह—"**स इत्यस्य**" इति। उदाहरति **सेमाम** इति। "सस् इमामविड्ढि प्रभृतिं य ईशिषे" इत्यत्र सकारलोपे आद्गुणे च कृते 'सेमा०' इति जाते सत्येव पादपूर्त्तिर्भवति, अतोऽत्र सकारस्य लोप एव। सेमामिति द्वादशाक्षरपादा जगती छन्दः। एवम्—"सैषदाशराथी राम" इत्यादावपि ज्ञेयम्। **लोपे चेत्** इति किम्। "स इत् क्षेति"। 'स एवमुक्त्वा" इत्यादौ न सकारलोपः। लोपे सत्यत्र पादपूर्तेरभावात्।

इति प्राज्ञचित्तप्रसादिन्यां विसर्गसन्धिः।

---

* नञ्तत्पुरुषस्य पूर्वपदार्थप्रधानत्वेन तच्छब्दाद्यर्थस्योपसर्जनत्वात् त्यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति प्रश्नः। इदमेव ज्ञापकं नञ्समासे उत्तरपदार्थप्राधान्यस्य, गौणत्वेऽपि नञ्समासे उत्तरपदार्थप्राधान्यप्रयुक्तार्थस्य वेत्युत्तराभिप्रायः।

अथ अजन्तपुंल्लिङ्गप्रकरणम्।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्॥ **कृत्तद्धितसमासाश्च** ।१।२।४६। कृत्तद्धितान्तौ समासाश्च तथा स्युः॥ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ।४।१।२। सुऔजसिति प्रथमा। अम् औट् शस् द्वितीया। टा भ्याम् भिस् तृतीया। ङे भ्याम् भ्यस् चतुर्थी। ङसि भ्याम् भ्यस् पञ्चमी। ङस् ओस् आम् षष्ठी। ङि ओस् सुप् सप्तमी॥ **ङ्याप्प्रातिपदिकात्** ।४।१।१। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः॥ **सुपः** ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः॥ **द्व्येकयोर्द्विवचनैकवचने** ।१।४।२२। द्वित्वैकत्वयोरेते स्तः॥ **विरामोऽवसानम्** ।१।४।११०। वर्णानामभावोऽवसानसंज्ञः स्यात्॥ रुत्वविसर्गौ रामः॥ अयोगवाहानामट्सूपरि शर्षु चेति वाच्यम्॥ यमानुस्वारविसर्गजिह्वामूलीयोपध्मानीया अयोगवाहाः॥ तेनेह विसर्गस्य चर्त्वादनचि चेति द्वित्वपक्षे रामः॥ **सरूपाणामेकशेष एकविभक्तौ** ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥ **प्रथमयोः पूर्वसवर्णः** ।६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्॥ इति प्राप्ते॥ **नादिचि** ।६।१।१०४। आदिचि न पूर्वसवर्णदीर्घः॥ वृद्धिरेचि॥ रामौ॥ **बहुषु बहुवचनम्** ।१।४।२१। **चुटू** ।१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः॥ **विभक्तिश्च** ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः॥ **न विभक्तौ तुस्माः** ।१।३।४। विभक्तिस्थास्तुस्मा नेतः। इति सस्य नेत्वम्। रामाः॥

" स्वौजस्मौट्० " इत्यादिना स्वादिप्रत्ययान् वक्ष्यति, तत्र स्वादिविधौ प्रातिपदिकाधिकारात् तां संज्ञामाह—" **अर्थवदधातु** "-इति । * अभिधेयवचनोऽर्थशब्दः । अर्थात् लौकिके प्रयोगे योऽर्थः तद्वत्त्वमर्थवत्त्वम् । उदाहरणं यथा—डित्थः डवित्थः, कुण्डम् पीठम्, ( गौः शुक्लः चलः ) इत्यादि । 'अर्थवत्' इति किम् । धनं वनम् इत्यत्र नान्तस्यावधेः प्रातिपदिकसंज्ञा माभूत् तथा सति हि ( प्रातिपदिकसंज्ञायां ) " न लोपः प्रातिपदिकान्तस्य " ( ८ । २ । ७ ) इति नलोपः स्यात् । नहि 'धनम्' इत्यादौ नान्तावधिरर्थवान् इति, सति तु अर्थवद्ग्रहणे न दोष इति भावः । "अधातुः" इति किम् । अहन् । 'हन्' धातो लङि तिप्, शप्, लुक्, "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपः, अडागमः, हल्ङ्यादिलोपश्च 'अहन्' इति रूपं भवति । सत्यां हि प्रातिपदिकसञ्ज्ञायां नलोपः स्यात् । " अप्रत्यय " इति किम् । काण्डे कुड्ये । "ह्रस्वो नपुंसके प्रातिपदिकस्य" ( १ । २ । ४७ ) इति ह्रस्वः स्यात् । **प्रत्ययं प्रत्ययान्तञ्चेति** । † तन्त्रादिना उभयं विवक्षितमित्यर्थः । एवं सति—प्रत्ययभिन्नं प्रत्ययान्तभिन्नमर्थवच्छब्दरूपं संज्ञि प्रातिपदिकञ्च सञ्ज्ञा । अत एव—महाभाष्ये 'न लोके केवलेन प्रत्ययेनार्थोऽगम्यते, केन तर्हि सप्रकृतिकेन' इत्युक्तम् । हरिरप्याह—

---

* अभिधेयन्तु चतुर्विधं भवति जातिगुणक्रियाद्रव्यभेदात् । जातिशब्दा यथा—गौः अश्व इत्यादयः । गुणशब्दा यथा—शुक्लः कृष्ण इत्यादयः । क्रियाशब्दा यथा—पाचकः गन्तेत्यादयः । द्रव्यशब्दा यथा—डित्थडवित्थादयः । ननु—बन्ध्यापुत्राभावशशविषाणगगनकुसुमादीनामर्थाभावात् प्रातिपदिकसञ्ज्ञा न प्राप्नोति ? उच्यते—अभावोऽपि पदार्थान्तरत्वेनाभिधेयत्वादभावशब्दस्य सिद्धा सञ्ज्ञा । बन्ध्यादिशब्दार्थः पुत्रादिशब्दार्थश्च प्रसिद्ध एव, तयोः संसर्गमारोप्य शब्दप्रयोगसम्भवात्तेषामप्यस्ति, एवमेव शशविषाणादिषु द्रष्टव्यम् । 'धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वा' इति व्याख्यानेन 'अधातुः अप्रत्यय' इत्यत्र प्रसज्यप्रतिषेधो नञ् । उक्तञ्च—

द्वौ नञौ तु समाख्यातौ पर्युदासप्रसज्यकौ ।
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥
प्राधान्यन्तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥
अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ् ॥

† नानाफलकसमानाकारकानेकव्यापाराणां मध्येऽनेकफलोद्देशेनैकव्यापारकरणं तन्त्रम् ।

धात्वादीनां विशुद्धानां लौकिकार्थो न विद्यते ।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ॥
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ॥ इति ।

**अत्रायमाशयः** । यदि प्रत्ययस्यैव पर्युदासः स्यात् तदा कृत्तद्धितसूत्रे तद्धितान्तस्य सञ्ज्ञाविधानं व्यर्थं स्यात् । न च तत्रापि तदन्तं न ग्राह्यम् अर्थवदित्यस्यानुवृत्तिसामर्थ्यात् तदन्तग्रहणात् प्रशंसायां हि मतुप् । एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वञ्च प्रशंसामूलम् । न च अर्थवदित्यस्य पूर्वसूत्रे चरितार्थता धातुप्रत्ययपर्युदासेनैव तल्लाभात् तस्मा'त्प्रत्ययान्तं च वर्जयित्वा ' इत्युचितमेव । यदि तु प्रत्ययो न पर्युदस्येत तर्हि " सात्पदाद्योः " * ( ८ । ३ । १११ ) इति सूत्रे सातिग्रहणं †व्यर्थं स्यात् । इदं सातिग्रहणमेव प्रत्ययपर्युदासे लिङ्गमिति भावः । एवञ्च—" हरिषु करोषि " इत्यत्र सुप्सिपोरर्थवत्त्वात् अप्रत्ययान्तत्वाच्च प्रातिपदिकत्वे प्राप्ते तन्निवृत्त्यर्थमप्रत्यय इति प्रत्ययपर्युदासः सफलः । नच सुप्सिपोर्व्यपदेशिवद्भावेन प्रत्ययान्तत्वात् प्रत्ययान्तपर्युदासेनैव प्रातिपदिकसञ्ज्ञावारणसम्भवे प्रत्ययपर्युदासो निरर्थक एवेति वाच्यम् । " प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् " इति परिभाषया प्रकृतिप्रत्ययसमुदायस्यैव प्रत्ययान्ततया केवलयोः सुप्सिपोः प्रत्यययोः पर्युदासाभावात्, तथासति तयोः प्रातिपदिकसञ्ज्ञायामौत्सर्गिकैकवचने पदत्वेन " सात्पदाद्योः " इति षत्वनिषेधः स्यात्, सति तु प्रत्ययपर्युदासे नासौ प्रवर्त्तेत इति भावः । " अप्रत्ययान्त " इति किम् । " हरिषु " इति प्रकृतिप्रत्ययसमुदायस्य अर्थवत्त्वेन प्रातिपदिकत्वात् " सुपोधातु "—( २।४।७१ ) इति सुपो लुगापत्तिः स्यात् । एवं ' पचेरन् ' इत्यत्र नलोपापत्तिश्च स्यात्, तद्वारणाय प्रत्ययान्तपर्युदासोऽप्यावश्यक इति भावः । " **अर्थवत् प्रातिपदिकम्** " इत्येव न्याय्यम् निरर्थकपदसमुदायव्यावृत्तिरेवार्थवत्पदफलम् । सङ्घयाकर्मादेरभावाच्च नैव प्रतिवर्णं विभक्त्युत्पत्तिः । ‡ "प्रा" इति लघुसञ्ज्ञया प्रयोजनसिद्धावपि महासञ्ज्ञाकरणं श्रुत्यनुरोधात् । तथाच —आथर्वणे (गोपथब्राह्मणे) 'को धातुः, किं प्रातिपदिकम् कः प्रत्ययः' इत्युक्तम् । **कृत्तद्धितसमासाश्च** । पूर्वसूत्रे ' अप्रत्यय ' इत्युक्तम् तेन कृदन्तस्य तद्धितान्तस्य च प्रातिपदिकसञ्ज्ञा न प्राप्नोतीति अनेन प्रातिपदिकसञ्ज्ञा विधीयते । कृच्च तद्धितश्च

---

*सातेः पदादेश्च सस्य षो न । †अनेन प्रत्ययपर्युदासे मानयुक्तम् । सातेः प्रातिपदिकत्वे हि तत औत्सर्गिकैकवचने तस्यापि सुबन्तत्वेन पदत्वे पदादित्वादेव निषेधसिद्धेस्तद्व्यर्थमिति भावः । ( शब्दरत्नम् ) ।

‡ व्याकरणान्तरेषु —अव्ययस्य स्थाने " व्य " सञ्ज्ञां वृद्धिसञ्ज्ञास्थाने "व्रि" सञ्ज्ञां कृत्वापि व्यवहारः साधितः । अत्र त्वार्षे, तथातथासञ्ज्ञादिपाठेऽदृष्टादिकमप्याश्रीयत इत्याभाति । इयमदृष्टकल्पना प्राचां परां कोटिमिवा ।

समासश्च इति विग्रहः । पूर्वसूत्रात् "प्रातिपदिकम्" इत्यनुवर्त्तते । "अर्थवत्" इति च, तत्सामर्थ्यात् तदन्तविधिः । नहि जहत्स्वार्थायां वृत्तौ कृतां तद्धितानाञ्च अर्थोऽस्ति । भूतपूर्वगतिलभ्यस्तु न प्रशस्तः (प्रशंसायाञ्च मतुबित्युक्तं प्राक्) अजहत्स्वार्थायामपि न प्रत्ययमात्रेणार्थपर्यवसानम् इत्यभिप्रेत्याह—"**कृत्तद्धितान्तौ**" इति । प्रत्ययान्तेन ह्येकार्थीभूतेन प्रतीयमानोऽर्थ इह गृह्यते, तस्य लौकिकार्थम्प्रति प्रत्यासन्नतरत्वात् मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात् । अतएव तदुपादानं सार्थकमिति भावः । अर्थवत्समुदायानां समासग्रहणं नियमार्थम् । समासग्रहणस्य नियमार्थत्वाद् वाक्यस्यार्थवतः सञ्ज्ञा न भवति । उक्तञ्च—

**यत्रार्थवति संघाते पूर्वोभागस्तथोत्तरः ।**
**स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चत् ।** इति ।

तेन "देवदत्त गामभ्याज शुक्लां दण्डेन" इत्यादि वाक्यस्य प्रातिपदिकसञ्ज्ञा न भवति । नियमशरीराभावे तु वाक्यस्यापि प्रातिपदिकत्वापत्तौ सुब्लुक् स्यात् । कृदन्ते यथा—कर्त्ता हर्त्ता । तद्धिते यथा—औपगवः काण्टवः । समासे यथा—राजपुरुषः कृष्णश्रितः इत्यादि । **स्वौजसमौट्०** । सु औ जस् इत्यादिना सूत्रं विवृणोति । एते एकविंशतिः स्वादयः । समाहारद्वन्द्वः । सौत्रमेकवचनम् । उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्थाः । पकारः "सुप्" इति प्रत्याहारार्थः । * सङ्ख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहिताः, तेन सहास्य सूत्रस्यैकवाक्यता ज्ञेया । **ङ्याप्प्रातिपदिकात्** । अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्याम आपञ्चमाध्यायपरिसमाप्तेर्ङ्याप्प्रातिपदिकादित्येवं वेदितव्यम् । ङी इति ङीब्ङीष्ङीनां सामान्येन ग्रहणम् । आबिति टाप्डाप्चापां ग्रहणम् । ङीच आप्च प्रातिपदिकञ्चेति समाहारद्वन्द्वः । † प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् तदाह—**ङ्यन्तादित्यादि** । ङ्यन्तात्तावत् ‡ कुमारी, § गौरी, ¶ शार्ङ्गरवी । आपः खल्वपि—* खट्वा, बहुराजा, कारीषगन्ध्या । **सुपः** । सुप् इति प्रत्याहारः ।

---

* उच्चरितात्सुबन्ताद् गुणप्रधानभावेनावस्थिताः स्वार्थद्रव्यलिङ्गसङ्ख्याकर्मादिलक्षणाः पञ्च अर्थाः प्रतीयन्ते । तत्र स्वार्थद्रव्यलिङ्गलक्षणाः प्रकृत्यर्थाः । सङ्ख्याकर्मादिलक्षणा विभक्त्यर्थाः । उक्तञ्च—

**जातिर्व्यक्तिश्चलिङ्गञ्च प्रकृत्यर्थोऽभिधीयते ।**
**सङ्ख्या च कारकञ्चैव प्रत्ययार्थोऽभिधीयते ॥** इति ।

† "प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषयेत्यर्थः ।

‡ "वयसि प्रथमे" ( ४ । १ । २० ) इति ङीप् । § "षिद्गौरादिभ्यश्च" ( ४ । १ । ४१ ) इति ङीष् । ¶ शार्ङ्गरवाद्यञो ङीन् ( ४ । १ । ७३ ) इति ङीन् ।

* खट्वा इत्यत्र "अजाद्यतष्टाप्" ( ४ । १ । ४ ) इति टाप् । बहुराजा इत्यत्र "डाबुभाभ्यामन्यतरस्याम्" ( ४ । १ । १३ ) इत्यनेन डाप् । कारीषगन्ध्या इत्यत्र "यङश्चाप्" ( ४ । १ । ७४ ) इति चाप् ।

षष्ठ्येकवचनम्, नतु सप्तमीबहुवचनम् । "तिङस्त्रीणि त्रीणि" (१।४।१०१) इति सूत्रात् त्रीणि त्रीणि इत्यनुवर्त्तते । "तान्येकवचन"—(१।४।१०२) इति सम्पूर्णं सूत्रश्चेति तद्याचष्टे—"**सुपस्त्रीणि**"—इत्यादि । एकशः = एकैकमित्यर्थः । सु इत्येकवचनम् । औ इति द्विवचनम् । जस् इति बहुवचनम् । एवं सर्वत्र ज्ञेयम् । **द्व्येकयोः०** । अत्र द्व्येकशब्दौ सङ्ख्यापराविति—मत्वा व्याख्याति "**द्वित्वैकत्वयो**" रिति । सङ्ख्येयपरत्वे तु बहुवचनं स्यादिति भावः । एतदपि सामान्यविहितयोर्द्विवचनैकवचनयोरर्थाभिधानम्, द्वित्वे द्विवचनं भवति, एकत्वे एकवचनं भवतीत्यर्थः । यथा—ब्राह्मणौ पठतः । ब्राह्मणः पठति । **विरामोऽवसानम** । विरतिर्विरामः । लोके प्रतीतपदार्थकध्वन्यात्मकशब्दानुशासनेऽभावो भावो वा वर्णानामेव संभवतीत्यत आह—**वर्णानामिति** । अभावश्चायं संसर्गाभावो बोध्यः । 'विवक्' इत्यादौ प्रध्वंसाभावो 'रामः' इत्यादावत्यन्ताभावश्चेति विवेकः । "**रुत्वविसर्गौ**" इति । "**राम**" इति । अत्रेयं प्रक्रिया—इह व्याकरणे पक्षद्वयमङ्गीक्रियते * रूढिर्योगश्चेति । यदा रूढिः पक्षः तदा रामशब्दस्य "अर्थवदधातु"—इति सूत्रेण प्रातिपदिकसञ्ज्ञा विधेया । यदा तु योगः पक्षः आश्रयितव्यः तदा "रम्" क्रीडायाम् इत्यस्मात् धातोः "करणाधिकरणयोश्च" (३।३।११७) इत्यधिकारे "हलश्च" (३।३।१२१) इति सूत्रेण अधिकरणे घञि रमन्ते योगिनोऽस्मिन्निति व्युत्पन्नस्य रामशब्दस्य "कृत्तद्धितसमासाश्च" (१।२।४६) इति सूत्रेण प्रातिपदिकसञ्ज्ञा क्रियते । अनया रीत्या सर्वत्र अव्युत्पन्नेषु व्युत्पन्नेषु च शब्देषु उक्तसञ्ज्ञाया आश्रयणनियमो ज्ञेयः । एवं—रामशब्दस्य प्रातिपदिकसञ्ज्ञायां सत्यां सूत्रस्य प्राप्तिः "ङ्याप्प्रातिपदिकात्" इति । अनेन सूत्रेण प्रातिपदिकसञ्ज्ञत्वात् रामशब्दात् खलेकपोतन्यायेन युगपत् स्वादयः † सर्वा अपि विभक्तयः प्राप्ताः तत्रासां मध्यात् कतमया भाव्यमित्यपेक्षायां "सुपः" इति सूत्रेण वचनानामेकवचनद्विवचन-बहुवचन-सञ्ज्ञायां कृतायां, "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रेण "राम" प्रातिपदिकार्थगतैकत्वसङ्ख्याविवक्षायां प्रथमाया एकवचने "राम" शब्दात्परं 'सु' इति स्थापिते "राम सु" इति स्थितिर्जायते । ततः "उपदेशेऽजनुनासिक इत्" इतिसूत्रेण सकारोत्तरवर्त्तिन उकारस्य इत्सञ्ज्ञायां कृतायां "तस्य लोप" इत्यनेन उकारलोपे "राम स्" इति स्थिते "ससजुषो रुः" इत्यनेन सस्य रुत्वे, रेफोत्तरवर्त्तिन उकारस्य पूर्ववत् इत्सञ्ज्ञायां, लोपे कृते 'राम र्' इत्यवस्थायां "विरामोऽवसानम्" इति सूत्रेण रकारात्परस्य शून्यदेशस्य यदाऽवसानसंज्ञा जाता, ततः "खरवसानयोर्विसर्जनीय" इति रेफस्य विसर्गे विहिते "**रामः**" इति सिद्धं भवति ।

ननु—रुत्वस्यासिद्धत्वादुकारस्येत्सञ्ज्ञालोपयोरभावात् "स्थानिवदादेश" इत्यस्यापि त्रिपाद्यामप्रवृत्त्या रेफान्तस्य सुप्तिङन्तमिति पदसञ्ज्ञाभावेन च विसर्गोऽत्र दुर्लभः

* समुदायशक्ती रूढिः । अवयवशक्तिर्योगः । † सप्त ।

विसर्गविधेस्तु पुनरित्यादौ चरितार्थत्वात्‌ददिति चेन्मैवम् "नमुने" (८।२।३) इति सूत्रे नेति योगं विभज्य असिद्धं नेति व्याख्यायामिष्टसिद्धिरित्युक्तत्वादिति **तत्त्वबोधिनीकारः । शब्देन्दुशेखरे तु** रुत्वे एकदेशविकृतन्यायेन सुबन्ततया पदत्वाद्विसर्ग इति स्थितम् ।*"**अयोगवाहानाम्**" इति । अकारस्योपरि विद्यमानानमयोगवाहानां शर्षु पाठः कर्त्तव्य इत्यर्थः । के ते अयोगवाहा इत्याह—"**यमानुस्वार०**" इति । प्रकृते उक्तग्रन्थस्य फलं दर्शयति—'**हेनेह**" इत्यादिना । विसर्गस्य द्वित्वपक्षे विसर्गचतुष्टयोपेतः "**रामः**" इति प्रयोगो ज्ञेयः । बुद्धिवैभवमात्रमिदं वैयाकरणानाम् । प्रातिपदिकार्थगतद्वित्वादिविवक्षायां प्रातिपदिकस्य द्वित्र्यादिप्रयोगप्राप्तावदमारभ्यते—"**सरूपाणाम्०**" इति । समानं रूपं येषां तानि सरूपाणि तेषां सरूपाणाम् । "ज्योतिर्जनपद"— ६ । ३ । ८३ ) इत्यादिना समानस्य सभावः । निर्धारणे षष्ठी । "वृद्धो यूना' — ( १ । २ । ६५ ) इति सूत्रात् "एव" इत्यपकृष्यते शिष्यत इति शेषः । इतरनिवृत्तिपूर्वकमवस्थानं **शेषशब्दार्थः** । एकविभक्ताविति सरूपाणामित्यत्र अन्वेति । ततश्च—"एकस्यां विभक्तौ परतः सरूपाणामेव दृष्टानां मध्ये एकः शिष्यते" इति फलितं मत्वा सूत्रं व्याचष्टे—"**एकविभक्ता**"विति । "**सरूपाण्येव**" इति । तेन जननीवाची यो मातृशब्दः, परिच्छेत्तृवाची च यो मातृशब्दः तयोः "मातृभ्याम्" इत्येवं भ्यामादौ क्वचित्सारूप्येऽपि औजसादिषु "मातरौ मातारौ" इति वैरूप्यदर्शनान्नैकशेषः । एवञ्च—एकस्यामपि विभक्तौ परतो विरूपाणि न दृष्टानि इति पर्यवसन्नोऽर्थः । हरिणस्त्रीहरितवर्णस्त्रीवाचिहरिणीशब्दस्यैकशेषो भवत्येव । इदञ्च "एकविभक्तौ" इत्यस्योपादानफलम्, अन्यथा पुंवद्भावेन तद्धितादौ वैरूप्यात् तयोरेकशेषो न स्यात् । "एकशेषश्चायमनैमित्तिकत्वेनान्तरङ्गत्वाद्विभक्त्युत्पत्तेः पूर्वमेव, एतद्विषये द्वन्द्वप्राप्तिरेव नेति बोध्य"मिति **नागेशः** । †असति ह्येकशेषे सुबुत्पत्तिः पक्षे द्वन्द्वश्च स्यादिति भावः । सति तु अनेकसुबन्तविरहात् द्वन्द्वस्याप्राप्तिः फलिता भवति । रामशब्दात् प्रथमाया द्विवचनविवक्षायां रामराम इति स्थिते "सरूपाणा"मिति सूत्रेण विभक्त्युत्पत्तेः प्राक् एकशेषे च कृते ‡"यः शिष्यते स लुप्यमानार्थाभिधायी" इति नियमेन

---

* न विद्यते योगः सम्बन्धो येषां समाम्नाये तेऽयोगाः, वहन्ति ते वाहाः । अयोगाश्च ते वाहाश्चेति **अयोगवाहाः** ।

† यद्येतन्नारभ्येत तर्हि प्रत्येकं विभक्तिः स्यात् द्वन्द्वश्च प्रवर्त्तेत । आरब्धे तु एकशेषो भवति नतु द्वन्द्वः अनेकपदाभावादिति भावभावः ।

‡ ननु—सुबाद्युत्पत्तेः प्राक् एकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थम्बोधयेदिति द्विवचनाद्युत्पत्तौ रामौ रामाः इत्यादि न सिद्ध्येदित्याशङ्कायामाह—"**यः शिष्यते**" इति । अस्यायमाशयः । शिष्यमाणो लुप्यमानार्थं कथयति, एकशेषस्य वृत्तिषु पाठात् । परार्थाभिधानं वृत्तिरिति । अतएव लुप्तेऽपि प्रत्यये "लिट् धुक्" इत्यादौ कर्त्ता प्रतीयते ।

एकस्यापि शेषभूतस्य "राम" इति प्रातिपदिकस्य लुप्यमानार्थाभिधायित्वात् उक्तविवक्षानुसारेण "राम औ" इति स्थिते सूत्रं प्राप्नोति—"**प्रथमयोः पूर्वसवर्णः**" इति। "अकः सवर्णे दीर्घः" इत्यतः "अक" इति "दीर्घ" इति च "इकोयणचि" इत्यतः "अचि" इत्यनुवर्त्तते। तदाह—"अकः प्रथमा"—इति। **इति प्राप्ते** इति। अनेन सूत्रेण वृद्धिं बाधित्वा पूर्वसवर्णदीर्घे प्राप्ते सूत्रं प्रवर्त्तते "**नादिचि**" इति। न आत् इचि इति छेदः। "आत्" इति पञ्चमी। "पूर्वसवर्णः" इत्यनुवर्त्तते। तदाचष्टे आदिचि—इति। "आदिति" किम्। अग्नी। इचि इति किम्। वृक्षाः। अनेन सूत्रेण पूर्वसवर्णदीर्घरूपैकादेशप्रतिषेधे जाते "वृद्धिरेचि" इति सूत्रेण वृद्धौ सत्यां **रामौ** इति सिद्धम्। **बहुषु बहुवचनम्**। बहुत्वे सति विवक्षिते बहुवचनं स्यादित्यर्थः। **बहुत्वञ्च**—त्रित्वचतुष्ट्वादिपरार्ध-सङ्ख्याव्यापकीभूतधर्मविशेषः। एकस्यामेव स्त्र्यादिव्यक्तौ "दाराः" इत्यादिप्रयोगेऽवयव बहुत्वस्यावयविन्यारोपाद् बहुवचनं कोशवृद्धव्यवहारबलादित्यवधेयम्।

**चुटू**। "आदिर्ञिटुडवः" (१।३।५) इत्यतः आदिः "षः प्रत्ययस्य" (१।३।६) इत्यतः प्रत्ययस्य चेत्यनुवर्त्तते। "उपदेशे"—इत्यतः इत् इति च। यथायोगं विभक्तिपरिणामं कृत्वा व्याख्याति—"**प्रत्ययाद्यौ**" इति। न विभक्तौ०। "हलन्त्यम्" इत्यस्य निषेधोऽयम्। तु स् म् एषां द्वन्द्वः। "इत्" इत्यनुवृत्तं बहुत्वेन विपरिणमय्य व्याचष्टे—"**विभक्तिस्थाः**"—इति। "**इति**" इति। अनेन सूत्रेण जसः सकारस्य नेत्सञ्ज्ञेत्यर्थः। **अथ प्रक्रिया**—"राम" प्रातिपदिकार्थगत-बहुत्वविवक्षायां "रामरामराम" इति स्थिते अन्तरङ्गत्वात् सरूपाणामित्येकशेषे च कृते "राम जस्" इति जाते "चुटू" इति सूत्रेण चवर्गान्तर्वर्त्तिनो जसप्रत्ययादिभूतस्य जकारस्येत्सञ्ज्ञायां जातायां "तस्य लोपे" इत्यनेन जस्य लोपे "राम अस्" इति जाते "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घैकादेशे कृते "रामास्" इति भवति "हलन्त्यम्" इतिसूत्रेण सकारस्येत्सञ्ज्ञाप्राप्तौ "न विभक्तौ तुस्माः" इत्यनेन तन्निषेधः। ततः "ससजुषोरुः" रिति रुत्वे, उकारलोपे 'खरवसानयोः"—इति रेफस्य विसर्गे **रामाः** इति सिद्धम्।

**एकवचनं सम्बुद्धिः** ।२।३।४९। **सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्** ॥ **यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्** । १।४।१३॥ **यः प्रत्ययो यस्माक्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात्** ॥ **एङ्ह्रस्वात्सम्बुद्धेः** । ६।१।६९॥ **एङन्ताद्ध्रस्वान्ताच्चाङ्गा-द्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः** ॥ **अमि पूर्वः** ६।१।१०७॥ **अकोऽम्यचि पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ।**

**लशक्वतद्धिते ।१।३।८।।** तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥ **तस्माच्छसो नः पुंसि ।६।१।१०३।।** पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २ ।।** अट्कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे । इति प्राप्ते ॥ **पदान्तस्य ।८।४।३७।।** नस्य णो न । रामान् ॥ **टाङसिङसामिनात्स्याः ।। ७ । १ । १२ ।।** अदन्तात्टादीनामिनादयः स्युः । णत्वं । रामेण ॥

**एकवचनं०** । "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" ( २।३।४६ ) इत्यतः प्रथमेति पदमनुवर्त्य षष्ठ्या विपरिणम्यते । "सम्बोधने च" ( २ । ३ । ४७ ) इत्यतः सम्बोधने इत्यनुवर्त्य व्याचष्टे **सम्बोधने**--इति । * "सुः सम्बुद्धिः" इत्येव सुवचम् "सम्बोधने च" इत्यतः सम्बोधने इत्यनुवृत्तेः सप्तमीबहुवचने न दोष इति केचित् । **यस्मात्प्रत्ययविधिः**—यस्मादिति प्रकृतिभूतादित्यर्थः । यस्मात्प्रत्ययो विधीयते † धातोर्वा प्रातिपदिकाद्वा तदादि शब्दरूपं तस्मिन्प्रत्यये परतोऽङ्गसञ्ज्ञं भवतीति

**तदादीति** । तत्प्रकृतिरूपमादिर्यस्येत्यर्थः । प्रत्यासत्तिन्यायलभ्यार्थमाह— ‡ **तस्मिन्निति** । अत्रेदं बोध्यम्—तदादिग्रहणाभावे 'यस्मात् प्रत्ययविधिस्तदङ्गम्" इति सूत्रन्यासे भूधातोरेव प्रत्ययस्य मिपो विधानेन भूधातोरेव अङ्गसञ्ज्ञा स्यात् नतु

---

* "सु सम्बुद्धिः" इति वाच्ये एकवचनग्रहणम्--एकोऽर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य सञ्ज्ञार्थम् । अन्यथा "सामन्त्रितम्" ( २ । ३ । ४८ ) इति पूर्वसूत्रे तदन्तस्यामन्त्रितसञ्ज्ञा कृतेति प्रकमादाय इयमपि सञ्ज्ञा तदन्तस्यैव स्यात् ॥ सम्बुद्धावङ्गस्य गुण इति व्यवहारान्न तदन्तस्य सञ्ज्ञा । तस्मात्पारायणादावदृष्टार्थमेव न्यास इति **नागेशः** । नच सञ्ज्ञाविधौ इति निषेधः शङ्क्यः सामन्त्रितमितिवन्महासञ्ज्ञाकरणेन प्रत्ययग्रहणेऽपि तदन्तग्रहणसिद्धेः ॥

† एतच्च प्राचामनुरोधेन । वस्तुतस्तु—"अपाचितराम्" इत्यादितिङन्तादीनामपि तरबादिकं प्रत्यङ्गत्वम् । तस्मादुक्तसङ्कोचे प्रमाणाभावः । किञ्च--तथा व्याख्याने "आमुष्यायण" इत्यादौ वृद्धिर्न स्यात्, नहि प्रातिपदिकादयं तद्धितः किन्तु सुबन्तादिति दिगिति दीक्षितानुसारी मार्गः साधुराभाति ।

‡ "गुणः कृतात्मसंस्कारः" इति न्यायेनात्रापि तस्मिन्निति परिभाषा प्रवृत्तिरिति **नागेशः** ।

शप्स्यादिविकरणविशिष्टस्येति " अतो दीर्घो यञि " ( ७ । ३ । ११० ) इति दीर्घो न स्यात्, तदादिग्रहणे तु तदादिसमुदायस्य = " भव " " भविष्य " इत्यादि समुदायस्याङ्गसञ्ज्ञायां दीर्घो भवति । * प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम् यथा रामशब्दस्याङ्गसञ्ज्ञायाम् । प्रत्ययग्रहणं किम् । न्यविशत । " नेर्विशः " ( १ । ३ । १७ ) इत्युपसर्गाद्विधिरस्ति तदादेरङ्गसंज्ञा न स्यात । विधिरिति किम् । स्त्री इयती । अस्यायमाशयः । स्त्रीशब्दात् जातस्य सुप्रत्ययस्य " हल्ङ्याब्भ्यो० " ( ६ । १ । ६८ ) इत्यनेन लोपे ' स्त्री ' इति शब्दस्य प्रकृतिमात्रं श्रूयते । इदम् शब्दात् वतुपि " किमिदंभ्यां वोघः " ( ५ । २ । ४० ) इति वतुपो वकारस्य घादेशे तस्य "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् " (७ । १ । २) इतीयादेशे "इदं किमोरीशकी" ( ६ । १ । ६० ) इति ईशादेशे ' ई इयत् '—इति स्थिते " यस्येति च " ( ६ । ४ । १४८ ) इति ईकारलोपे " उगितश्च " ( ४ । १ । ६ ) इति ङीपि " इयती " इति रूपम् ( प्रकृतिरहितं प्रत्ययमात्रमवशिष्टम् ) एवञ्च—' स्त्री इयती ' इति प्रयोगे स्त्रीशब्दात् यः सुप्रत्ययः कृतः स न श्रूयेत अपितु इदम्शब्दात् कृत ' इयती ' इति प्रत्यय एव श्रूयते । अत्र ' स्त्री ' शब्दस्य अजादि-इयत् इति-प्रत्ययनिरूपिताङ्गत्वे " स्त्रियाः " ( ६ । ४ । ७६ ) इति सूत्रेण इयङादेशापत्तिः स्यात् अतो ' विधि ' ग्रहणं कृतम् । अर्थात् विधिग्रहणे कृते तस्मिन् इयत्प्रत्ययस्य स्त्रीशब्दाद् विहितत्वाभावेन इदम्शब्दादेव विहितत्वेन न स्त्रीशब्दस्याङ्गसञ्ज्ञा, किन्तु ' इदम ' शब्दस्यैवाजादिप्रत्ययनिरूपिताङ्गसञ्ज्ञा स्त्रीशब्दस्य तु सुप्प्रत्ययनिरूपितैवाङ्गसञ्ज्ञेति न इयङादेशापत्तिः ।

**एङ्ह्रस्वात्सम्बुद्धेः** । सम्बुद्धिसञ्ज्ञा प्रत्ययं विना न सम्भवतीति " प्रत्ययग्रहणे यस्मात् स विहितस्तदादेर्ग्रहणम् " इति परिभाषया तदादीत्यंशस्योपस्थितिः, तस्य च अङ्गत्वसमानियतत्वेनाङ्गपदलाभे तद्विशेषणतया तदन्तविधिः । "हल्ङ्याब्भ्यः" ( ६ । १ । ६८ ) इत्यतो हल् इति " लोपोव्योः "—( ६ । १ । ६६ ) इत्यतः लोप इति चानुवर्त्तते । सम्बुद्धेरित्यवयवषष्ठी, तस्या 'हल्' इत्यनेनान्वयः । लुप्यते इति लोपः ( कर्मणि घञ् ) ततश्चायमर्थः सम्पद्यते—' एङन्तात् ह्रस्वान्ताच्चाङ्गात परं यत् हल् सम्बुद्ध्यवयवभूतं तल्लुप्यते ' इत्याशयेन सूत्रं वर्त्तयति—**एङन्तादिति** । हे-पूर्वकात् रामशब्दात् प्रथमाया एकवचने सौ आनीते " एकवचनं "—इतिसूत्रेण सोः सम्बुद्धिसञ्ज्ञायां कृतायां " यस्मात्प्रत्ययविधिः "—इत्यनेन सौ परतः "राम" शब्दस्याङ्गसंज्ञा जाता । ततः " एङ्ह्रस्वात् "— इत्यनेन सम्बुद्ध्यावयवस्य हल्रूपस्य सकारस्य लोपे सति † **हे राम** इति जातम् । एवं **हे रामौ, हे रामाः** इति सम्बुद्धेर्द्विवचनं

---

* भवतीत्यादौ भू इत्यादेः शन्निरूपिताङ्गत्वसिद्धये आह प्रकृतिमात्रस्येति **चन्द्रकलायाम्** । † आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः ।

बहुवचनञ्च पूर्वनिर्दिष्टरीत्या साधनीयम् । अथ द्वितीया विभक्तिः । पूर्ववत् प्रातिपदिकसञ्ज्ञाविधाने सति "राम" शब्दात् द्वितीयायां एकवचनस्य विवक्षायां "राम अम्" इति स्थिते अमो मकारस्येत्सञ्ज्ञाप्राप्तौ "न विभक्तौ तुस्माः" इति तन्निषेधे "अकः सवर्णे दीर्घः" इति दीर्घं बाधित्वा "अतोगुणे" इति पररूपं प्राप्तं, तद्बाधित्वा "प्रथमयोः"—इति पूर्वसवर्णदीर्घे प्राप्तेऽयमारम्भः—"**अमिपूर्वः**" इति । "अकः सवर्णे"—(६।१।११०) इत्यतः अक इति पञ्चम्यन्तमनुवर्त्तते । "एकः पूर्वपरयो" रित्यधिकृतम् । "इकोयणचि" (६।१।७७) इत्यतः अचि इत्याकृष्यते तदेतत्सर्वं मत्वा व्याख्याति—**अकोम्यची**"ति । * अमि योऽच् तस्मिन् अमोऽवयवेऽचीति यावत्, तेन मकारसहितस्य पूर्वरूपं नेति स्थितं मनोरमायाम् । तदनेन सूत्रेण रामशब्दान्त्यस्य मकारादकारस्य अमवयवाकारस्य च पूर्वरूपमकार एको जात इति सिद्धं **रामम्** इति । **रामौ** इति प्रथमाया द्विवचनवत् । (अर्थात् एकशेषेण "राम औट्" इति स्थिते "हलन्त्यम्" इति टकारस्येत्सञ्ज्ञायां तस्य लोपे "प्रथमयोः"—इति, ततः "नादिचि" इति । तद्बाधकेन "वृद्धिरेचि" इत्यनेन वृद्धौ सत्यां "रामौ" इति सिद्धम्) 'राम" शब्दात द्वितीयाबहुवचनाविवक्षायां प्रातिपदिकादिसञ्ज्ञादिविधानप्रकारेण "राम शस्" इति स्थिते "न विभक्तौ"—इति सकारस्य नेत्त्वम् । शसः शकारस्य तु अनन्त्यत्वात् "हलन्त्यम्" इति सूत्रेण इत्सञ्ज्ञाया अप्राप्ताविदमारभ्यते—"**लशक्वतद्धिते**" इति । "उपदेशेऽजनु"—इत्यतः इत्, "आदिर्ञिटुडवः" इत्यतः आदिरनुवर्त्तते । "षः प्रत्ययस्य" इत्यतः प्रत्ययस्येति । अतद्धिते इति पर्युदासः । लश्च शश्च कुश्च एषां समाहारः लशकु इति नपुंसकम् । परन्तु तदितरेतरयोगद्वन्द्वेन विवृणोति "**लशकवर्गा**" इति । "तद्धितभिन्नस्य प्रत्ययस्य आदिभूतं यत् लशकवर्गं तत् इत्सञ्ज्ञकं भवती"ति सारभूतोऽर्थः । अतद्धित इति किम् । "कर्णललाटात्कनलङ्कारे" (४।३।६५) इति भवार्थे कन् । कर्णिका । सत्यां हीत्सञ्ज्ञायां "किति च" (७।२।११८) इत्यादिवृद्धिः स्यात् । प्रत्ययाद्या इति किम् । "जल्पभिक्ष"—(३।२।१५५) इति वृङः षाकन् । वराकः । अत्र "क्ङिति च" (१।१।५) इति गुणो न स्यात् इति **तत्त्वबोधिनी** । अथ प्रक्रिया—अनेन सूत्रेण शसः शकारस्येत्सञ्ज्ञत्वे तस्य लोपे "राम अस्" इत्यवशिष्टे "अकः सवर्णे"—इति दीर्घं बाधित्वा "अतो गुणे" इति प्राप्ते तद्बाधके "प्रथमयोः"—इति पूर्वसवर्णदीर्घादेशे विहिते "रामास्" इत्यवस्थायां सूत्रं प्राप्नोति—"**तस्माच्छसो नः पुंसि**" इति । तच्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते । दीर्घमात्रपरामर्शे तु "एतान् गाः पश्य" इत्यत्रापि नत्वप्रसङ्गात् । शस

* अवयविन आधारत्वविवक्षायां "वृक्षे शाखा" इतिवत् सप्तमी तदाह—अमोऽवयवेऽचीति **शब्दरत्ने** ।

इत्यवयवषष्ठी, स च अवयवः परत्वेन विशेष्यते—पूर्वसवर्णदीर्घात् परस्य शसोऽवयवस्येति तदेतदाह—"**परो यः शसः स**" इति। परो यः शस् इति तु न व्याख्यातम्, कृते पूर्वसवर्णदीर्घे ततः परस्य शसोऽसम्भवात्। एवमनेन सूत्रेण शसः सकारस्य नत्वे कृते **रामान्** इति जातम्। "पुंसि" इति पञ्चम्यर्थे सप्तमी। पुंसो विहितस्येत्यर्थः तत्र विद्यमानाद्विहितस्येत्यर्थोवेति **नागेशः**। तस्मादिति किम्। एतांश्चरतो गाः पश्य। शस इति किम्। वृत्ताः। पुंसि इति किम्। कुमारीः।

**अट्कुप्वाङ्**। "रषाभ्यां नो णः समानपदे" इति सर्वं सूत्रमनुवर्त्तते। रषाभ्यामितिपञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम्। अट् प्रत्याहारः। कुः कवर्गः। पुः पवर्गः। अट् च कुश्च पुश्च आङ् च नुम् च तैर्व्यवधानं तस्मिन् सत्यपि रषाभ्यां परस्य नस्य णत्वं स्यादित्यर्थः। तत्र सर्वैर्व्यवायोऽसम्भवी। एकैकमात्रव्यवाय इत्यपि नार्थः क्षुभ्नादिषु क्षुभ्नपाठसामर्थ्यात् "सरूपाणाम्"—इत्यादिनिर्देशाच्चेत्यतो व्याचष्टे—"**व्यस्तैर्यथासम्भवं मिलितैश्च**" इति। समानपदे=एकपदे इत्यर्थः। अखण्डमेव पदमिह विवक्षितम्। तेन "राम नाम" इत्यादौ नातिव्याप्तिः। मातृभोगीण इत्यादौ तु तद्धिताधिकारे वक्ष्यते। अड्व्यवाये तावत्—करणम् हरणम्। पवर्गव्यवाये-दर्पेण, रेफेण, गर्भेण, चर्मणा। आङ्व्यवाये-पर्याणद्धम्, निराणद्धम्। नुम्व्यवाये-बृंहणम् बृंहणीयम्। नुमग्रहणमनुस्वारोपलक्षणार्थम् तेन *तृंहणम्, तृंहणीयम् इत्यत्रानुस्वार-व्यवाये नुमभावेऽपि णत्वं भवति। सत्यपि च नुमि यत्रानुस्वारो न श्रूयते तत्र न भवति †प्रेन्वनम् प्रेन्वनीयम् इति। अड्व्यवाय इति सिद्धे आङ्ग्रहणं "पदव्यवायेऽपि" (८।४।३८) इत्यस्य प्रतिषेधस्य बाधनार्थम्। एवम् "रामान्" इत्यत्र समानपदत्वात् अनेन सूत्रेण पवर्गादिव्यवधानेऽपि नस्य णत्वे प्राप्ते—**पदान्तस्य**। "रषाभ्यां नो णः" इत्यनुवर्त्तते, "न भाभूपू"—इत्यतो नेति च तदाचष्टे—"नस्य णो न" इति। इत्थं नस्य णत्वे निषिद्धे '**रामान्**' इत्येव सिद्धं रूपम्।

अथ तृतीया विभक्तिः। **टाङसिङसामिनात्स्याः**। "अङ्गस्य" (६।४।१) इत्यधिकृतषष्ठ्या "अतो भिस ऐस्" (७।१।९) इत्यतोऽनुवृत्तेन अत इत्यनेन सामानाधिकरण्यानुरोधेन पञ्चम्या विपरिणामं मत्वा व्याचष्टे—"**अदन्तात्**" इति। यथासङ्ख्यश्चात्र बोध्यम्। टा इत्यस्य इन, ङसि इत्यस्य आत, ङस् इत्यस्य स्य इति "**णत्वम्**" इति। "अट्कुप्वाङ्"—इति नकारस्य णकार इत्यर्थः। अथ प्रक्रिया—

*नुमस्थानिकस्य स्वाभाविकस्य वानुस्वारमात्रस्योपलक्षणार्थं नुमग्रहणमित्यर्थः। तेन बृहि वृद्धौ। इदित्वान्नुम्। तस्यानुस्वारः। तृंहू हिंसायाम्। स्वाभाविकोऽत्रानुस्वारः बृंहणम् तृंहणम् उभयत्रापि णत्वं सिद्धमित्याशयः। † इवि प्रीणने। प्रेन्वनम्। इह "कृत्यचः" (८।४।२९) "इजादेः सनुमः" (८।४।३२) इति णत्वं नेति। **मनोरमायाम्**। प्रेन्वनमित्यादौ नुमो नस्य क्षुभ्नादित्वात् णत्वाभाव इति **शब्दरत्ने**।

रामशब्दात् पूर्ववत् प्रातिपदिकादिसञ्ज्ञाविधाने जाते तृतीयैकवचनविवक्षायां "राम टा" इति स्थिते "चुटू" इति सूत्रेण टकारस्येत्सञ्ज्ञायां तस्य लोपे "टाङसि"—इति सूत्रेण इत्सञ्ज्ञकटविशिष्टाकारस्थाने अथवा इत्सञ्ज्ञां विनैव टास्थाने इनादेशे "राम इन" इति जाते आद्गुणे "अट्कुप्वाङ्"—इति नस्य णत्वे **रामेण** इति सिद्धम् । "टाङसि" इति सूत्रे अत इति किम् । सख्या । पत्या । अत्राह—**वामनः** । अतिजरसिन अतिजरसात् इति केचिदिच्छन्ति यथा तु भाष्ये तथा नैतदिष्यत इति लक्ष्यते । **कैयटः प्याह**-अन्ये त्वतिजरसिना अतिजरसात् इति सिद्धये इन आच्च विहितावित्याहुः सन्निपातपरिभाषाया अनित्यत्वाज्जरसादेशं वदन्तः । **भाष्यकारस्तु**— सन्निपातपरिभाषामाश्रित्य जरसादेशमनभ्युपयन् अतिजरेण अतिजरात् इति भाव्यमिति मत्वा गौरवमुद्भावितवानिति ।

**सुपि च । ७ । ४ । १०२ ।** यञादौ सुप्यतोऽङ्गस्य दीर्घः । रामाभ्याम् । **अतो भिस ऐस् । ७ । १ । १०९ ।** अनेकाल् शित्सर्वस्य । रामैः ॥ **ङेर्यः । ७ । १ । १३ ।** अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ॥ **स्थानिवदादेशोऽनल्विधौ । १ । १ । ५६ ।** आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधौ इतिस्थानिवत्त्वात्सुपि चेति दीर्घः॥ रामाय ॥ रामाभ्याम् ॥ **बहुवचने झल्येत् । ७ । ३ । १०३ ।** झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः ॥ रामेभ्यः ॥ **वावसाने । ८ । ४ । ५६ ।** अवसाने झलां चरो वा । रामात् रामाद् । रामाभ्यां । रामेभ्यः । रामस्य ॥ **ओसि च । ७ । ३ । १०४ ।** अतोऽङ्गस्यैकारः । रामयोः । **ह्रस्वनद्यापो नुट् । ७ । १ । ५४ ।** ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः ॥ **नामि । ६ । ४ । ३ ।** अजंताङ्गस्य-दीर्घः । रामाणाम । रामे । रामयोः । षत्वे कृते । **आदेशप्रत्यययोः । ८ । ३ । ५९ ।** इण्कुभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सस्तस्य मूर्द्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णमुकुन्दादयः ॥

**सुपि च** । "अतो दीर्घो यञि" (७ । ३ । १०१) इति सर्वं सूत्रमनुवर्त्तते । 'सुपि' इति "यञि" इत्यनेन विशेष्यते "यस्मिन् विधिः"—इति परिभाषया तदादिरिति सर्वमभिप्रेत्य व्याचष्टे—"**यञादौ**"—इति । अतोऽङ्गस्य = अदन्तस्याङ्गस्येत्यर्थः । "राम" शब्दात् तृतीयाद्विवचनविवक्षायां "राम भ्याम्" इति स्थिते "सुपि च" इति सूत्रेण यञादिसुबन्तः पातिनि भ्यामि परे मकारोत्तरवर्त्तिनो ऽकारस्य दीर्घत्वे

**रामाभ्याम्** इति सिद्धम्। भ्यामो मस्य नेत्त्वम् "न विभक्तौ तुस्माः" इति निषेधात्। यञि किम्। रामः। अत इति किम्। अग्निभ्याम्। एवं रामशब्दात् तृतीयाबहुवचन विवक्षायां "राम भिस्" इति स्थिते भिसः सस्य नेत्त्वम् उक्तनिषेधात्। ततः सूत्रं प्रवर्त्तते—"**अतोभिस ऐस्**" इति। अत इति पञ्चमीबलात् "अङ्गस्य" इत्यधिकृतषष्ठी पञ्चम्या विपरिणम्यते तच्च अङ्गस्य विशेषणम्, विशेषणत्वाच्च तदन्तविधिः। ततश्च—"अकारान्ता*दङ्गात् भिस् † ऐस् स्यात्" इति व्याख्यातुमुचितमपि लाघवं मत्वा सूत्रेणैव कृतार्थतां मन्यते। "अनेकालि"ति सूत्रं पूर्वोक्तमपि कार्यवशात् प्रकृते न्यस्यति। एवमनेन सूत्रेण भिसः ऐसादेशप्राप्तौ अलोन्त्यपरिभाषया अन्त्यवर्त्तिन सकारस्य ऐसादेशेन भाव्यम् इति तदपवादेन अनेकाल्सूत्रेण सर्वस्य भिसः स्थाने ऐसादेशः तस्यानेकाल्त्वात्। एवं "राम ऐस्" इति जाते "वृद्धिरेचि" इत्यनेन वृद्धौ जातायां रुत्वविसर्गौ भवतः इति सिद्धवत्कृत्वा आह—**रामैः** इति। अत इति किम्। अग्निभिः वायुभिः। तपरकरणं किं खट्वाभिः। बालाभिः॥

अथ चतुर्थी विभक्तिः। **ङेर्यः**। ङेरिति चतुर्थ्येकवचनस्य ग्राह्यं न सप्तम्येकवचनस्य, व्याख्यानात्। अतएव "ङेराम्नद्याम्नीभ्यः" (१।३।१६) इत्यत्र अस्याऽग्रहणम्। "अतो भिस ऐस्" इत्यतः "अत" इत्यनुवर्त्तते। तच्च अङ्गस्येत्यधिकृतस्य पञ्चम्या विपरिणामे कृते विशेषणीयम्। विशेषणत्वाच्च तदन्तविधिः तदाह—"**अतोऽङ्गादि**"ति। अकारान्तादङ्गादित्यर्थः। **स्थानिवदादेशो०**। आदेशे कृते स्वरूपभेदात् ‡ स्थानिप्रयुक्तकार्याणामप्रवृत्तावयमतिदेश आरभ्यते। स्थानिना तुल्यं

---

* अङ्गाधिकारसामर्थ्यात् भिस् प्रत्यय एव गृह्यते। तेन "ब्राह्मणाभिस्सा" इत्यादौ नैव ऐसादेशापत्तिः।

† ननु एस् इत्येवास्तु। नच 'अतो गुणे' इति पररूपापत्तिः। एकारोच्चारणवैयर्थ्यापत्तेः। अन्यथा इसमेव विदध्यात् इति चेत्सत्यम्। ऐदैतोर्द्विमात्रत्वाऽविशेषेण गौरवाभावात्। "बहुलं छन्दसि" (७।१।१०) इत्यत्र अनतोऽपि भवति नद्यैरिति काशिकोदाहृतप्रयोगस्य ऐस्करणं विना अनिर्वाहाच्च॥ केचित् ऐस्करणं "निर्जरैः" रिति ऐकारश्रवणार्थमिति व्याचख्युः तच्चिन्त्यम्, सन्निपातपरिभाषया जरसादेशाप्रवृत्तेः निर्जरैः इत्येव भाष्ये सिद्धान्तितत्वात् इति **तत्त्वबोधिनी**।

‡ गुरुस्थानापन्ने शिष्यादौ अग्रासनादिपूजाधर्मलाभः लोकतः सिद्धः। कुशादिस्थानापन्नेषु शरादिषु तु वैदिकन्यायसिद्धः, इह तु शास्त्रे "स्वं रूपं शब्दस्याशब्दसञ्ज्ञा" (१।१।६८) इत्युक्तेः स्थानिधर्मा आदेशेषु न प्राप्नुयुरिति तत्प्राप्तयेऽयमारभ्यत इत्याशयः। यस्य स्थाने अन्यद्विधीयते तत् **स्थानि**। येन विधीयमानेन अन्यत् प्रसक्तं निवार्यते स **आदेशः**।

वर्त्तेत इति स्थानिवत् । "तेन तुल्यम्"— (५।१।११५) इति वतिप्रत्ययः । "आदेशः स्थानिवद्भवति स्थान्याश्रयेषु कार्येष्वनलाश्रयेषु, स्थान्यलाश्रयाणि कार्याणि वर्जयित्वा" इति पिण्डितोऽर्थः । अनल्विधिः=अनेकाल्विधिः एकाल्विधौ नेत्यर्थः । एकाल्विधिश्च वर्णमात्राश्रितविधिः । अल् वर्णः इति पर्यायशब्दौ । किमुदाहरणम् ? । धात्वाङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः । धात्वादेशो धातुवद्भवति । "अस्तेर्भूः" (२।४।५२) "ब्रुवोवचिः" (२।४।५३) । आर्धधातुकविषये प्रागेव आदेशेषु कृतेषु धातोरिति तव्यादयो भवन्ति भविता, भवितुम्, भवितव्यम् । वक्ता वक्तुम् । वक्तव्यम् । अङ्गादेशोऽङ्गवद् भवति । केन, काभ्याम्, कैः । किमः कादेशे कृते अङ्गाश्रया इनदीर्घैस्भावाः भवन्ति । कृदादेशः कृद्वद्भवति । प्रकृत्य, प्रहृत्य । ल्यबादेशे कृते "ह्रस्वस्य पिति कृति तुक्" (६।१।७१) इति तुग्भवति । तद्धितादेशस्तद्धितवद्भवति । दाधिकम् । अद्यतनम् । "कृत्तद्धितसमासाश्च" (१।२।४६।) इति प्रातिपदिकसञ्ज्ञा भवति । 'अव्ययादेशोऽव्ययवद्भवति । प्रस्तुत्य, प्रहृत्य । 'अव्यया'— (२।४।८२) इति सुब्लुक् भवति । सुबादेशः सुब्वद्भवति । वृक्षाय । प्लक्षाय । सुपिचेति दीर्घत्वं भवति । तिङादेशस्तिङ्वद्भवति । अकुरुतम् । अकुरुत "सुप्तिङन्तं पदम्" (१।४।१४) इति पदसञ्ज्ञा भवति । पदादेशः पदवद्भवति । ग्रामो वः स्वम् । जनपदो नः स्वम् । पदस्येति रुत्वं भवति । वत्करणं किम् । स्थानी आदेशस्य सञ्ज्ञा माविज्ञायीति स्वाश्रयमपि यथा स्यात् । "आङो यमहनः" (१।३।२८) आहत, आबधिष्ट । इत्यात्मनेपदमुभयत्रापि भवति । आदेशग्रहणं किम् । स्थानिवदित्येवतावतैव सम्बन्धिशब्दमहिम्ना तल्लाभात् यथा पितृवदधीते इत्युक्ते "पुत्रः" इति गम्यते ? । आह—आनुमानिकस्यापि आदेशस्य स्थानिवद्भावो यथा स्यात् । पचतु । "एरुः" (३।४।८६) । अर्थात् द्विविध आदेशः । "अस्तेर्भूः" (२।४।५२) इत्यादिः प्रत्यक्षः । "तेस्तुः" इत्यादिस्त्वानुमानिकः । "एरुः" इत्यत्र इकारेण—कारान्तस्थानी अनुमीयते उकारेण चोकारान्त आदेशः । तथाच—"तेस्तु" रिति फलितोऽर्थः । तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्य । आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः । तेन "पचतु" इत्यादेः तिङन्तत्वात्पदसञ्ज्ञा सिद्ध्यति । * अनाल्विधाविति किम् । द्युपथितदादेशा न स्थानिवद्भवन्ति । द्यौः । पन्थाः । स इति "हल्ङ्याब्भ्यो"—इति सुलोपो न भवति ।

---

* अलिति वर्णपर्यायः । विधीयते इति विधिः कार्यम् । अलाश्रयो विधिः अल्विधिः न अल्विधिः अनल्विधिः । अलाश्रयभिन्ने कार्ये कर्तव्ये आदेशः स्थानिवत् स्थानिधर्मको भवति, अलाश्रयकार्ये कर्त्तव्ये स्थानिवन्नेति फलितम् । अलाश्रयेति सामान्यवचनात् अला विधिः, अलः परस्य विधिः, अलो विधिः, अलि विधिश्चेति सर्वसङ्ग्रहः । अला विधौ यथा—व्यूढोरस्केन । अत्र "विसर्जनीयस्य सः" (८।३।३४) इति

अत्र दीक्षितः । धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशा इति प्राचोक्तं किं परिगणनमुदाहरणमात्रं वा । नाद्यः । सिच्क्सचङादीनां आदेशस्य शानश्चासङ्ग्रहापत्तेः नान्त्यः । अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणस्य वैयर्थ्यात् इत्यादि । नेदं परिगणनमुदाहरणमात्रं वा सूत्रार्थस्पष्टीकरणार्थं प्राचीनानामेवं प्रयास इति न कोऽपि दोष **इत्यन्ये** । अथ रामशब्दस्य चतुर्थ्येकवचने प्रक्रियां प्रदर्शयामः । कृतप्रातिपदिकसञ्ज्ञात् "राम" शब्दात् चतुर्थ्येकवचनविवक्षायां "ङे" प्रत्यये समागते 'राम ङे' इति जाते "ङेर्यः" इति सूत्रेण ङेर्यादेशे कृते "राम य" इति जातम् । ततः "सुपि च" इति सूत्रस्य प्राप्तिः । परन्तु—अस्य सूत्रस्य लक्ष्यमुद्दिश्यार्थविचारणायां क्रियमाणायां प्रश्नोऽयमुत्पद्यते यत् "राम य" इत्यत्र कोऽस्ति यञादि सुप्, ङेस्थाने जातस्य "य" इत्यादेशस्य यञादित्वन्तु स्वतो वर्त्तते परमस्मिन् सुप्त्वं धर्मो नास्ति तत्कथमतोऽङ्गस्य राम इत्यस्य दीर्घः स्यात् ? एवमारेकायां जातायां "स्थानिवदादेशोऽनल्विधौ" इति सूत्रेण ङेस्थाने जातस्य यादेशस्य स्थानिवद्भावेन सुप्त्वमाश्रित्य यञादिसुब्रूपे यकारे परे अदन्ताङ्गस्य "राम" इत्यस्य मकारोत्तरवर्त्तिन अकारस्य *दीर्घत्वे "**रामाय**" इति सिद्धम् । अस्यार्थस्य बोधनायैव "**इति स्थानि**

विसर्गस्थानिकस्य सकारस्य विसर्गत्वमाश्रित्य "अट्कुप्वाङ्"—( ८ । ४ । २ ) इत्यड्व्यवाये णत्वं प्राप्तं न भवति । अलः परस्य विधौ यथा—द्यौः । "दिव औत्" ( ७ । १ । ८४ ) इति वकारस्थानिकस्य औकारस्य स्थानिवद्भावेन हल्त्वमाश्रित्य ततः परस्य सोर्हल्ङ्यादिलोपः प्राप्तो न भवति । अलोविधौ यथा—द्युकामः । "दिव उत्" ( ६ । १ । ८४ ) इति वकारस्थानिकस्य उकारस्य स्थानिवद्भावेन वकारत्वात् "लोपो-व्योर्वलि" ( ६ । १ । ६६ ) इति लोपः प्राप्तो न भवति । अलि विधौ यथा—क इष्टः । यजेः क्तः । अत्र यकारस्थानिकसम्प्रसारणस्य इकारस्य स्थानिवद्भावेन हस्त्वात् "हशि च" ( ६ । १ । ११४ ) इत्युत्वं प्राप्तं न भवति । अल् चेह स्थानिभूतः स्थान्यवयवश्च गृह्यते । ततश्च "आदेशस्य स्थानिभूतो योऽल् स्थान्यवयवश्च योऽल् तदाश्रयविधौ न स्थानिवदि"ति परमार्थः । स्थानिभूताल्विधौ व्यूढोरस्केनेत्युदाहृतम् । यथा वा—धिवि प्रीणने इति धातोर्लटि प्रथमपुरुषस्य झेरन्तादेशे "धिन्विकृण्व्योरच" ( ३ । १ । ८० ) इति विकरणस्य उकारस्य यणि वकारे सति तस्य स्थानिवद्भावेनार्धधातुकत्वात् स्वतो वलादित्वाच्च इडागमः प्राप्तो न भवति, वकारस्य स्थानिभूतोयोऽल् उकारः तदादेशं वकारं आर्धधातुकत्वेनाश्रित्य प्रवर्तमानस्य इटः स्थान्यलाश्रयत्वात् । स्थान्यवयवालाश्रयविधौ यथा—प्रतिदीव्य । इह ल्यकादेशस्य य इत्यस्य वलाद्यार्धधातुकत्वात् इडागमः प्राप्तो न भवति, इडागमस्य वलाद्यार्धधातुकविषये स्थान्यवयवभूतवलाश्रयत्वात् ॥

* नन्वत्र—यञादित्वेन सुप्त्वेन च यादेशं निमित्तीकृत्य दीर्घः प्रवर्त्तते । सच यञंशे अलाश्रयः तस्मिन् कर्तव्ये यादेशस्य कथमिह स्थानिवद्भावः अनल्विधाविति तन्निषेधात् इति चेत् ? सत्यम् । इह दीर्घस्य यञादिसुबाश्रयतया आदेशगतयकाररूपाला-

वत्त्वात्सुपिचेति दीर्घ" इति मूलम् । * "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति परिभाषा तु नेह प्रवर्त्तते "कष्टाय क्रमणे" ( ३ । १ । १४ ) इत्यादि निर्देशेन तस्या अनित्यत्वज्ञापनात् इति **सिद्धान्तकौमुदी** ॥

**रामाभ्याम्** । इदं तृतीयाद्विवचनवत्साधनीयम् । **बहुवचने झल्येत्** । "अतो दीर्घो यञि" इत्यतः "अत" इति "सुपि च" इत्यतः 'सुपि' इति चानुवर्त्तते । "अङ्गस्य" इत्यधिकृतम् । सुपि इति झलि इत्यनेन विशेष्यते "यस्मिन् विधिः"—इति परिभाषया तदादिविधिरिति सर्वं मत्वा व्याचष्टे—"**झलादौ**"—इति । अतोऽङ्गस्य = अदन्तस्याङ्गस्येत्यर्थः । रामशब्दात् चतुर्थीबहुवचनविवक्षायां "राम भ्यस्" इति स्थिते "बहुवचने"—इति सूत्रेण भ्यसो यञादित्वात् बहुवचनत्वात् सुप्त्वाच्च तस्मिन् परे अदन्ताङ्गभूतरामशब्दस्य 'सुपिचे'ति प्राप्तं दीर्घं बाधित्वा "बहुवचने"—इति सूत्रेण अलोन्त्यपरिभाषया मकारोत्तरवर्त्तिनोऽकारस्य एत्वे सति भ्यसः सस्य रुत्वे, रस्य विसर्गे च कृते **रामेभ्यः** इति सिद्धम् । बहुवचने किम् । रामः, रामस्य । झलि किम् । रामाणाम् । सुपि किम् । पचध्वम् । अथ पञ्चमी विभक्तिः । **वावसाने** । "झलां जश् झशि" इत्यतः झलाम् इति "अभ्यासेचर्च" इत्यतः 'चर्' इति चानुवर्त्त्य व्याख्याति—"**अवसाने**"—इति । कृतप्रातिपदिकसञ्ज्ञकात् रामशब्दात् पञ्चम्या एकवचनविवक्षायां "राम ङसि" इति स्थापिते "टाङसि"—इत्यनेन ङसेः "अत्" आदेशः, ततः सवर्णदीर्घः, ततः 'झलां जशोन्ते" इति तकारस्य दकारः, एवं "रामाद्" इति जाते सति "वावसाने" इति सूत्रेण पक्षे दस्य चर्त्वेन तकारे सति **रामात्, रामाद्** इति द्वे रूपे भवतः । तकारदकारयोः "अनचि" चेति द्वित्वे पक्षे तदभावे च रूपचतुष्टयम् । तत्र चर्त्वपक्षे द्वितकारमेकतकारं रूपम् जश्त्वपक्षे द्विदकारमेकदकारञ्चेति विवेकः । **रामाभ्याम्, रामेभ्यः** इत्यनयोः चतुर्थीवत् प्रक्रिया ज्ञेया । अथ षष्ठी विभक्तिः । रामशब्दात् † पूर्वं विधिं साधयित्वा षष्ठ्येकवचनविवक्षायां ङस् प्रत्यये

---

श्रयत्वेऽपि तस्मिन् कर्त्तव्ये आदेशस्य स्थानिवद्भावेन सुप्त्वं भवत्येव, दीर्घस्य आदेशगत-यकाररूपालाश्रयत्वेऽपि स्थान्यलाश्रयत्वाभावादिति **बालमनोरमा** ।

* यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः स लक्षणं निमित्तं यस्य सः सन्निपातलक्षणः विधिः कार्यम् । तद्विघातस्य = तं सन्निपातं (स्वाश्रयं) विहन्तीति तद्विघातः । "कर्मण्यण्" ( ३ । २ । १ ) "हनस्तो चिण्णलोः" ( ७ । ३ । ३२ ) इति तकारः । "हो हन्ते"—( ७ । ३ । ५४ ) इति कुत्वम् । उपजीवकमुपजीव्यस्य विघातकं न भवतीति परिभाषार्थः । प्रकृते च—अङ्गसञ्ज्ञासम्बन्धेनादन्तत्वमाश्रित्य प्रवृत्तो यादेशः अदन्तत्वविघातकस्य दीर्घस्य कथं निमित्तं भवेत् इत्याशङ्कां परिहरति—"**सन्निपातलक्षण**" इत्यादिना । † प्रातिपदिकसंज्ञादिरूपम् ।

आनीते "राम ङस्" इति जाते "टाङसि"—इत्यनेन ङसः स्थाने "स्य" इत्यादेशे **रामस्य** इति सिद्धम् । **ओसि च** । "अतोदीर्घो"—इत्यतः "अत" इत्यनुवर्त्तते, "बहुवचने"—इत्यतः "एत्" इति च, अङ्गस्येत्यधिकृतम् । तदाह—"**अतोऽङ्गस्यैकार**" इति । ओसि परे अदन्तस्याङ्गस्यैकार इत्यर्थः । षष्ठ्या द्विवचनविवक्षायां "राम ओस्" इति स्थिते "वृद्धिरेचि" इति सूत्रेण वृद्धौ प्राप्तायाम् अनेन सूत्रेण मकारोत्तरवर्त्तिन अकारस्य एकारे जाते "रामे ओस्" इत्यवस्थायां "एचोऽयवा"-इत्यनेन अयादेशे सस्य रुत्वे विसर्गे च कृते **रामयोः** इति सिद्धम् । एवमेव—रामशब्दात् षष्ठीबहुवचनविवक्षायां "राम आम्" इति स्थापनायां सूत्रं प्राप्नोति—**ह्रस्वनद्यापो नुट्** इति । ह्रस्वश्च नदी च आप्चेति समाहारद्वन्द्वः, दिग्योगे पञ्चमी । "परस्य" इत्यध्याहार्यम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्य ह्रस्वादिभिर्विशेष्यते, विशेषणत्वाच्च तदन्तविधिः । "आमि सर्वनाम्नः"—इत्यतः "आमि" इत्यनुवर्त्तते इति सर्वं मत्वा व्याकरोति—"**ह्रस्वान्तात्**" इत्यादि । नुट् च टित्वादाद्यवयवः—"राम नुट् आम्" इति जाते * उटो लोपे "राम नाम्" इति स्थितम्, ततः सूत्रं प्रवर्त्तते † **नामि** इति । "ढ्लोपे"—इत्यतो "दीर्घ" इत्यनुवर्त्तते दीर्घश्रुत्या च 'अच' इत्युपस्थितं भवति, तेन चाङ्गं विशेष्यते, अतस्तदन्तविधिः तदेतन्मत्वाह—**अजन्ताङ्गस्य**—इति । एवमनेन "राम" इत्यङ्गस्य दीर्घे प्राप्ते अलोन्त्यपरिभाषया मकारोत्तरवर्त्तिनोऽकारस्य दीर्घत्वे "रामानाम्"—इत्यवस्थायाम् "अट्कुप्वाङ्"—इत्यनेन नस्य णत्वे **रामाणाम्** इति सिद्धम् । अथसप्तमीविभक्तिः । पूर्ववत् कृतप्रातिपदिकसञ्ज्ञादि कार्यात् रामशब्दात् सप्तम्या एकवचनविवक्षायां "राम ङि" इति स्थिते 'लशक्वतद्धिते' इत्यनेन ङेर्ङकारस्येत्त्वे लोपे च "राम इ" इति जाते आद्गुणे **रामे** इति ज्ञेयम् । **रामयोः** इत्यस्य षष्ठीद्विवचनवत् प्रक्रिया । रामशब्दात् सप्तमीबहुवचनविवक्षायां "राम सुप्" इति स्थिते पकारस्येत्त्वे लोपे च सति "राम सु" इत्यवस्थायां 'बहुवचने झल्येत्' इत्यनेनादन्ताङ्गस्येत्त्वे "रामे सु" इति जाते सति सूत्रं प्रवर्त्तते—**आदेशप्रत्यययोः** इति । "अपदान्तस्य मूर्धन्यः" (८ । ३ । ५५) "इण्कोः" (८ । ३ । ५७) इत्यधिकृत्य "सहेः साडः सः" (८ । ३ । ५६) इत्यतः "सः" इत्यनुवर्त्त्याह—

---

* नकारोत्तरवर्त्तिन उकारस्य—"उपदेशेऽजनु"—इतीत्संज्ञा, टस्य 'हलन्त्यम्' इत्यनेन सा, ततः "तस्य लोप" इति लोप इत्यर्थः ।

† "आमि" इत्येवं न्यासे "नोपधायाः" (६ । ४ । ७) इत्यत्रापि आमि इत्यनुवृत्तौ 'चर्मणाम्' इत्यत्रापि-दीर्घापत्तिः अतो नुट् सहित आम नाम् तस्मिन् नामि, इति मत्वा सनकार निर्देशः कृतः । चर्मणामित्यादौ तु न सनुट् आम्, अतो न दोष इति बोध्यम् ।

**इण्कुभ्याम्**—इति। एवमनेन योगेन इण्परकत्वात् सस्य मूर्धन्यादेशप्राप्तिः। तत्र—"ऋटुरषा मूर्धन्याः" इति एषां सर्वेषां प्राप्तौ कतमेन भाव्यमित्यपेक्षायां "स्थानेऽन्तरतम" इति परिभाषाबलेन ईषद्विवृतस्य सस्य तादृश एव षः। ईषद्विवृतमूष्मणामित्युक्तेः। अयं भावः मूर्धन्यत्वं ऋटुरषेष्वविशिष्टम्, तत्र ईषद्विवृतरूपाभ्यन्तरप्रयत्नवतः सकारस्य स्थाने तथाविधप्रयत्नवानेव षकारो जातो नान्य इत्यर्थः*। एवं सति **रामेषु** इति प्रयोगसिद्धिः। अत्र सूत्रे प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः "हलि सर्वेषाम्" इति निर्देशात् इति मत्वा वृत्तौ दर्शितं "**प्रत्ययावयवश्च**" इति। सर्वोऽपि पुंसि वर्त्तमानोऽकारान्तः शब्दः रामशब्दवत्साधनीय इत्याह—"**एवम्**" इति। इणकोः किम्। रामस्य। आदेशप्रत्यययोः किम्। सुपीः सुपिसौ सुपिसः। अपदान्तस्य किम्। हरिस्तत्र।

**सर्वादीनि सर्वनामानि। १। १। २७। सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः। †सर्व। विश्व। उभ। उभय। डतर। डतम। अन्य। अन्यतर। इतर। त्वत्। त्व। नेम। सम। सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्या-**

*ननु—दधिसेचौ दधिसेच इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिरिति पञ्चमीसमासो भाष्ये उक्तः, ततश्च इहापि "सात्पदाद्योः" (८। ३। १११) इति निषेधः स्यात्, करिष्यतीत्यादौ सत्वविधेः सावकाशत्वादिति चेन्मैवम्। "स्वादिषु"—(८। ३। ६४) इति या पदसञ्ज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्त्तते इति सातिग्रहणेन ज्ञापितत्वादिति **तत्त्वबोधिनी**।

† सरति व्याप्नोति द्रव्यपर्यायेषु इति **सर्वः** इति जैनवैयाकरणाः। अथवा—सर्वति व्याप्नोतीति "सर्वः"। षर्व गतौ। अस्मात् अच् (३। १। १३४) सर्वविश्वशब्दौ कृत्स्नपर्यायौ। उभशब्दो द्वित्वविशिष्टस्य वाचकोऽतो नित्यं द्विवचनान्तः। अन्यशब्दो भिन्नार्थः। अन्यतरशब्दोऽव्युत्पन्नः स्वभावात् द्विविषये निर्धारणेऽस्ति। इतरस्तु—अन्यनीचयोः। डतरडतमौ प्रत्ययौ इति तदन्तानां ग्रहणम् केवलयोः सञ्ज्ञायाः प्रयोजनाभावात्। कतरकतमयतरयतमादयस्तदन्ताः। समशब्दः सर्वपर्यायः। त्वत्त्वशब्दौ अन्यपर्यायौ। भवतुशब्दः भवदर्थः। तस्येह पाठोऽकजर्थः। नेमशब्दोऽर्धवाची। पूर्वपरावशब्दाः दिग्देशकालवाचकाः सर्वादिसंज्ञकाः। दक्षिणशब्दस्तु दिग्देशकालवाची सर्वादिः नतु प्रवीणवाची। उत्तरापरशब्दावपि दिग्देशकालवाचकौ। अधरोऽपि तथा। त्यत्तदौ शब्दौ पूर्वोक्तपरामर्शकौ। यत्शब्द उद्देश्यसमर्थकः। एतद् इदमौ शब्दौ प्रत्यक्षोपस्थितवाचकौ। अदस् शब्दस्तु व्यवहितवाचकः। एकः सङ्ख्यायामेकवचनान्तः। द्विशब्दो द्वित्वविशिष्टवाचकः। किम् शब्दः प्रश्ने आक्षेपे च। अलिङ्गः सम्बोधनैकविषयकश्च युष्मदर्थः। अलिङ्ग उच्चारयितर्यो ऽस्मच्छब्दः। अधिकन्त्वन्यत्र।

**याम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद्। तद्। यद्। एतद्। इदम्। अदस्। एक। द्वि। युष्मद्। अस्मद्। भवतु। किम्। एते पञ्चत्रिंशच्छब्दाः सर्वादयः। जसः शी।७।१।१७। अदन्तात्सर्वनाम्नो जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे। सर्वनाम्नः स्मै।७।१।१४। अतः सर्वनाम्नो ङेः स्मै। सर्वस्मै। ङसिङ्योः स्मात्स्मिनौ।७।१।१५। अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्। सर्वस्माद्। आमि सर्वनाम्नः सुट्।७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात्। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः।**

सर्वादिशब्देषु सर्वनामकार्यं विधास्यन् सर्वनामसञ्ज्ञामाह—**सर्वादीनि**—सर्वः आदिः प्रथमावयवो येषां तानि सर्वादीनि। सर्वशब्दः स्वरूपपरः। नपुंसकवशात् "शब्दरूपाणि" इत्यध्याहार्यम्। तद्गुणसंविज्ञानो बहुव्रीहिरयम्। "अदः सर्वेषाम्" इति लिङ्गात्। आदिः शब्दोऽत्रावयववाची। तथा दर्शितो विग्रहः। उद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम्। तस्य युगपत्पक्षद्वये प्रयोगाभावात् * "**आनर्थक्यात्तदङ्गेषु**" (पू० मी० ३।१।१८) इति न्यायेन तदवयवेषु प्रवर्त्तमाना सर्वनामसञ्ज्ञा अविशेषात्सर्वशब्देऽपि प्रवर्त्तते इति युक्तं तद्गुणसंविज्ञानम्। अधिकं तत्त्वबोधिन्यादौ। "**सर्वनामसञ्ज्ञानि**" इति। अत्र "बाधकान्येव निपातनानि" इति लोकेऽपि णत्वं नैव भवतीति ज्ञेयम्।

इतोऽग्रे येषां शब्दानां पूर्वदर्शितशब्दप्रयोगेभ्यः साधनांशे नास्ति विशेषः ते तद्वदेव ज्ञेयाः, विशिष्य तु न साधनायां दर्शयिष्यन्ते। विशेषस्तु मूलानुरोधेन व्याख्यास्यत एवेति ध्यातव्यम्।

† **सर्वः। सर्वौ।** सर्वशब्दस्य प्रातिपदिकसञ्ज्ञायां कृतायां "सर्वादीनि"—इति सूत्रेण सर्वनामसंज्ञा विधातव्या, ततः प्रथमायाबहुवचनविवक्षायां "जस्"

---

* वाजपेये प्रधाने यूपाभावेन आनर्थक्यात् तदङ्गेषु प्राजापत्यादिपशुषु निविशत इदं वाक्यमिति यथा, तथा समुदाये युगपत्संज्ञाफलाभावेन तदवयवेषु (सर्व, विश्व इत्यादिषु) प्रातिस्विकबुद्ध्या चरितार्थ्यं सञ्ज्ञेति पर्यवसितोऽर्थः।

† ननु—सर्वशब्दस्य बुद्धिस्थानेकार्थवाचित्वेन बहुवचनमेव स्यान्नत्वेकवचनादि इति चेन्न। बुद्धिस्थानेकसंख्याकावयवारब्धसमुदाये सर्वशब्दः शक्त इति। यदा त्वनुद्भूतावयवः समुदायः तदैकवचनं भवत्येव यथा "सर्वो लोक" इति। तादृशसमुदायद्वित्वादिविवक्षायां द्विवचनादि। उद्भूतावयवभेदविवक्षायां तु बहुवचनमेव यथा "सर्वे घटा" इति। सर्वपदस्य व्यापकत्वे शक्तिः। "सर्वे घटा रूपवन्तः" इत्यादौ घटत्वव्यापकं रूपवत्त्वमित्याद्यन्यत्र विस्तरः।

इति प्रत्यये आनीते "सर्व जस्" इति स्थिते सूत्रं प्राप्नोति—**जसः शी** । "अतो भिस"—इत्यस्मात् "अत" इति "सर्वनाम्नः स्मै" इत्यतः "सर्वनाम्न" इति चानुवर्त्त्य व्याकरोति—"**अदन्तात्**"—इति । अनेन जसः स्थाने "शी" आदेशः सच अनेकाल्त्वात्सर्वादेशः । "सर्व शी" इति जाते सति "लशक्व"—इति शस्येत्त्वे तस्य लोपे "सर्व ई" इति जाते, आद्गुणे च सति **सर्वे** इति सिद्धम् । **सर्वम** । **सर्वौ** । **सर्वान्** । **सर्वेण** । **सर्वाभ्याम** । **सर्वैः** । सर्वशब्दात् चतुर्थ्येकवचनविवक्षायां ङे प्रत्यये समानीते "सर्व ङे" इत्यवस्थायां "ङेर्यः" इत्यस्य प्राप्तौ तद्बाधकं सूत्रमाह—**सर्वनाम्नः स्मै** इति । "अतो भिस"—इत्यतः अत इति "ङेर्यः" इत्यतो ङेरिति चानुवर्त्त्य व्याचष्टे—"**अतः सर्वनाम्ना**"—इति । अनेन सूत्रेण ङेस्थाने "स्मै" इत्यादेशे कृते भवति **सर्वस्मै** इति । **ङसिङ्योः** । ङसिश्च ङिश्चेति द्वन्द्वः । "अतोभिस" इत्यस्मात् "अत" इति "सर्वनाम्नः"—इति सूत्रात् "सर्वनाम्न" इति चानुवर्त्त्य व्याचष्टे—"**अतः**" इत्यादिना । एतयोः=ङसिङ्योरित्यर्थः । एतौ=स्मात्स्मिनौ । अथ प्रक्रिया–सर्वशब्दात् पञ्चम्येकवचनविवक्षायां ङसिप्रत्यये आनीते "ङसिङ्यो"—रिति सूत्रेण ङसिस्थाने "स्मात्" इत्यादेशे सिद्धं **सर्वस्मात्** इति । अत्र यद्यपि तकारस्य हलन्त्यम् इति इत्सञ्ज्ञा प्राप्ता तथापि स्मादेशस्य स्थानिवद्भावेन विभक्तित्वात् "न विभक्तौ"—इति निषेधात् तस्य नेत्त्वम् । **सर्वाभ्याम** । **सर्वेभ्यः** । **सर्वस्य** । **सर्वयोः** । **आमि सर्वः** । "आज्जसेरसुक्" इत्यतः "आत्" इत्यनुवर्त्तते । तेन पञ्चम्यन्तेन अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणाम्। विशेषणीयम्, विशेषणाच्च तदन्तविधिः । परस्येत्यध्याहार्यम् इत्येवं मत्वा व्याख्याति-"**अवर्णान्तात्परस्य**" इत्यादि । सुट् टित्त्वादाद्यवयवः । साधनप्रकारस्त्वयम्—सर्वशब्दात् षष्ठीबहुवचने "सर्व आम्" इति स्थिते "ह्रस्वनद्यापो नुट्" इति सूत्रेण नुटि प्राप्ते अनेन तद्बाधित्वा आमः सुडागमः । "सर्व सुट् आम्" इत्यवस्थायां उटो लोपे "सर्व स् आम्" इति जाते "बहुवचने झल्येत्" इत्यनेन एत्वे "आदेशप्रत्यययोः" इत्यनेन षत्वे च कृते "**सर्वेषाम्**" इति सिद्धम् । यद्यपि सुटः सः न प्रत्ययावयवः तथापि "तदागमास्तद्ग्रहणेन गृह्यन्ते" इति तस्यावयवत्वं बोध्यम् । सर्वशब्दात् सप्तम्येकवचने "सर्व ङि" इति स्थापनायां "ङसिङ्योः"—इति सूत्रेण ङिस्थाने "स्मिन्" इत्यादेशे "**सर्वस्मिन्**" इति सिद्धं भवति। नकारस्य च स्थानिवद्भावेन विभक्तित्वमाश्रित्य नेत्त्वम् "न विभक्तौ" विति तन्निषेधात्। **सर्वयोः** । **सर्वेषु** । येषु विभक्तिवचनेषु रामशब्दात् सर्वशब्दसाधनप्रकारो न भिद्यते तद्बोधयितुमाह—"शेषं **रामवत्**" इति । शिष्यत इति शेषं कर्मणि घञ् । "घञबघाजन्तः पुंसि" इति लिङ्गानुशासनं प्रायिकमिति भावः । **एवम** इति । सर्वशब्दवत् विश्वादयोऽपि ज्ञेयाः तथाहि—(रूपाणि) (प्र०) विश्वः । विश्वौ । विश्वे । (द्वि०) विश्वं विश्वौ । विश्वान् ।

(तृ०) विश्वेन । विश्वाभ्याम् विश्वैः । (च०) विश्वस्मै । विश्वाभ्याम् । विश्वेभ्यः । (पं०) विश्वस्मात् । विश्वाभ्याम् । विश्वेभ्यः (ष०) विश्वस्य । विश्वयोः विश्वेषाम् । (स०) विश्वस्मिन् । विश्वयोः । विश्वेषु । (सं०) हे विश्व । हे विश्वौ । हे विश्वाः । एवमन्योऽपिसर्वादिर्ज्ञेयः ।

**उभ शब्दो नित्यं द्विवचनान्तः । उभौ २ उभाभ्याम ३ उभयोः २ । इह उभौ । तस्येह पाठोऽकजर्थः । डतरडतमौ प्रत्ययौ । "प्रत्ययग्रहणे तदन्तग्रहण"मिति तदन्ता ग्राह्याः । नेम इत्यर्द्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु न ॥ समानामिति ज्ञापकात् ॥ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । १ । १ । ३४ । एषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः । असंज्ञायां किम । उत्तराः कुरवः ॥ स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५ । ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे । स्वाः । आत्मीया आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥ अन्तरम्बहिर्योगोपसंव्यानयोः । १ । १ । ३६ । बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ।**

उभशब्दे विशेषं वक्तुमाह—"**उभशब्द**" इति । नित्यम् = सर्वदा । द्विवचनान्तः = द्वित्वविशिष्टस्य वाचकः । अनन्वितविभक्तेरपेक्षयाऽनुवादकविभक्तेर्न्याय्यत्वादिति भावः । नन्वेवं सति "जसः शी" इत्यादि सर्वनामकार्याणां द्विवचनेऽभावाद् उभशब्दस्य सर्वादिगणे पाठो व्यर्थ इत्याशङ्कायामाह "**तस्येह**" इति । "अव्ययसर्वनाम्नामकच् प्राक्टेः" ( ५ । ३ । ७१ ) इत्यकच्प्रत्ययार्थ इत्यर्थः । तेन उभकावित्यादि सिद्ध्यति । नच—कप्रत्ययेनेष्टसिद्धिः । द्विवचनपरत्वाभावेन "उभयतः" "उभयत्र" इत्यादाविवायच्प्रसङ्गात् । तदुक्तम्—"उभयोऽन्यत्र" ( वा० ) अन्यत्रेति द्विवचनपरत्वाभावे । उभयशब्दस्य द्विवचनं नास्तीति **कैयटः** । अस्तीति **हरदत्तः** । उभावयवौ यस्य स उभयो मणिः । * "उभादुदात्तो नित्यम" ( ५ । २ । ४४ )

* अवयववृत्तेः सङ्ख्यावाचिन उभशब्दादवयविन्यर्थे तयपोऽयच् स्यात् सचाद्युदात्तः इति सूत्रार्थः । उभयो मणिः = द्व्यवयवारब्धो मणिरित्यर्थः । मणेरवयविनः एकत्वाद् "उभय" इत्येकवचनम् । एवं द्व्यवयवारब्धत्र्यादिमणिविवक्षायान्तु बहुवचनम् 'उभये मणयः" इति । उभयोऽन्यत्रेति उदाहृतवार्त्तिके उभयशब्दस्य द्विवचनादन्यत्रैव प्रयोगविध्यवगमादिति **बालमनोरमा** । अधिकन्तु—**प्रौढमनोरमादौ द्रष्टव्यम्** ।

इति तयपोऽ यच्। **उभयः, उभये। उभयम, उभयान्। उभयेन, उभयैः। उभयस्मै, उभयेभ्यः। उभयस्मात्, उभयेभ्यः। उभयस्य, उभयेषाम्। उभयस्मिन्, उभयेषु।** इत्येवं रूपाणि ज्ञेयानि। डतरडतमशब्दयोः क्वापि प्रयोगादर्शनात् तयोः पाठप्रयोजनं दर्शयति--**डतरडतमाविति**। "किं यत्तदोर्निर्धारणे द्वयोरेकतरस्य डतरच्" (५।३।९२) "वा बहूनां जातिपरिप्रश्ने डतमच्" (५।३।९३) "एकाच्च प्राचाम्" (५।३।९४) इति तद्धिताधिकारविहितावेतौ प्रत्ययावित्यर्थः। "प्रत्ययः" (३।१।१) इत्यधिकृत्य तद्विधानात्। अतः प्रत्ययग्रहणपरिभाषया तदन्तानां कतरकतमादिशब्दानां सर्वनामसञ्ज्ञायां ग्रहणमिति भावः। **नेम** इति। अर्धेऽर्थे वर्तते इति शेषः। "प्रनेमस्मिन ददृशे सोमो अन्तः" इत्यस्यामृचि तथादर्शनादिति भावः। **सम** इति। सर्वशब्दसमानार्थक एव समशब्दः सर्वादिगणे पठितो बोध्यः नतु तुल्यशब्दसमानार्थकः। **समानामिति**। अन्यथा "यथासङ्ख्यम्"—इति सूत्रे 'समेषाम्' इत्येव पठेदिति भावः। इत्थं सर्वादिगणं व्याख्याय इदानीं तदन्तर्गतत्रिसूत्रीसमानाकारामष्टाध्यायीस्थां त्रिसूत्रीं व्याचष्टे--**पूर्वपरावरदक्षिणोत्तरा०**। इति। अत्र--'सर्वनामानि' इति "विभाषा जसि" इति चानुवर्तते। **एतेषाम्** = पूर्वादिसप्तानाम्। **गणसूत्रात्** = सर्वाद्यन्तर्गतगणसूत्रात्। **या प्राप्ता** = सर्वादीनीत्यनेन या नित्या सञ्ज्ञा प्राप्ता। स्पष्टमन्यत्। **पूर्वे। पूर्वाः।** पूर्वशब्दात् प्रथमाबहुवचने जस् इति प्रत्यये आनीते सर्वादीनीति सूत्रेण सर्वासु विभक्तिषु नित्यायां सर्वनामसंज्ञायाम् "पूर्वपरावर"--इति सूत्रेण जसि विकल्पेन सर्वनामसञ्ज्ञायां सत्यां सर्वनामसंज्ञापक्षे "जसः शी" इति सूत्रेण श्यादेशे शस्य लोपे आद्गुणे च कृते 'पूर्वे" इत्येकः प्रयोगः "सर्वे" इतिवत्। सर्वनामसञ्ज्ञाया अभावपक्षे "पूर्वाः" इति "रामाः" इतिवत्। सूत्रे "व्यवस्थायामसञ्ज्ञायाम्" तत्र का सा व्यवस्था इत्यपेक्षायां तां दर्शयति--**स्वाभिधेयापेक्षेति**। स्वस्य पूर्वादिशब्दस्य अभिधेयं वाच्यं अपेक्ष्यते इति स्वाभिधेयापेक्षः। कर्मणि घञ्। स्वाभिधेयापेक्षश्चावधेर्नियमः इति स्वाभिधेयापेक्षावधिनियमः। सोऽयं व्यवस्थाशब्देन विवक्षितः। ततश्च--नियमेनावधिसापेक्षार्थे वर्तमानानां पूर्वादिशब्दानां जसि सर्वनामसञ्ज्ञा विकल्प्यत इत्याशय। **व्यवस्थायां किमिति**। पूर्वादिशब्दानां नियमेनावधिसापेक्ष एवार्थे विद्यमानत्वमिति प्रश्नः। **दक्षिणा इति**। दक्षिणशब्दो नात्रावध्यपेक्ष इत्यर्थः, अतो नात्र सर्वनामसञ्ज्ञा। तदेतत्स्वयमर्थान्तरेण स्पष्टीकरोति **कुशला** इति। **असञ्ज्ञायां किम्**। "सञ्ज्ञोपसर्जनीभूतास्तु न सर्वादयः" इति नियमेन सञ्ज्ञायां सर्वनामत्वस्याप्रसक्तेरिति प्रश्नः। उत्तरमाह--**उत्तराः कुरव** इति। कुरुशब्दो देशविशेषे बहुवचनान्तः। सुमेरुमवधीकृत्य तत्रोत्तरशब्दोऽपि वर्तत इत्यस्तीह व्यवस्था, किन्तु सञ्ज्ञाशब्दोऽयमतो नास्य

सर्वनामता। पूर्वादिशब्दानान्तु दिक्कालेषु अनादिः सङ्केत इति न ते सञ्ज्ञाशब्दाः। कुरुषु तूत्तरशब्दस्याधुनिकः सङ्केत इत्ययं सञ्ज्ञाशब्दो गम्यते इति ध्येयम्।

**स्वमज्ञाति०**। अत्रापि "सर्वनामानि" इति "विभाषा जसि" इति चानुवर्त्तते। ज्ञातिश्च धनञ्च ज्ञातिधने तयोराख्या ज्ञातिधनाख्या। न ज्ञातिधनाख्या अज्ञातिधनाख्या तस्यां अज्ञातिधनाख्यायाम। स्वमिति शब्दस्वरूपापेक्षया नपुंसकत्वम्। वृत्तिः स्पष्टा। उदाहरति—**स्वे स्वाः** इति। अर्थात् सर्वनामसंज्ञापक्षे शीभावः, तदभावे तदभाव इति। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीयो स्वोऽस्त्रियां धने" **इत्यमरः**। ज्ञातिधनयोः पर्युदासात् आत्मनि आत्मीयेचार्थे स्वशब्दस्य जसि सर्वनामसंज्ञा विकल्प्यते इत्याशयेन व्याचष्टे—"आत्मीया आत्मान इति वा" इति। **अन्तरं बहि०**। अत्रापि "सर्वनामानि" "विभाषा जसि" इति चानुवर्त्तते। बहिः–अनावृतप्रदेशः तेन योगः सम्बन्धः यस्य स बहिर्योगः–बहिर्विद्यमानोऽर्थ इति यावत्। उपसंवीयते परिधीयते इति उपसंव्यानम्=अन्तरीयं वस्त्रमित्यर्थः तदाह—"**बाह्य०**" इति। "अन्तरे" इत्यनयोः साधनप्रकारः पूर्वशब्दवत्। शिष्टं स्पष्टम्।

**पूर्वादिभ्यो नवभ्यो वा ७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्। पूर्वात्। पूर्वस्मिन्। पूर्वे। एवं परादीनामपि। शेषं सर्ववत्। संज्ञोपसर्जनीभूतास्तु न सर्वादयः॥ सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिक्रान्तः सर्वं अतिसर्वः तस्मै अतिसर्वाय। अन्तरमिति गणसूत्रे ऽपुरीति वक्तव्यम्। अन्तरायां पुरि॥ तृतीया समासे। १।१।३०। सर्वनामता न। मासपूर्वाय॥ तृतीयासमासार्थवाक्येऽपि न। मासेन पूर्वाय। द्वन्द्वे च। १।१।३१। उक्ता संज्ञा न। वर्णाश्रमेतराणाम्। विभाषा जसि १।१।३२। वर्णाश्रमेतरे। वर्णाश्रमेतराः। प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च। १।१।३३। एते जस्युक्तसंज्ञा वा स्युः। प्रथमे प्रथमाः। तयप्प्रत्ययः। द्वितये। द्वितयाः। शेषं रामवत्। नेमे। नेमाः शेषं सर्ववत्॥ तीयस्य ङित्सु वा। द्वितीयस्मै। द्वितीयायेत्यादि। एवं तृतीयः॥**

**पूर्वादिभ्यो०**। पूर्वपरेत्यादित्रिसूत्रीनिर्दिष्टाः पूर्वादय इह विवक्षिताः। त्यदादयस्तु हलन्ताधिकारे व्याख्यास्यन्ते। पूर्वशब्दात् पञ्चम्येकवचनविवक्षायां "ङसि" प्रत्यये आनीते "पूर्वादिभ्यो नवभ्यो वा" इतिसूत्रेण ङसिस्थाने विकल्पेन "स्मात्" इत्यादेशे

कृते रूपद्वयम् । तत्र "झलां जशोन्ते" इत्यनेन जश्त्वेन दकारे "वावसाने" इति चर्त्व-विकल्पेन **पूर्वस्मात् पूर्वस्माद्, पूर्वात् पूर्वाद्** इति रूपचतुष्टयम् । एवमेव—सप्तम्या एकवचनस्य "ङि" इत्यस्य स्थाने विकल्पेन "स्मिन्" इत्यादेशे पक्षे सर्ववत् पक्षे च रामवत् इत्याह—**पूर्वस्मिन्, पूर्वे** इति । "**एवं परादीनाम्**" इति । पूर्व-शब्दवत् परादीनामपि प्रक्रिया ज्ञेयेत्यर्थः । तथाहि—(प्र०) परः । परौ । परे, पराः । (द्वि०) परम् । परौ । परान् । (तृ०) परेण । पराभ्याम् । परैः (च) परस्मै । पराभ्याम् । परेभ्यः । (पं०) परस्मात, परात् । पराभ्याम् । परेभ्यः । (ष०) परस्य । परयोः । परेषाम् । (स०) परस्मिन्, परे । परयोः । परेषु । (सं) हे ! पर । इत्यादि । एवमितरेऽपि बोध्याः **शेष**मिति । विकल्पाभावपक्षे सर्वशब्दवत् पूर्वादीनां प्रक्रियेति भावः ।

ननु—सर्वनामसञ्ज्ञा विधानमविशेषात् सर्वत्र स्यादत आह—**सञ्ज्ञोपसर्जनी** इति । सञ्ज्ञाभूता उपसर्जनीभूताश्च ये सन्ति सर्वादयः ते सर्वनामसञ्ज्ञका न भवन्तीत्यर्थः । तदुदाहरति—"**सर्वोनाम**" इति । कस्यचित् "सर्व" इति नाम तस्य चतुर्थ्येकवचने सर्वनामसञ्ज्ञानिषेधात् स्मैकार्यस्याभावेन "सर्वाय" इत्येव, नतु 'सर्वस्मै" इति । एवमन्यत्रापि सर्वनामकार्याभावः अर्थात् "सर्वात्, सर्वाणाम् सर्वे" इत्येव पञ्चमिषष्ठीसप्तमीषु ज्ञेयम् । नात्रापि स्मात्प्रभृतिसर्वनामकार्यम् । उपसर्जनत्वे उदाहरति—**अतिक्रान्त** इति । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति वार्त्तिकेनात्र समासः । कृते च समासे सर्व-शब्दः सर्वार्थवाचकत्वरूपां शक्तिं परिजहात्येव, तेनायमुपसर्जनत्वान्न सर्वनामसञ्ज्ञाप्रयुक्त-स्मायादिकार्यभागिति सरलः पन्थाः ॥ *

"अन्तरमिति" इति । "अन्तरं बहिर्योगोपसंव्यानयोः" इति गणसूत्रे—सर्वादि गणान्तर्गते "अपुरि" इति वक्तव्यम्—पठनीयम् । ततश्च वार्त्तिकस्यायमर्थः सम्पद्यते यत् पुर्यां विशेष्यभूतायामन्तरशब्दः सर्वादिगणे पाठं न प्राप्नोति, तेन सर्वत्रापि अन्तरशब्दः पुर्यां विशेष्यभूतायां सर्वनामत्वं न लभते, अतः "अन्तरायां पुरि" इत्यादौ स्याडागमादि सर्वनामसञ्ज्ञाकार्यं न भवतीति परमार्थः । तदुदाहरति—"**अन्तरायां पुरि**" इति । गृहा इति शेषः । प्राकाराद्बाह्यायां पुरि, प्राकारान्तर्वर्त्तिन्यां वा पुरि गृहाः सन्ति । अत्र-सत्यपि बहिर्योगे तस्य पुरि विषयत्वान्न सर्वादिकार्यमिति भावः । बहिः शब्देनाऽनावृतो देशो बाह्यश्चोच्यत इत्युक्तम् । **तृतीयासमासे** । "सर्वादीनि०" इत्यतः सर्वनामग्रहणम्, "न बहुव्रीहौ" इत्यतः नेत्यनुवर्त्तनीयम् । तृतीयासमासे सर्वनामसञ्ज्ञा न स्यादित्यर्थः

---

* एषोऽत्र सिद्धान्तसङ्ग्रहः ।

**सर्वादिः सर्वकार्यी स्यान्नचेद्गौणोऽथवाऽभिधा ।**
**पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ॥**
**परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि ॥**

उदाहरति—"मासपूर्वाय" इति। अत्र मासेन पूर्व इति विग्रहः, "हेतौ" (२।३।२३) इति तृतीया। "पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः"। (२।१।३१) इति सूत्रेण तृतीयातत्पुरुषसमासः। अत्र—"विभाषादिक्समासे बहुव्रीहौ" (१।१।२८) इत्यतः "समासे" इत्यनुवर्त्तमानेऽपि पुनः समासग्रहणं तृतीयासमासीयलौकिकविग्रह-वाक्यरूपगौणसमासस्यापि सङ्ग्रहार्थम् तदेतदाह—'**तृतीया समासार्थेति**"। **द्वन्द्वे च**। पूर्ववत् सर्वनामेति नेति चानुवर्तते। तदाचष्टे—"**उक्ता सञ्ज्ञा न**" इति। सर्वनामसञ्ज्ञा नेत्यर्थः। "वर्णाश्रमेतराणाम्" इति। वर्णाश्च आश्रमाश्च इतरे च ते तेषाम् इति द्वन्द्वः। "वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः" इति याज्ञवल्क्य-स्मृतिः। अत्र सर्वनामसञ्ज्ञाभावात् "आमि सर्वनाम्नः"—इति प्राप्तः सुडागमो न भवति। **विभाषा०**। 'सर्वनामे "त्यनुवर्त्तते। 'द्वन्द्वे' इति च "जसि" इत्यवि-भक्तिको निर्देशः। जस् इः जसिः। सौत्रः सप्तम्या लुक्। इशब्दो इवर्णपरः स "शी" इत्यस्य ईकारमाख्याति तेन "जसादेशे शीभावे कर्त्तव्ये द्वन्द्वे उक्ता सञ्ज्ञा ने" त्यर्थः फलति। उदाहरति—वर्णाश्रमेतरे इत्यादि। विकल्पेन निषेधे विधौ रूपद्वयमेव भवति। साधनप्रकारः "पूर्वे पूर्वाः" इति प्रयोगवत्। **प्रथमचरम०**। "विभाषाजसि' इति "सर्वनामानि" इतित्रानुवर्त्तते। एते = प्रथमादयः। जसि = जस्विषये। उक्तसञ्ज्ञाः = सर्वनामसञ्ज्ञक वा स्युः = विकल्पेन भवन्तीत्यर्थः। उदाहरति 'प्रथमे प्रथमा' इत्यादिना। प्रातिपदिकसञ्ज्ञोत्तरं प्रथमाबहुवचनविवक्षायां प्रथमशब्दात् परे "जस्" प्रत्यये आनीते "प्रथमचरमे"ति सूत्रेण जसि विकल्पेन सर्वनामसञ्ज्ञायां जातायां,सर्वनामसञ्ज्ञापक्षे 'जसःशी' इति जसः शीभावे कृते शस्येत्त्वे, लोपे च, आद्गुणे च कृते सति "**प्रथमे**" इति रूपम् उक्तसञ्ज्ञाभावपक्षे '**प्रथमाः**" इति यथा जसि 'रामाः' इति भवति। एवमेव—**चरमे, चरमाः** इति। "**तयप्प्रत्यय**" इति। "सङ्ख्याया अवयवे तयप्" (५।२।४२) इति सूत्रेण विहित इत्यर्थः। ततः प्रत्ययग्रहणपरिभाषया तदन्ताः ग्राह्याः इति शेष इत्येवं मत्वा उदाहरति—**द्वितये द्वितयाः** इति। द्वौ अवयवौ अस्येत्यर्थे द्विशब्दात् तयप्। एवम्—**अल्पे अल्पाः**। **अर्धे अर्धाः**। **कतिपये कतिपयाः नेमे नेमाः** इति प्रथमशब्दवदेव भवन्ति। हेमे तु "त्रयाः त्रये" इत्यपि। किन्तु नेमशब्दः सर्वादिगणपठितो-ऽतोऽस्य शिष्टानि रूपाणि सर्वशब्दवत्, इतरेषां प्रथमादीनान्तु शेषं रामवत ज्ञेयम्। इदन्तु बोध्यम्—अर्धशब्द एकदेशवाची पुंसि समांशवाची तु क्लीवे भवति 'वा पुंस्यर्धोऽर्धं समेंशके" इत्यमरः। **तीयस्य०**। "विभाषा जसि" तीयप्रत्ययान्तस्य ङित्सु=ङे-ङसि-ङस्-ङि इत्येतेषु ङिद्वचनेषु परेषु सर्वनामसंज्ञावचनं कर्त्तव्यमित्यर्थः। द्विशब्दात् "द्वेस्तीयः" (५।२।५४) इत्यनेन पूरणेऽर्थे तीयप्रत्ययः। द्वयोः पूरणो द्वितीयः। "**द्वितीयस्मै, द्वितीयाय**" इत्यादि इति। साधनप्रकारस्तु पूर्वशब्दवत्। अथास्य रूपाणि—

द्वितीयः। द्वितीयौ। द्वितीयाः।
द्वितीयम्। द्वितीयौ। द्वितीयान्।
द्वितीयेन। द्वितीयाभ्याम्। द्वितीयैः।
द्वितीयस्मै, द्वितीयाय। द्वितीयाभ्याम्। द्वितीयेभ्यः।
द्वितीयस्मात्, द्वितीयात्। द्वितीयाभ्याम्। द्वितीयेभ्यः।
द्वितीयस्य। द्वितीययोः। द्वितीयानाम्।
द्वितीयस्मिन्, द्वितीये। द्वितीययोः। द्वितीयेषु।
हे द्वितीय। हे द्वितीयौ। हे द्वितीयाः।

"एवम्" इति। द्वितीयवत् तृतीयशब्दस्यापि प्रक्रिया ज्ञेयेत्यर्थः। त्रयाणां सङ्ख्यापूरणः तृतीयः। "त्रेःसम्प्रसारणम्" (६।२।५५) इति सूत्रेण त्रिशब्दात्परं तीयप्रत्ययः। रेफस्य ऋकारः। "सम्प्रसारणाच्च" (६।१।१०८) इति सूत्रेण पूर्वरूपमिति तद्धिते "तृतीय" पदसिद्धिः। कृत्तद्धितेति प्रातिपदिकसञ्ज्ञेत्यपि न विस्मरणीयम्। ननु—'प्रकारवचने जातीयर्' (५।३।१३) इति सूत्रेण पटुशब्दात जातीयर् प्रत्यये कृते पटुजातीयशब्दस्यापि तीयप्रत्ययान्तत्वात् ङित्सु विभाषा सर्वनामसञ्ज्ञा स्यादिति चेन्न "अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्" इति परिभाषणात्।

निर्जरः॥ **जराया जरसन्यतरस्याम्। ७। २। १०१।** जराया जरस् वाऽजादौ विभक्तौ॥ **पदाङ्गाधिकारे तस्य तदन्तस्य च॥** निर्दिश्यमानस्यादेशा भवन्ति॥ एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरस्॥ निर्जरसौ। निर्जरसः। उपजीव्यविरोधान्न जरस्। निर्जरैः। पक्षे हलादौ च रामवत्॥ **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु। ६१। ६३।** पाददन्तनासिकामासहृदयनिशाऽसृज्यूषदोषयकृच्छकृदुदकआस्य एषां पदादय आदेशाः स्युः शसादौ वा। यत्तु आसनशब्दस्यासन्नादेश इति काशिकायामुक्तं तत्प्रामादिकमेव। पादः। पादौ। पादाः। पादम्। पादौ। पदः। पादान्। पदा पादेन इत्यादि।

अथाऽकारान्तो निर्जरशब्दः। निष्क्रान्तो जराया इति निर्जरः। "निरादयः क्रान्ताद्यर्थे पञ्चम्याः" (वा० २।२।१८) इति वार्तिकेन समासः। "गोस्त्रियोरुपसर्जनस्य" (१।२।४८) इति ह्रस्वत्वम्। अथवा निर्गता जरा यस्मादिति बहुव्रीहिः। जरा=वृद्धावस्था। "विस्रसा जरा" इत्यमरः। अकारान्तत्वेऽपि निर्जरशब्दस्य रामशब्दात् किञ्चिद्विशेषं वक्तुमाह—**जराया जरसन्यतरस्याम्।** इति। "अष्टन आ विभक्तौ" (७।२।८४) इत्यतो "विभक्तौ" इति अनुवर्त्य "अचि र ऋतः"

(७ । २ । १००) इत्यतोऽनुवृत्तेन "अचि" इत्यनेन विशेषणीयम्। "यस्मिन्विधि" रिति तदादिविधिरिति सर्वं मत्वा व्याचष्टे—"**जराया०**" इति। "विभक्ता" विति किम्। जराया इदं जारम्। अत्र विभक्तयभावात् न जरसादेशः। अन्यथा (विभक्तौ इत्यनुक्तेः) अण्प्रत्ययस्य अजादित्वादत्रापि जरसादेशापत्तिः स्यात्। अजादाविति किम्। जराभ्याम्। जराभिः। ननु—जराशब्दस्य जरसादेशो विधीयते, निर्जरशब्दे तु न जराशब्दः तत्कथमत्र जरसादेशः इत्यत आह—**पदाङ्गेति**। अस्यायमर्थः—* पदाधिकारे अङ्गाधिकारे च यस्य यत्कार्यं विहितं तत् तस्य तदन्तस्य च भवति। जरसादेशोऽयमङ्गाधिकारस्थः, तस्मात् जराशब्दस्य जरान्तशब्दस्य च द्वयोरपि जरसादेशो भवति। निर्जरशब्दोऽयं तदन्तः अतोऽस्यापि जरसादेशोऽनिवार्यः। ननु-भवतु निर्जरशब्दस्यापि उक्तपरिभाषया जरसादेशः, परन्तु भवन्नसौ अनेकाल्त्वात् सर्वस्य निर्जरशब्दस्य स्थाने स्यात् अत आह--**निर्दिश्यमानस्येति**। सूत्रे साक्षात् † निर्दिष्टस्यैवादेशाः स्युरित्यर्थः। प्रकृते च जराशब्दो निर्दिष्टो ननु निर्जरशब्दः तस्मात् जरसादेशस्यानेकाल्त्वेऽपि न सर्वस्य निर्जरशब्दस्य जरसादेशः। स्यादेवम्—तथापि निर्जरशब्दो जराशब्दान्तो नास्ति "जरा" "जर" इत्याकृतिभेदात् किन्तु 'जर' शब्दान्तो निर्जरशब्द इति वक्तव्यं, तथाच न तस्य जरसादेशः इतीमां शङ्कां परिहरति—**एकदेशविकृतेति**। "एकदेशविकृतमनन्यवत्" इति परिभाषाकारः। अस्यायमाशयः—"नहि कर्णे पुच्छे वा छिन्ने श्वा अश्वो भवति वा गर्दभः किन्तु श्वैव" एवमेव निर्शब्देन जराशब्दस्य समासे सति "गोस्त्रियोः"--(१ । २ । ४८) इति सूत्रेण आकारस्य ह्रस्वत्वेऽपि उक्तन्यायेन 'जर' इत्याकारो 'जरा' शब्द एव, सूत्रे च "जरा" शब्दस्यैव जरसादेशो निर्दिष्टः, ततश्च तस्यैवोक्त आदेश इति न काप्यनुपपत्तिः। **निर्जरसाविति**। निर्जरशब्दस्य प्रातिपदिकसञ्ज्ञोत्तरं प्रथमाद्विवचनविवक्षायाम् "औ" प्रत्यये स्थापिते "जरायाः" इति सूत्रेण अजादिविभक्तौ विकल्पेन जरसादेशः। तत्रोक्तरीत्या एकदेशविकृतानन्यन्यायेन "जर" इत्यन्तभागस्य (पक्षे) "जरस्" इत्यादेशे कृते "निर्जरस् औ" इति जाते सति "अज्झीनम्" इति न्यायेन सस्य परयोगे "निर्जरसौ" इति सिद्धम्। जरसादेशाभावपक्षे तु "निर्जर औ" इति स्थिते "प्रथमयोः"—(६ । १ । १०२) इति सूत्रेण वृद्धिं बाधित्वा पूर्वसवर्णदीर्घे प्राप्ते "नादिचि" (६ । १ । १०४) इति

---

* "अपदान्तस्य मूर्धन्यः" (८ । ३ । ५५) इत्यतः प्राक् "पदस्य" (८ । १ । १६) इत्यधिकारः। "अङ्गस्य" (६ । ४ । १) इत्यङ्गाधिकारस्तु—आसप्तमाध्यायपरिसमाप्तेः॥

† जराशब्द एव स्थानी प्रत्यक्षनिर्दिष्टः, जराशब्दान्तस्य तु निर्जरशब्दस्य तदन्तविधिना लभ्यत्वादानुमानिक एव स इति भावः।

सूत्रेण पूर्वसवर्णदीर्घनिषेधे "वृद्धिरेचि" इत्यनेन वृद्धौ सत्यां "निर्जरौ" इति भवति । एवं सर्वत्र आदेशाभावपक्षे हलादौ विभक्तौ च रामशब्दवत् प्रक्रिया । आदेशपक्षे तु अजादौ विभक्तौ परतः "अज्झीनम्"—इति परयोगमात्रमेवेति ध्यातव्यम् । किन्तु "निर्जर भिस्" इति तृतीयाबहुवचनस्थापनायां यदा "अतो भिस ऐस्" इति सूत्रेण भिसः स्थाने ऐस् आदेशः कृतः तदा "निर्जर ऐस्" इत्यवस्थायां तृतीयाबहुवचनस्य अजादि विभक्तित्वं जातम् अतोऽत्रापि जरसादेशस्य विकल्पेन भाव्यमिति जायते आशङ्का, तां परिहर्त्तुमाह—**उपजीव्यविरोधादिति** । सन्निपातपरिभाषाविरोधादित्यर्थः । अर्थात् "निर्जर ऐस्" इत्यत्र अदन्तमङ्गमाश्रित्य प्रवृत्तः ऐस् इत्यादेशः स्वनिमित्तविरोधात् = अदन्ताङ्गविघातकजरसादेशस्य निमित्तं नार्हति भवितुम्, किन्तु "वृद्धिरेचि" इत्यनेन वृद्धौ सत्यां "निर्जरैः" इत्येकमेव रूपं नतु "निर्जरसैः" इत्यपि । अथास्य सर्वासु विभक्तिषु रूपाणि लिख्यन्ते—

**(प्र०) निर्जरः । निर्जरौ, निर्जरसौ । निर्जराः, निर्जरसः ।**

**(द्वि०) निर्जरम्, निर्जरसम् । निर्जरौ, निर्जरसौ । निर्जरान्, निर्जरसः ।**

**(तृ०) *निर्जरसा । निर्जरेण । निर्जराभ्याम् । निर्जरैः । (निर्जरसैः)**

**(च०) निर्जरसे । (निर्जराय) निर्जराभ्याम् । निर्जरेभ्यः ।**

**(पं०) निर्जरसः । (निर्जरात्) निर्जराभ्याम् । निर्जरेभ्यः ।**

**(ष०) निर्जरसः । (निर्जरस्य) निर्जरयोः, निर्जरसोः । निर्जरसाम् । (निर्जराणाम्)**

**(स०) निर्जरे, निर्जरसि । निर्जरयोः, निर्जरसोः । निर्जरेषु ।**

**(सं०) हे ! निर्जर** इत्यादि ।

अथ "पाद" शब्दस्य शसादौ विभक्तौ कञ्चिद्विशेषं दर्शयितुमाह-**पद्दन्नो** इति । पद्, दत्, नस्, मास्, निश्, असन्, दोषन्, यकन्, शकन्, उदन्, आसन्, इत्येषां-समाहार द्वन्द्वः । शस्-द्वितीयाबहुवचनं प्रभृतिः=आदिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः । "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" (६ । १ । ५६) इत्यतोऽन्यतरस्याम् इत्यनुवर्तते । शसादिषु परेषु पादादिशब्दानां यथासङ्ख्यं पदादय आदेशा वा स्युरित्यर्थः ।

---

* यद्यपि-तृतीयैकवचने "निर्जर आ" इति स्थिते "टाङसि"—इति इनादेशे जरसादेशे च कृते "निर्जरसिन" इति, चतुर्थ्येकवचने—"निर्जर ए" इति स्थिते या देशे कृते अजादिविभक्तिपरत्वाभावात् "निर्जराय" इति । पञ्चम्येकवचने-"निर्जर अस्" इति स्थिते जरसादेशे च "निर्जरसात्" इति, षष्ठ्येकवचनेऽपि "निर्जर अस्" इति स्थिते ङसः स्यादेशे ऽजादिविभक्तिपरत्वाभावात् "निर्जरस्य" इत्येव तेन तेन रूपेण भाव्यम् तथापि पूर्वविधीन् इनादीन् (७ । १ । १२) बाधित्वा परत्वात् (७ । २ । १०२)

"यत्तु" इति । **प्रामादिक**मिति । "हव्या जुह्वान आसनि" इति मंत्रे "आसन्यं प्राणमूचुः" इत्यादि श्रुतौ च आस्यार्थकस्यैव भाष्यादौ दर्शनादिति भावः । पादशब्दस्य सुटि रामवत् प्रक्रियेति दर्शयति "पादः पादौ" इत्यादि । शसि तु—"पाद अस्" इति स्थिते "पद्दन्नो"—इति "पद्" आदेशे, दस्य परयोगे सस्य रुत्वे, रस्य विसर्गे च कृते "पदः" इत्येकं रूपम् । आदेशाभावपक्षे तु सर्वोविधिः रामशब्दवत् अत आह—"पादान्" इति एवमेव शस्प्रभृतिषु सर्ववचनेषु द्वे द्वे रूपे ज्ञेये । तथाहि—

**( प्र० ) पादः । पादौ । पादाः ।**

**( द्वि० ) पादम् । पादौ । पदः । पादान् ।**

**( तृ० ) पदा, पादेन । पद्भ्याम् । पादाभ्याम् । पद्भिः, पादैः ।**

**( च० ) पदे, पादाय । पद्भ्याम् । पादाभ्याम् । पद्भ्यः, पादेभ्यः ।**

**( पं० ) पदः, पादात् । पद्भ्याम् । पादाभ्याम् । पद्भ्यः, पादेभ्यः**

**( ष० ) पदः, पादस्य । पदोः, पादयोः । पदाम्, पादानाम् ।**

**( स० ) पदि, पादे । पदोः, पादयोः । पत्सु, पादेषु ।**

**( सं० ) हे पाद०** । सप्तमी बहुवचने "पाद् सु" इति स्थिते पदादेशपक्षे "पद् सु" इति जाते सति "खरि च" इत्यनेन चर्त्वेन दस्य तकारे "पत्सु" इति ज्ञेयम्, पक्षे च रामवदिति तथा दर्शितमेव । एतत्सर्वं हृदि कृत्वा आह—"**इत्यादि**" इति । एवं दन्तशब्दस्यापि प्रक्रिया । तथाहि—**दन्तः । दन्तौ । दन्ताः । दन्तम् । दन्तौ । दतः, दन्तान्** इत्यादि पादवद्रूपाणि । इदन्तु बोध्यम्—भ्यामादि विभक्तौ दन्तशब्दस्य पक्षे दत् इत्यादेशे कृते "दत् भ्याम्" इत्यवस्थायां "झलां जशोऽन्ते" इति सूत्रेण जश्त्वेन दकारे "दद्भ्याम्" इति भवति । एवमेवान्यत्रापि । अत्र वक्ष्यमाणेन "स्वादिष्व सर्वनामस्थाने" ( १ । ४ । १७ ) इत्यनेन पदसञ्ज्ञायां पदान्तत्वं ज्ञेयम् । एवम्—सप्तमी बहुवचने "दत्" आदेशे "दत् सु" इति स्थिते तस्य जश्त्वेन दः, तस्य "खरि च" इति चर्त्वेन तकारः "दत्सु" इत्येव रूपम् । पक्षे तु "दन्तेषु" इति भवत्येव । एवं मासशब्दस्यापि शस् प्रभृतिषु "मास्" इत्यादेशे रूपाणि—

---

जरसादेश एव भवति । केचित्तु—"विप्रतिषेधे परं कार्यम्" ( १ । ४ । २ ) इत्यत्र परशब्दस्येष्टवाचित्वसम्भवात् पूर्वविप्रतिषेधेन तृतीयापञ्चम्योरिनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते यथायोगं "निर्जरसिन" "निर्जरसात्" इति रूपे स्याताम्, नतु "निर्जरसा" "निर्जरसः" इत्याहुः । भिसि तु—सन्निपातपरिभाषाया अनित्यत्वादेव "निर्जरैः" इति रूपान्तरमप्युक्तम् । तदनुसारिभिश्च षष्ठ्येकवचने पूर्वविप्रतिषेधेन स्यादेशे कृते अजादिविभक्त्यभावात् न जरस् इति मत्वा "निर्जरस्य" इत्येकमेव रूपं स्वीकृतमिति । तदेतत्सर्वं भाष्यविरुद्धमिति **दीक्षितादयः । वयन्तु**—शब्दपारावारपाराभाववादिन एवंविधेषु विषयेषु माध्यस्थ्यमातिष्ठामहे ।

(प्र०) मासः। मासौ। मासाः।
(द्वि०) मासम्। मासौ। मासः। मासान्।
(तृ०) मासा, मासेन। * माभ्याम्। मासाभ्याम्। माभिः, मासैः
(च०) मासे, मासाय। माभ्याम्, मासाभ्याम्। माभ्यः, मासेभ्यः
(पं०) मासः, मासात्। माभ्याम्, मासाभ्याम्। माभ्यः, मासेभ्यः
(ष०) मासः, मासस्य। मासोः, मासयोः। मासाम्, मासानाम्
(स०) मासि, मासे। मासोः, मासयोः। † मास्सु माःसु, मासेषु।
(सं०) हे! मास०।

विश्वपाः॥ **दीर्घाज्जसि च। ६।१।१०५।** दीर्घाज्जसि इचि च न पूर्वसवर्णदीर्घः। वृद्धिः। विश्वपौ। विश्वपाः। हे विश्वपाः। हे विश्वपौ। हे विश्वपाः॥ **सुनडनपुंसकस्य। १। १। ४३।** स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीवस्य॥ **स्वादिष्वसर्वनामस्थाने। १।४।१७।** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदं स्यात्। **यचि भम्। १।४।१८।** यकारादिष्वजादिषु च कप्प्रत्ययाऽवधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भं स्यात्॥ **आकडारादेका संज्ञा १।४।१।** इत ऊर्ध्वं "कडाराः कर्मधारये" इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया॥ या परानवकाशा च। तेन शसादावचि भसंज्ञैव न पदत्वम्। **आतोधातोः।६।४।१४७।** आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः॥ अलोन्त्यस्य। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि॥ एवं शङ्खध्मादयः। धातोः किम्। हाहान्। आत इति योगविभागादधातोरपि क्वचित्। क्त्वः। श्नः।

अथ आकारान्तो विश्वपाशब्दः। विश्वं पाति रक्षति इति विग्रहः। "आतोऽनुपसर्गेकः" (३।२।३) आदन्तात् "पारक्षणे" अस्माद्धातोः के प्राप्ते वासरूपन्यायेन

---

* "पद्दन्नो०" इति सूत्रेण भ्यामि मास् आदेशे "मास् भ्याम्" इति स्थिते स्वादिष्विति सूत्रेण पदसञ्ज्ञायां "ससजुषोरुः" इत्यनेन रुत्वे "भो भगोः" इत्यनेन यत्वे "हलि सर्वेषाम्" इति सूत्रेण यलोपे "माभ्याम्" 'माभि" रित्यादि ज्ञेयम्।

† "मास् सु", इति जाते सति सस्य रुत्वे "खरवसानयोः"—इति विसर्गे "वा शरि" इति सत्वविकल्पः तेन "मास्सु माःसु" इति। आदेशाभावपक्षे "मासेषु" इति विकल्पद्वये त्रीणि रूपाणि।

"आतो मनिन्क्वनिब्वनिपश्च" (३।२।७४) इति सूत्रेण चकारात् विच्प्रत्ययः। उक्तसूत्रे "छन्दसि" इत्यनुवर्तमाने वेदे विच्। लोके तु—* "अन्येभ्योऽपि दृश्यन्ते" (३।२।७५) इत्यनेन विच् इति विवेकः। "**विश्वपाः**" इति। कृत्तद्धितेति कृतप्रातिपदिकसञ्ज्ञात् "विश्वपा" शब्दात् प्रथमैकवचने 'सु' प्रत्यये स्थापिते उकारस्येत्त्वेन लोपे-सस्य रुत्वं रस्य विसर्गश्चेति क्रमः। आबन्तत्वाभावात् हल्ङ्यादिसूत्रेण न सुलोपः। **दीर्घाज्जसि च**। "प्रथमयोः"—इत्यतः "पूर्वसवर्णः" इति 'नादिचि' इत्यतः नेति इचीति चानुवर्त्य व्याचष्टे—**दीर्घाज्जसि०** इति। विश्वपाशब्दात् प्रथमायां द्विवचने औ इत्यानीते "विश्वपा औ" इत्यत्र 'प्रथमयोः"—इति पूर्वसवर्णदीर्घे प्राप्ते "दीर्घाज्जसि च" इत्यनेन सूत्रेण पूर्वसवर्णदीर्घे निषिद्धे "वृद्धिरेचि" वृद्धौ सत्यां "**विश्वपौ**" इति भवति। बहुवचने "विश्वपा अस्" इत्यवस्थायां पूर्ववत् पूर्वसवर्णदीर्घे प्राप्ते, निषिद्धे च "अकः सवर्णे"—इत्यनेन दीर्घे रुत्वे विसर्गे च "**विश्वपाः**" इति रूपम्। **हे विश्वपाः** इत्यादि स्पष्टम्। **सुडनपुंसकस्य**। "शिसर्वनामस्थानम्" इत्यतः सर्वनामस्थानमित्यनुवर्त्तते। सुडिति सु इत्यारभ्य औटष्टकारेण प्रत्याहारो व्याख्यानात्। तदाह—**स्वादिपञ्चवचनानि०** इति। अक्लीबस्य=नपुंसकभिन्नप्रातिपदिकस्य सुडित्यर्थः। **स्वादिष्व०**। सु इति सप्तमीबहुवचनं न शङ्क्यम् किन्तु "असर्वनामस्थाने" इति पर्युदासात् प्रथमैकवचनमेव। कप्प्रत्ययावधिकेषु=पञ्चमाध्यायान्ते "उरःप्रभृतिभ्यः कप्" (५।४।१५१) इति विधीयमानकप्प्रत्ययोत्तरावधिकेषु, असर्वनामस्थानेषु= सर्वनामस्थानवर्जितेषु † स्वादिषु प्रत्ययेषु परतः पूर्वं पदं=पदसञ्ज्ञं स्यादित्यर्थः। उदाहरणम् राजभ्यामित्यादि। असर्वनामस्थाने इति किम्। राजानौ, राजानः। **यचि भम्**। "स्वादिष्वसर्वनामस्थाने" इति वर्त्तते। पूर्वेण पदसञ्ज्ञायामविशेषेण प्राप्तायां तदपवादभूता भसञ्ज्ञाऽनेन विधीयते। यू च अचेति समाहारद्वन्द्वः। स्वादिस्वसर्वनामस्थाने इति इत्यनुवृत्तं "यचि" इत्यनेन विशेष्यते "यस्मिन् विधि" रिति तदादिविधिः तदाचष्टे—**यकारादिष्व०** इति। यकारादावुदाहरणं यथा—गार्ग्यः, वात्स्यः। 'गर्गादिभ्यो यञ्' (४।१।१०५) इति यञि "यस्येति च" (६।४।१४८) इत्यकारलोपः। असर्वनामस्थानेषु किम्। सुपादौ सुपादः, विद्वांसौ विद्वांसः, दित्यवाहौ दित्यवाहः इत्यादौ "पादः पत्" (६।४।१३०) "वसोः सम्प्रसारणम्" (६।४।१३१) "वाह ऊठ्" (६।४।१३२) इत्यादयो यथाक्रमं माभूवन् इति। **आकडारा-देका०**। तव्यत्तव्यानीयरादौ कृत्कृत्यप्रत्ययादिसञ्ज्ञासमावेशदर्शनादत्र नियममाह। सूत्रे आङ् मर्यादायामिति मत्वा आह—"कडाराः कर्मधारये" (२।२।३८) इत्यतः प्रागिति। एवञ्च सति कडारशब्दस्य नात्र प्रवेशः प्रयोजनाभावात्। नन्विह एकैव सञ्ज्ञा

* अस्मिन् सूत्रे "छन्दसि" इति निवृत्तमित्युक्तत्वात्

† स्वादिषु इति सुशब्दादेकवचनादारभ्य आकपः प्रत्यया गृह्यन्ते इति **काशिका**

ऽस्तु परन्तु विनिगमनाविरहात् भसञ्ज्ञैवेति कुतो लाभ इत्याह—**या परा०** इति । अस्यायमाशयः । उभयोः सावकाशत्वे "विप्रतिषेधे परम्०" ( १ । ४ । २ ) इति परैव गृह्यते । अन्यतरस्या निरवकाशत्वे तु सैव । तत्र परा यथा—"धनुषा विध्यति" इत्यत्र शराणामपायं प्रति अवधिभूतस्यैव धनुषो व्यधनं प्रतिसाधकत्वमित्युभयप्रसङ्गे परत्वात्करणसञ्ज्ञा अपादानसञ्ज्ञां बाधते । निरवकाशायाः पूर्वस्यास्तूदाहरणं "भवतष्ठक्छसौ" ( ४ । २ । ११५ ) भवदीय इति । अत्र हि 'सिति च' ( १ । १६ ) इति पदसञ्ज्ञा परामपि भसञ्ज्ञां बाधते निरवकाशत्वात् तेन तकारस्य जश्त्वं भवति । प्रकृते तु परा अनवकाशा भसञ्ज्ञा पदसञ्ज्ञां बाधते इति शसादावचि सैव ग्रहीतुमुचितेति भावः । मथितममुमर्थमाह—**तेन** इति । विश्वपाशब्दात् शस् प्रत्यये अनीते "लशक्व" इति शस्येत्त्वेन लोपे 'विश्वपा अस्' इत्यवस्थायां "स्वादिष्वसर्वनाम"—इत्यनेन सर्वनामस्थानभिन्नत्वात् शसः पूर्वस्य "विश्वपा" इत्यस्य पदसञ्ज्ञायां प्राप्तायां "यचि भम्" इत्यनेन च भसञ्ज्ञा प्राप्ता शसोऽनादित्वात्, तदत्र कतरया सञ्ज्ञया भाव्यमित्याकाङ्क्षायां "आकडारादेका"—इति सूत्रेण भसञ्ज्ञायाः परत्वादनवकाशत्वाच्च भसञ्ज्ञैव स्थापिता । ततः सूत्रं प्रवर्त्तते—**आतो धातोः** इति । अत्र अङ्गस्येति भस्येति चाधिकृतम् । धातो रिति आत इति षष्ठ्यन्तेन विशेष्यते, विशेषणत्वाच्च तदन्तविधिः । "अल्लोपोऽनः" इत्यतो "लोप" इति च वर्त्तते इति व्याचष्टे—**आकारान्तो यो**—इति तदनेन सूत्रेण "विश्वपा" इति भसञ्ज्ञस्य सर्वस्य लोपप्रसक्तौ अलोन्त्यपरिभाषया पकारोत्तरवर्त्तिन आकारस्य लोपे पकारस्य हलः परयोगे कृते सस्य रुत्वे रस्य विसर्गे च कृते "**विश्वपः**" इति ज्ञेयम् । एवं विश्वपाशब्दस्य सर्वत्र अजादिविभक्तिषु परत इत्थमेव सकलं कार्यं ज्ञातव्यम् । हलादौ तु भसञ्ज्ञाऽभावादातोलोपो न इति दर्शयति 'विश्वपाभ्याम्' इति प्रयोगलेखेन । अथ शिष्यबुद्धिसौकर्याय अस्य सर्वासु विभक्तिषु रूपाणि प्रदर्श्यन्ते—

**( प्र० ) विश्वपाः । विश्वपौ । विश्वपाः ।**
**( द्वि० ) विश्वपाम् । विश्वपौ । विश्वपः ।**
**( तृ० ) विश्वपा । विश्वपाभ्याम् । विश्वपाभिः ।**
**( च० ) विश्वपे । विश्वपाभ्याम् । विश्वपाभ्यः ।**
**( पं० ) विश्वपः । विश्वपाभ्याम् । विश्वपाभ्यः ।**
**( ष० ) विश्वपः । विश्वपोः । विश्वपाम् ।**
**( स० ) विश्वपि । विश्वपोः । विश्वपासु ।**
**( सं० ) हे विश्वपाः** । इति । एवमेवोक्तसर्वसूत्रक्रमविषयाः आकारान्ताः पुंसि*

---

* शङ्खेन शङ्खं वा धमतीति **शङ्खध्माः** । ध्मा शब्दाग्निसंयोगयोः । अस्माद्धातोः पूर्ववत् विच् क्विप् वा । एवं—सोमं पिबतीति **सोमपाः** । कीलालं पिबतीति **कीलालपाः** । मधु पिबतीति **मधुपाः** इत्यादि ।

शङ्खध्मादयोऽपि भवन्तीत्याह—एवमिति। आदिना क्षीरपाम्बुपाप्रभृतयः। ननु—सूत्रे धातोरित्युक्तं, विश्वपाप्रभृतयः शब्दा न धातुभूताः किन्तु प्रातिपदिकसञ्ज्ञा अमी ? सत्यम् तथाप्युक्तमभियुक्तैः—

शतृशानक्वसन्तानां तृजन्तानां तथैव च

क्विबन्तानां च शब्दानां धातुत्वं नोपहन्यते ॥ इति।

सूत्रे उक्तपदग्रहणस्य पदकृत्यं पृच्छति "धातोःकिम्" इति। उत्तरयति "**हाहान्**" इति। अत्र "हाहा" शब्दोत्तरं शसि आनीते शस्येत्त्वेन लोपे "हाहा अस् इत्यवस्थायां पूर्वसवर्णदीर्घे कृते "तस्माच्छसो नः पुंसि" इति सूत्रेण नत्वम्। "हाहा" शब्दो हि गन्धर्वविशेषस्य वाचकमव्युत्पन्नं प्रातिपदिकम् "हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्" इत्यमरः। सूत्रे "धातो" रिति पदं न स्यात्तर्हि आदन्तभस्याङ्गत्वादत्रापि आकारलोपे शसि "हाहः" इत्यानिष्टं रूपं स्यात् तन्माभूदिति उक्तपदनिवेशः। टायां सवर्णदीर्घः। **हाहा**। ङे वृद्धिः। **हाहै**। ङसिङसोर्दीर्घः। **हाहाः**। ओसि वृद्धिः। **हाहौः**। ङौ आद्गुणः। **हाहे**। शेषं विश्वपावत्। केचित्तु—"हा" इति शब्दं जहातीति क्विपि "हाहाः" इति साधयन्ति तन्मते तु सर्वोऽपि प्रक्रिया विश्वपावत् ज्ञेया। "क्त्वा" "श्ना" प्रत्ययौ आकारान्तौ अनयोः साधनमपि विश्वपावत्। अधातुत्वेऽपि अनयोः सिद्धिप्रकारं दर्शयितुयाह— "**आत इति योगविभागात्**" इति। "आतो धातोः" इत्यत्र "आतः" इति विभज्यते तेन "आकारान्तस्य भस्याङ्गस्य लोपः स्यात्" इत्यर्थः"। ततो "धातोः" इति योगान्तरम् "आतः" इत्यनुवर्त्तते—"आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्या"दित्यर्थः। द्वितीययोगस्य आबन्तव्यावृत्तिः हाहादिशब्दव्यावृत्तिश्च फलम्। एवमनया रीत्या "क्त्वो ल्यप्" "हलः श्नः" इत्यादिनिर्देशो नाऽनुपपन्नः। अधिकं **शब्देन्दुशेखरादौ**। इत्यादन्ताः।

**हरिः। हरी॥ जसि च ७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः। हरयः॥ ह्रस्वस्य गुणः ।७।३।१०८। सम्बुद्धौ। हे हरे। हरिम। हरी हरीन्॥ शेषो घ्यऽसखि ।१।४।७। शेष इति स्पष्टार्थम्। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात्॥ आङो नाऽस्त्रियाम् ।७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम। आङिति टासंज्ञा प्राचाम। हरिणा। *हरिभ्याम ३। हरिभिः। घेर्ङिति। ७।३।१११। घिसंज्ञस्य ङिति सुपि गुणः॥ हरये॥ हरिभ्यः २। गुणे कृते। ङसिङसोश्च ।६।१।११०। एङो ङसिङसोरति परे पूर्वरूपमे-**

**कादेशः। हरेः। हर्योः। हरीणाम्॥ अच्च घेः।७।३।११९। इदुद्भ्यां परस्य ङेरौत्घेरत्। हरौ। हरिषु। एवं कव्यादयः॥**

अथ इकारान्ताः शब्दा निरूप्यन्ते। *हरिः इति। इकारान्तेषु हरिशब्दस्य प्रथमाया एकवचने रूपमिदम्। हरिशब्दात् सुप्रत्यये स्थापिते उकारस्येत्सञ्ज्ञायां, तस्य लोपे, सस्य रुत्वे, रस्य विसर्गे च कृते "**हरिः**" इति। एवं हरिशब्दात् प्रथमाद्विवचनविवक्षायां "हरि औ" इति स्थिते "प्रथमयोः" इति पूर्वसवर्णदीर्घे **हरी**। "हरि जस्" इति स्थिते "चुटू" इति जस्येत्त्वे, लोपे च "हरि अस्" इत्यवस्थायां सकारस्य "न विभक्तौ"–इत्यनेनेत्सञ्ज्ञानिषेधे "प्रथमयोः"–इति पूर्वसवर्णदीर्घादेशे प्राप्ते तद्बाधकं सूत्रं प्राप्नोति—**जसि च** इति। अत्र 'ह्रस्वस्य गुणः' इत्यनुवर्त्तते, अङ्गस्येत्यधिकृतं ह्रस्वेन विशेष्यते, विशेषणत्वाच्च तदन्तविधिरिति मत्वा व्याख्याति—**ह्रस्वान्तस्य०** इति। अनेन सर्वस्य "हरि" इत्याकारकस्याङ्गस्य गुणप्राप्तौ सत्यां अलोऽन्त्यपरिभाषया अन्त्यस्य इकारमात्रस्यैव तालुस्थानसाम्यादेकाररूपो **गुणः**। ततः "हरे अस्" इति जाते "एचोऽयवा"—इत्यनेन अयादेशे रेफयकारयोर्यथायोगं परयोगे कृते, रुत्वे, रस्य विसर्गे च "**हरयः**" इति ज्ञेयम्। हरिशब्दस्य सम्बुद्धौ प्रयोगं साधयितुमाह–'**ह्रस्वस्य**'–इति "सम्बुद्धौ च" इत्यतः सम्बुद्धौ इत्यनुवर्त्य संक्षेपेण व्याचष्टे **सम्बुद्धौ** इति। ह्रस्वस्य गुणः स्यात्सम्बुद्धावित्यर्थः। "हे हरि स्" इत्यवस्थायां, अनेन रेफादिकारस्य एकारे गुणे जाते "एङ्ह्रस्वात्"—(६।१।६९) इति सूत्रेण सम्बुद्धिलोपः। "**हे हरे**" इति रूपम्। **हे हरी। हे हरयः**। द्वितीयैकवचनविवक्षायां "हरि अम्" इति स्थिते "अमि पूर्वः" (६।१।१०७) इत्यनेन पूर्वरूपैकादेशे **हरिम्**। **हरी** इति प्रथमाद्विवचनवत्। "हरि शस्" इति स्थिते "लशक्व"–इति शस्येत्त्वे तस्य लोपे "प्रथमयोः"—इति पूर्वसवर्णदीर्घादेशे "तस्माच्छसो नः"—इति शसः सस्य नत्वे **हरीन्**। हरिशब्दात् तृतीयैकवचने "हरि टा" इति स्थिते "चुटू" इति टस्येत्त्वे, तस्य लोपे "हरि आ" इत्यवस्थायां सूत्रं प्राप्नोति—**शेषो घ्यसखि** इति। 'यू स्त्र्याख्यौ—इत्यतः "यू" इति वर्त्तते। इश्च उश्च यू इति द्वन्द्वः इवर्ण उवर्ण इत्यर्थः। ङिति ह्रस्वश्च" (१।४।६) इत्यतो ह्रस्व इत्यनुवर्त्य यूभ्यां प्रत्येकमन्वयनीयम्। उक्तान्नदीसंज्ञकादन्यः शेषः अर्थात् ह्रस्वमिवर्णोवर्णान्तं यन्न स्त्र्याख्यम्, स्त्र्याख्यञ्च यन्न नदीसञ्ज्ञकं सः (प्रकृते) शेषपदार्थः। स शेषः प्रत्येकं यूभ्यामन्वेति, शब्दस्वरूपमध्याहृत्य यूभ्यां विशेष्यते विशेषणत्वाच्च तदन्तविधिरिति सर्वं मत्वा व्याकरोति—**अनदीसञ्ज्ञौ**—इति। **तदन्त-**

---

*हृञ् हरणे। अस्माद्धातोः "**अच इः**" (उ० ४।१३९) इति सूत्रेण इ प्रत्ययः। हरति पापानि इति "हरिः" अयं शब्दोऽनेकार्थः। तथाहि—

अर्कमर्कटमण्डूकविष्णुवासववायवः। तुरङ्गसिंहशीतांशुयमाश्च हरयो दश॥ इति।

दशेति सङ्ख्यानमात्रं नतु नियमः "वाच्यवत् पिङ्गहरितो" रिति मेदिन्युक्तेः।

**मिति** अनुवृत्तयूभ्यां शेषपदार्थस्य विशेषणात्तदन्तलाभ इत्यर्थः । शेष इति किम् । मत्यै । शेषग्रहणाभावेऽपि मत्यै इत्यत्र न घिसंज्ञा "आकडारादेका सञ्ज्ञा" इत्यनवकाशया नदीसञ्ज्ञया बाधात् इत्यत आह—**शेष इति स्पष्टार्थम्** इति । ह्रस्वौ किम् । वातप्रम्ये। यू इति किम् । मात्रे । घिसञ्ज्ञाप्रदेशमाह—**आङो नाऽस्त्रियाम्।** "अच घेः" इत्यतो घेरित्यनुवर्त्त्य व्याचष्टे—**घेः परस्य**—इति । आङो विहितो नाभावः टाइत्यस्य कथं स्यादिति शङ्कां वारयति--**आङिति** । प्राचाम्=व्याकरणाचार्याणाम् । एवञ्च--"हरि आ" इति स्थिते "शेषोऽध्यसखि" इति सूत्रेण हरिशब्दस्य घिसञ्ज्ञायां सत्याम् "आङो ना"—इत्यनेन टाया आस्थाने "ना" इत्यादेशे । कृते "अट् कुप्वाङ्"-इति नस्य णत्वे विहिते सिद्धं भवति "**हरिणा**" इति । अस्त्रियाम किम् । मत्या । **हरिभ्याम, हरिभिः** । भ्यामि भिसि च न विशेषं कार्यमित्यर्थः । चतुर्थ्येकवचनं साधयितुमाह—**घेर्ङिति** । "सुपि च" इत्यतः सुपि "ह्रस्वस्य गुणः" इत्यतो गुण इत्यनुवर्त्त्य व्याख्याति—**घिसञ्ज्ञकस्य**—इति । हरिशब्दात् चतुर्थ्येकवचने "हरि ङे" इति स्थिते "लशक्व"—इति ङस्य इत्वे तस्य लोपे "शेषोऽध्य"—इति सूत्रेण हरिशब्दस्य घिसञ्ज्ञायां कृतायां "घेर्ङिति" इति इकारस्य एकारे गुणे विहिते "एचोऽयवा"-इति एकारस्य अयादेशे परयोगे च कृते **हरये। हरिभ्याम्। हरिभ्यः** । घेः किम् । सख्ये । ङिति किम् । हरिभ्याम । * सुपि किम् । पट्वी । हरिशब्दात् पञ्चम्येकवचने ङसिप्रत्यये स्थापिते ङस्य इकारस्य च यथायोगमित्त्वे तस्यलोपे "हरि अस्" इति स्थिते "घेर्ङिति" इत्यनेन गुणे जाते "हरे अस्" इति स्थिते सूत्रमाह—**ङसिङसोश्च।** "एङः पदान्तादति" इत्यतः एङ इति अति इति चानुवर्तते । "अमि पूर्वः" इत्यतः पूर्व इति च । "एकः पूर्वपरयोः" इत्यधिकृतमेव तदाचष्टे—**एङो ङसि**—इति । एवमनेन पूर्वरूपैकादेशे सस्य रुत्वे, रस्य विसर्गे च "**हरेः**" इति। **हरिभ्याम । हरिभ्यः।** षष्ठ्येकवचने—**हरेः** । पञ्चम्येकवचनवत् प्रक्रिया । "हरि ओस्" इति स्थिते "इको यणचि" इति यणादेशे, रुत्वे, रस्य विसर्गे च **हर्योः** । हरिशब्दात् षष्ठीबहुवचने "हरि आम्" इति स्थिते "ह्रस्वनद्यापः"—इति नुटि, टटो लोपे "नामि" इति दीर्घे "अट्कुप्वाङ्"—इति नस्य णत्वे **हरीणाम** । सप्तम्येकवचनविवक्षायाम "हरि ङि" इति स्थापिते ङस्येत्त्वेन लोपे "घेर्ङिति" इति गुणे प्राप्ते सूत्रमाह—**अच्च घेः** । "ङे राम्"—इत्यतो ङे इति "इदुद्भ्याम्" (७।३।११७) "औत्" (७।३।११८) इति च सूत्रमनुवर्त्तते तदाचष्टे—**इदुद्भ्याम्** इति । तदनेन

* **पट्वीति** । पटुशब्दात् स्त्रियां "वोतो गुणवचनात्" (४।१।४४) इति ङीष् । तस्य ङित्त्वेऽपि सुप्त्वाभावात् तस्मिन्परतो न गुण इत्यर्थः । "सुपि" इत्यनुक्तेऽत्रापि स्यादिति भावः ।

सूत्रेण ङि इत्यस्य "औत्" इत्यादेशः, घिसञ्ज्ञकस्य हरिशब्दस्य अत् इत्यादेशः, अलोन्त्य-परिभाषया अन्त्यस्य इकारस्य अत् । "हर औ" इति स्थिते "वृद्धिरेचि" इति वृद्धौ **हरौ** इति सिद्धम् । **हर्योः** । पूर्ववत् । "हरि सु" इति स्थिते "आदेशप्रत्यययोः" इति षत्वम् । **हरिषु** । **एवं कव्यादयः** इति । सर्वेऽपि इकारान्ताः पुंल्लिङ्गाः हरि-शब्दवज्ज्ञेया इत्यर्थः । आदिशब्देन ध्वनि-मुनि-कलि-वलि-केलि-क्रिमि-कपि-वह्नि-वृष्ण्यग्निप्रभृतयः ।

**अनङ् सौ** ।७।१।९३। सख्युरङ्गस्याऽनङादेशोऽसंबुद्धौ सौ ॥ **अलोऽन्त्यात्पूर्व उपधा** ।१।१।६५। अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् । **सर्वनामस्थाने चासम्बुद्धौ** ६।४।८। नान्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल्प्रत्ययः** ।१।२।४१ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** । ६ । १ । ६८ । हलन्तात्परं दीर्घौ यौ ङ्याबौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ॥ **प्रत्ययलोपे प्रत्ययलक्षणम्** । १ । १ । ६२। प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । **नलोपः प्रातिपदिकान्तस्य** ८।२।७। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा । हे सखे । **सख्युरसम्बुद्धौ** ७। १। ९२ । सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् **अचो ञ्णिति** ।७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञिति णिति च । सखायः । सखायौ । सखायं । सखीन् । सख्या । सखिभ्याम् । सखिभिः सख्ये ॥ **ख्यत्यात्परस्य** ।६।१।११२। खितिशब्दाभ्यां खीतीशब्दा-भ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः २ ॥ **औत्** । ७ । ३ । ११८ । इतः परस्य ङेरौत् । सख्यौ । हरिवत् ॥

इकारान्तस्य सखिशब्दस्य विशेषमाह—**अनङ् सौ** । "सख्युरसम्बुद्धौ" इत्यनुवर्त्तते । "अङ्गस्य" इत्यधिकृतम् तदाचष्टे—**सख्युरङ्गस्य**—इति । सौ इति प्रथमैकवचनम् "असम्बुद्धौ" इति पर्युदासात् । उपधाकार्यं वक्ष्यन् उपधासञ्ज्ञामाह—**अलोन्त्यात्** । अल इति पञ्चमी "अन्त्यात्" इत्यनेन विशेषणीया । अल्प्रत्याहारो वर्णपर्यायः । "पूर्व" इति पदेनापि अलेव गृह्यते साजात्यात् तदाचष्टे—**अन्त्यादलः**—इति । अलः किम् । शिष्टः, शिष्टवान् इत्यादौ अन्त्यात् संघातात् पूर्वस्य शकारस्य माभूत् । सत्यां हीत्सञ्ज्ञायां "शास इदङ्हलोः" ६।४।३४) इति शस्येत्वं स्यात्, नचालोन्त्य-परिभाषया आकारस्यैव इकारो भविष्यतीति वाच्यम् । "नानर्थकेऽलोन्त्यविधिः"—इति

तन्निषेधात् । अत्रोदाहरणानि—पच् । अकारः । भिद् । इकारः । बुध् । उकारः । वृत् । ऋकारः **सर्वनामस्थाने०** । "नोपधायाः" (६।४।७) इति सूत्रमनुवर्त्तते । न इति लुप्तषष्ठीकं पदम् तेन "अङ्गस्य" इत्यवयवषष्ठ्यन्तं विशेष्यते, अतस्तदन्तविधिः । "ढ्रलोपे"—इत्यतो दीर्घ इत्यनुवर्त्तते तदिदं सर्वं मत्वा व्याख्याति—**नान्तस्योपधाया**—इति । सर्वनामस्थान इति किम् । राजनि । असम्बुद्धाविति किम् । हे राजन् । अपृक्तकार्थं वक्ष्यन् अपृक्तसञ्ज्ञामाह **—अपृक्तएकाल्०**। एकश्चासावल् इति एकाल् । कर्मधारयः । अत्र एकशब्दोऽसहाय-वाची । "एके मुख्यान्यकेवला" इत्यमरः । "एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्" इति सूत्रार्थः । अपृक्त इति पुंस्त्वमविवक्षितम् । अत एव "अपृक्तं हल्" इति सङ्गच्छते एकालिति किम् । दर्विः । जागृविः । "वेरपृक्तस्य" (६।१।६७) इति लोपो न । अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे संज्ञाविधानमदृष्टार्थमिति **शेखरकारः** । **हल्ङ्याब्भ्यो** । हल् च, ङी च, आप् चेति द्वन्द्वः । दिग्योगे पञ्चमी । दीर्घादिति ङ्यापोरेव विशेषणम् । नतु हलोऽपि, असम्भवात् । हल्ङ्याब्भ्य इत्यस्य सुतिस्याक्षिप्तप्रकृतिविशेषणतया प्रत्ययग्रहण-परिभाषया च तदन्तविधिः । एवं सति "हलन्ताच्च दीर्घङ्याबन्ताच्च परम्" इत्यर्थलाभः । सु ति सि इति समाहारद्वन्द्वः । अपृक्तम् इति हल् इत्यनयोः सामानाधिकरण्येनान्वयः । "लोपो व्योः"—इत्यतो लोप इति वर्त्तते । तदेतन्मत्वा व्याख्याति—"हलन्तात्परम्०" इति । तत्र-हलन्तात्सुलोपः राजा, तक्षा, उखास्रत्, पर्णध्वत् । ङ्यन्तात्—कुमारी, गौरी, शार्ङ्गरवी । आबन्तात्-खट्वा, बहुराजा, कारीष्यगन्ध्या । हलन्तादेव तिलोपः सिलोपश्च । तत्र तिलोपस्तावत्—अबिभर्भवान् । भृञो लङि तिपि श्लौ "भृञामित्" (७।४।७६) इत्यभ्यासस्येत्त्वम् । अजागर्भवान् । जागृधातोः लङि तिपि "इतश्च" (३।४।१००) इतीकारलोपे हल्ङ्यादिना तकारलोपे रेफस्य विसर्गः ) सिलोपः-*अभिनोऽत्र । अच्छि-नोऽत्र । दस्य रेफः । **हल्ङ्याब्भ्य** इति किम् । ग्रामणीः, सेनानीः । **दीर्घादिति** किम् । निष्कौशाम्बिः । अतिखट्वः । सुतिसीति किम् । अभैत्सीत् । तिपा सहचरि तस्य सिशब्दस्य सिचो ग्रहणं नास्ति । **अपृक्त**-इति किम् । भिनत्ति । छिनत्ति । **हलिति** किम् । बिभेद । **प्रथमहल्** किम् । राजा । न लोपादिर्न स्यात् । संयोगान्त लोपस्या सिद्धत्वात् ॥ **प्रत्ययलोपे०** । प्रत्ययो लक्षणं निमित्तं यस्य तत् प्रत्यय-

---

* **अभिनोऽत्रेति** । भिदिर् विदारणे । अस्मात् लङि सिपि श्नमि 'दश्च' (८।२।७५) (धातोः पदान्तस्य दस्य सिपि रुर्वा ) इति रुत्वविकल्पे रुत्वपक्षे अभिन र् स् इति स्थिते अनेन सिलोपे रस्य विसर्गे रूपम् । एवम्—"अच्छिनः" इत्यत्रापि । **ग्रामणी** रिति । ग्रामं नयतीति विग्रहः । णीञ् प्रापणे । "सत्सूद्विषद्रुहदुह"—(३।२।६१) इति क्विप् । "अग्रग्रामाभ्यां नयतेर्णो वाच्यः" इति वार्त्तिकेण णत्वम् । अत्र हल्ङ्यावन्तत्वाभावान्न सुलोपः । **निष्कौशाम्बिः** = निष्क्रान्तः

लक्षणम् । तदाश्रितम् = प्रत्ययाश्रितम् । स्थानिवद्भावेनैव सिद्धे अल्विध्यर्थमिदं सूत्रम् । यत्र प्रत्ययस्यासाधारणं रूपं प्रयोजकं तदेव कार्यं प्रत्ययलोपे सति भवतीति नियमार्थञ्चेति भाष्यादिषु स्पष्टम् । **नलोपः०** । "पदस्य" इति वर्त्तते । नेति प्रातिपदिकेति लुप्तषष्ठीके पदे सौत्रत्वात् । स्पष्टमन्यत् । **सखा** इति । अस्यायं साधनप्रकारः :—"सखि" शब्दस्य प्रातिपदिकसञ्ज्ञाया उत्तरं प्रथमैकवचनविवक्षायां "सखि स्" इति स्थिते "यस्मात्प्रत्ययविधिः"—इति सूत्रेण सखि इत्यस्याङ्गसञ्ज्ञायां सत्यां "अनङ् सौ" इति सूत्रेण सर्वस्याङ्गस्य अनङादेशः प्राप्तोऽपि "ङिच्च" इति योगेन अन्त्यस्य खकारोत्तरवर्त्तिन इकारस्यैव अनङादेशः । "सख् अनङ् स्" इति जातम् । ङस्येत्त्वे, तस्य लोपे, नकारोत्तरवर्त्तिन अकारस्यापि आनुनासिक्यप्रतिज्ञानात् इत्त्वे लोपे च सति "सख् अन् स्" इत्यवशिष्टे "अलोन्त्यात्"—इति सूत्रेण अन्त्यादलो नकारात् पूर्वस्य अकारस्य उपधासञ्ज्ञायां "सर्वनामस्थाने"—इति योगेन "सखन्" इति नान्तपदोपधासञ्ज्ञस्य खकारोत्तरवर्त्तिन अकारस्य दीर्घः । ततः "सखान् स्" इति स्थितिर्जाता । अथ—"अपृक्त एकाल्"—इत्यनेन प्रथमैकवचनस्य सस्य अपृक्तसञ्ज्ञायां "हल्ङ्याब्भ्यः"—इति अपृक्तहलः सस्य लोपे "सखान्" इति स्थितौ "न लोपः"—इति योगेन नस्य लोपे सिद्धं भवति **सखा** इति । हे ! **सखे** । सम्बुद्धे रूपमिदम् । सखिशब्दात् सम्बोधने सुप्रत्यये स्थापिते उकारस्येत्त्वे लोपे "हे सखि स्" इति स्थिते सम्बुद्धित्वात् अनङोऽभावे "ह्रस्वस्य गुणः" इतीकारस्य एकारे गुणे "एङ्ह्रस्वात्" – सुलोपे "हे सखे" इति सिद्ध्यति । अस्य—प्रथमाद्विवचने—"सखि औ" इति स्थिते णित्कार्यं वृद्धिं दर्शयन्

---

कौशाम्ब्याः, खट्वामतिक्रान्तः इति विग्रहे "निरादयः क्रान्ताद्यर्थे पञ्चम्या:" "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति वार्त्तिकाभ्यां यथायोगं समासः । "गोस्त्रियोरुपसर्जनस्य" (१।२।४८) इति ह्रस्वत्वम् । अत्र ङ्यापोर्ह्रस्वत्वान्न दीर्घत्वम् । "दीर्घात्" इत्यनुक्तावत्रापि प्राप्तिः स्यादिति भावः । **अभैत्सीदिति** । भिदेर्लुङि सिच् । अत्र तकारात् सकारस्य लोपो न । सुतिस्यन्यतमत्वाभावात् । ननु—सिचः सिरेवायमिति चेत् अत आह—**तिपेति** । "सहचरितासहचरितयोर्मध्ये"—इति परिभाषया विभक्तिरूपस्यैव सेर्ग्रहणं नतु आगमभूतस्य सिचोऽपीति भावः । **भिनत्तीति** । भिनद् ति इत्यवस्थायां हलन्तात्परस्यापि ति इति समुदायस्य न हल्त्वम्, यद्यपि तकारस्तेरवयवो हल् तथापि नासौ अपृक्तरूपः । उकार इकारे च लुप्ते परिशिष्टः सकारः तकारश्च सुति सि इत्यनेन गृह्यत इति तु परमार्थः । **बिभेद** = भिदेर्लिट् तिप् । अत्र णलः अकारस्य हल्त्वाभावान्न लोपः । **प्रथमहल्०** । राजन् स् इति स्थिते उपधादीर्घे संयोगान्तलोपेनैव "राजा" इति सिद्धेः प्रश्नः । उत्तरमाह—**संयोगान्तलोपस्यासिद्धत्वादिति** । हल्ङ्यादिलोपस्तु नासिद्धः षष्ठप्रथमपादस्थत्वादिति भावः । इति बा० मनोरमा ।

णिद्वद्भावं दर्शयति—**सख्युरसम्बुद्धौ** । सख्युरिति *दिग्योगे पञ्चमी । "अङ्गस्य" इत्यधिकृतं पञ्चम्या विपरिणमनीयम् । परमित्यध्याहार्यम् । "इतोऽत्सर्वनामस्थाने" (७।१।८६) इत्यतः सर्वनामस्थाने इत्यनुवर्त्य, असम्बुद्धावित्यभेदेनान्वीय, "गोतो णित्" (७।१।९०) इत्यतः णित् इति प्रथमान्तमादाय तत्सामानाधिकरण्यात् सप्तमीं प्रथमया प्रकल्प्य व्याख्याति—**सख्युरङ्गात्**—इति णिद्वत् = णित्कार्यकृदित्यर्थः । णिच्छब्दस्तत्कार्यातिदेशार्थः । **अचो ञ्णिति** । ञ् च ण् च ञ्णौ। तावितौ यस्य तत् ञ्णित् । "मृजेर्वृद्धिः" (७।२।११४) इत्यतो वृद्धिरित्यनुवर्त्तते । अङ्गस्येत्यधिकृतमचा—विशेष्यते, ततस्तदन्तविधिरिति मत्वा व्याचष्टे—**अजन्ताङ्गस्य**—इति । एवम्—"सखि औ" इति स्थिते "सख्युर"—इति सूत्रेण सर्वनामस्थानसञ्ज्ञस्य औ प्रत्ययस्य णिदतिदेशे कृते "अचो ञ्णिति" इति अजन्ताङ्गभूतस्य "सखि" शब्दस्य वृद्धौ प्राप्तायामलोऽन्त्यपरिभाषया आन्तर्यात् इकारस्य ऐकारो वृद्धिः, ततः "एचोऽयवा"—इत्यनेन आयादेशे विहिते यथायथं परयोगे च **सखायौ** इति सिद्धम् । एवमेव—प्रथमाबहुवचने "सखि अस्" इत्यवस्थायां पूर्ववत् णिद्वद्भावे, वृद्धौ, परयोगे, सस्य रुत्वे, रस्य विसर्गे च सति **सखायः** इति । हे **सखायौ** । हे **सखायः** । सखिशब्दात द्वितीयैकवचने "सखि अम्" इति स्थिते पूर्ववत् सर्वनामसंज्ञा, णिद्वद्भावः, वृद्धिः, आयादेशः । **सखायम** । **सखायौ** इति प्रथमाया द्विवचनवत् । सखिशब्दात द्वितीयाबहुवचने शसि समानीते "सखि शस्" इति स्थिते "लशक"—इति शस्येत्त्वे, तस्य लोपे "प्रथमयोः"—इति पूर्वसवर्णदीर्घे, "तस्माच्छसो नः"—इति शसः सस्य नत्वे **सखीन्** इति हरिशब्दवद्रूपम् । असर्वनामस्थानत्वात् णित्वाभावात् न वृद्धिः । सखिशब्दात् तृतीयैकवचने टा । टस्य "चुटू" इत्वे, तस्य लोपे "इको"—इति यणि परयोगे च कृते **सख्या** । घिसञ्ज्ञाभावात् अर्थात् "शेषोऽध्यसखि" इत्यत्र असखीति पर्युदासान्न तत्कार्यम् = घिसंज्ञाप्रयुक्तम् आङोनादिकार्यं नेत्यर्थः । एवं "सखि ए" इति स्थिते घित्वाभावात् "घेर्ङिति" इति प्राप्तो गुणो न, किन्तु यण् । **सख्ये** । **सखिभ्याम** । **सखिभ्यः** । एवम्—सखि शब्दात् पञ्चम्येकवचने "सखि अस्" इति स्थापिते घित्वाभावात् गुणाभावे पूर्ववत् यणि परयोगे च कृते "सख्यस्" इति जाते सूत्रं प्राप्नोति—**ख्यत्यात्परस्य** इति । खिखी इत्यनयोः तितीइत्यनयोश्च कृतयणादेशयोः ख्यत्य इति निर्देशः । यकारादकार उच्चारणार्थः । "एङः पदान्तात्" इत्यतः अति इत्यनुवर्त्तते, तस्य परस्येत्यनेनाभेदान्वयात् षष्ठीत्वेन विपरिणामः । "ङसिङसोश्च" इत्यतः ङसिङसोरनुवृत्तिः । अवयवषष्ठी चेयम् । अतो ङसिङसोरवयवस्येत्यर्थलाभो विवक्षितः । "ऋत उत्" इत्यतः उत्

* "अन्याराहितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" (२।३।२६) इति सूत्रेण ।

इत्यनुवर्त्तते तदिदं सर्वमभिप्रेत्य व्याख्याति--**खिति शब्दाभ्याम्**--इति। तदनेन सूत्रेण "सख्यस्" इत्यत्र यकारोत्तरवर्त्तिन अकारस्य उकारादेशे सस्य रुत्वे, रस्य विसर्गे च **सख्युः** इति रूपम्। **सखिभ्याम्. सखिभ्यः** इति चतुर्थीवत्। एवम्—षष्ठ्याम् **सख्युः। सख्योः। सखीनाम्।** सख्युरिति पञ्चम्येकवचनवत्। ओसि यणि रुत्वविसर्गौ हर्योरितिवत्। आमि "सखि आम्" इति स्थिते "ह्रस्वनद्यापो"--इति नुटि "नामि" इति दीर्घे **सखीनाम्** इति हरीणामितिवत्, किन्तु णत्वनिमित्ताभावादत्र णत्वं न। **औत्।** इदुद्भ्यामिति सूत्रात् "इत्" वर्त्तते "ङेराम्"--इत्यतो ङेरिति च तदाचष्टे—**इतः परस्य**--इति। सखिशब्दात् सप्तम्येकवचने "सखि इ" इति स्थिते घिसंज्ञाभावात् "अच्चघेः" इत्यस्य अप्राप्तौ अकः सवर्णदीर्घे प्राप्ते "औत्" इति सूत्रेण इकारात्परस्य ङेः औकारादेशः। "सखि औ" इति जाते, यणि, परयोगे च कृते **सख्यौ** इति सिद्धम्। **सख्योः। सखिषु। हरिवत्** इति। येषु विभक्तिवचनेषु न विशेषः तेषु हरिशब्दवत् प्रक्रिया ज्ञेयेत्यर्थः। तथाचास्माभिस्तानि रूपाण्यपि दर्शितान्येव।

**पतिः समास एव।१।४।८।** घिसंज्ञः। पत्या। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो नित्यं बहुवचनान्तः॥ **बहुगणवतुडति संख्या।१।१।२३।** **डति च।१।१।२५।** डत्यन्ता संख्या षट्संज्ञा स्यात्॥ **षड्भ्यो लुक् ७।१।२२** जश्शसोः। **प्रत्ययस्य लुक्श्लुलुपः।१।१।६१॥** लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्सञ्ज्ञं स्यात्। जसि चेति गुणे प्राप्ते। **न लुमताङ्गस्य।१।१।६३।** लुमताशब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्। कति २। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु। अस्मद्युष्मत्षट्संज्ञकास्त्रिषु सरूपाः *त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः। **त्रेस्त्रयः।७।१।५३।** आमि। त्रयाणाम्। त्रिषु। गौणत्वेऽपि। प्रियत्रयाणाम्। द्विशब्दोनित्यं द्विवचनान्तः। **त्यदादीनामः।७।२।१०२।** एषामकारो विभक्तौ। द्विपर्यन्तानामेवेष्टिः। द्वौ २ द्वाभ्याम् ३। द्वयोः २। द्विपर्यन्तानां किम्। भवान्। भवन्तौ।

पतिशब्देऽपि विशेषं दर्शयितुमाह—**पतिः समास एव**। "शेषोऽघ्यसखि" इत्यतो घि इत्यनुवर्त्त्याह—**घिसञ्ज्ञः** इति। **पत्या, पत्ये, पत्युः २ पत्यौ,** शेषं हरिवत्। एषु सर्वेषु यथालक्ष्यं घिसञ्ज्ञाभावान्नात्वाभावः गुणाभावश्च, किन्तु यणि सति

रूपाणि । "पत्यु"रित्यत्र तु "ख्यत्यात्परस्य" इत्युत्त्वम् । "पत्यौ" इत्यत्र घित्वाभावे सति "अच्च घेः" इत्यस्याप्रवृत्तौ "औत्" इति ङेरौत्त्वे यणि कृते रूपम् । आरम्भसामर्थ्यादेव नियमार्थत्वे सिद्धे एवकारस्तु—"पतिरेव समासे घि"रिति विपरीतनियमव्यावृत्त्यर्थः, तेन हरिणेत्यादि सिद्ध्यति । **समासे तु इति** । भूपतये, उपलक्षणमिदम् भूपतिना इत्याद्यपि । अर्थात् समासे सति पतिशब्दस्य सर्वासु विभक्तिषु सर्वेषु च वचनेषु हरिशब्दवत् प्रक्रिया ज्ञेया । * "सीतायाः पतये नमः" इत्यादित्वार्षम् । अथ बालबोधाय सर्वासु विभक्तिषु पतिशब्दस्य रूपाणि प्रदर्शयामः :—

† (प्र०) **पतिः । पती । पतयः ।** (द्वि०) **पतिम् । पती । पतीन् ।**
(तृ०) **पत्या । पतिभ्याम । पतिभिः ।** (च०) **पत्ये । पतिभ्याम् । पतिभ्यः ।**
(पं०) **पत्युः । पतिभ्याम । पतिभ्यः ।** (ष०) **पत्युः । पत्योः । पतीनाम् ।**
(स०) **पत्यौ । पत्योः । पतिषु ।** (सं०) **हे पते । हे पती । हे पतयः ।**

"कति" शब्दे विशेषं दर्शयति—**कतिशब्दो नित्यमिति** । का सङ्ख्या येषां ते **कति** । "किमः सङ्ख्यापरिमाणे डति च" (५ । २ । ४१) इति डतौ (प्रत्यये) डित्वाट्टिलोपः । बहुत्वसङ्ख्यावच्छिन्नसङ्ख्येयविषयप्रश्न एव "कति" इति भाष्ये स्पष्टत्वात् नित्यं बहुवचनान्तोऽयमिति भावः । षट्सङ्ख्याकार्यं वक्ष्यन् तदुपयोगिनीं सङ्ख्यासञ्ज्ञामाह **बहुगणवतुडति०** । बहुश्च, गणश्च, वतुश्च, डतिश्च इति समाहारद्वन्द्वः । एतत् सङ्ख्यासञ्ज्ञं भवतीत्यर्थः । उदाहरणानि—बहुकृत्वः । बहुधा । बहुकः । बहुशः ।

---

* इदन्तु बोध्यम्—'कृष्णस्य सखिरर्जुनः" इत्यादि भारतम् "क्लीबे च पतिते पतौ" इत्यादि स्मार्त्तवाक्यम् "पतिना नीयमानायाः पुरः शुक्रो न दुष्यति" इत्यादि ज्यौतिषम्, "सखिना वानरेन्द्रेण" इत्यादि रामायणम् इति, अनन्तपारस्य शब्दार्णवस्य अभियुक्तप्रयुक्तसकलप्रयोगाणां व्याकरणसाधुतानियमस्यानपन्हवनात् । नहि परिमिता एव शब्दाः सन्तीति बोधयितुं व्याकरणं प्रवृत्तम् अपि तु साधुशब्दमार्गप्रदर्शनार्थम् । अनेकानि च व्याकरणानि, ये प्रयोगा एकत्राऽसिद्धा इव ते ऽन्यत्र प्रसिद्धाः सन्ति । आर्षत्वादिकथनञ्च तेषां सन्मूलत्वमावेदयति, नतु ऋषिभिन्नैर्व्यवहारानर्हत्वं नियमयति । "सर्वे विधयः छन्दसि विकल्प्यन्ते" इति । "अनड्सौ" इत्यनडो वैकल्पिकत्वेन तादृश प्रयोगसाधुता पाणिनीयैरेत्यादि तु श्रद्धामात्रभावं न वारयामः । किन्तु सामान्यविशेषयो र्बाध्यबाधकभावचिन्तायां "क्वचिद्विशेषेण सामान्यो न बाध्यत" इति नियमेनापि सर्वत्र निर्वाहे "अकृतचतुर्थीकर्मे" इत्याद्युत्तरपदलोपनिर्वाहाय शाकपार्थिवानुसरणं वृद्धेभ्य एव रोचते । † "पातेर्डतिः" (उ० ४ । ५७) इति सूत्रेण रक्षणार्थकात् पा (अदा० प० अ०) धातोः डतिप्रत्यये डित्वाट्टिलोपः । पाति रक्षतीति **पतिः** । "धवः प्रियः पतिर्भर्त्ता" इत्यमरः ।

गणकृत्वः । गणधा । गणशः । तावत्कृत्वः । तावद्धा । तावच्छः । कतिकृत्वः । कतिधा । कतिकः । कतिशः । इदन्तु बोध्यम्—बहुगणशब्दयोर्वैपुल्ये सङ्घे च वर्त्तमानयोरिह ग्रहणं नास्ति, सङ्ख्यावाचिनोरेव । भूयादीनां निवृत्त्यर्थं सङ्ख्यासञ्ज्ञा विधीयते, सङ्ख्यायते अनयेत्यन्वर्थसंज्ञाविज्ञानात् । डतिरपि "किमः सङ्ख्या"—इति विहितस्तद्धित एव गृह्यते साहचर्यात् नतु "पतेर्डतिः" इति विहितोऽपि । यद्यपि "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" तथापि इह वतुडत्योः केवलयोः संज्ञाविधौ फलाभावात् अन्वर्थतावलाच्च तदन्तयोरेव संज्ञा प्रवर्त्तते । सानुबन्धनिर्देशस्तु—ब्राह्मणवद्वसतिरित्यादावतिप्रसङ्गशङ्कां निराकर्त्तुमित्याहुः । **डति च** । "डति" इत्यविभक्तिको निर्देशः । प्रत्ययत्वात् तदन्तग्रहणम् । पूर्वसूत्रात् सङ्ख्या इति, "ष्णान्ताः षट्" (१।१।२४) इत्यतः षट् इति चानुवर्त्तते तदाचष्टे—**डत्यन्ता**—इति । सङ्ख्येति किम् । पतयः । **षड्भ्योलुक्** । "जश्शसो" रित्यनुवर्त्तते । स्पष्टम् । **प्रत्ययस्य०** । "अदर्शनं लोपः" इत्यतो ऽदर्शनमित्यनुवर्त्तते । प्रत्ययस्यादर्शनं लुक्श्लुलुप्संज्ञं स्यादित्यर्थः । अनेकसंज्ञाविज्ञानाच्च तद्भावितग्रहणमिह विज्ञायते । लुक्संज्ञाभावितं प्रत्ययादर्शनं लुक्संज्ञम्, श्लुसञ्ज्ञाभावितं श्लुसञ्ज्ञम्, लुप्संज्ञाभावितं लुप्सञ्ज्ञं भवति । तेन संज्ञानां सङ्करो न । विधिप्रदेशेषु च भाविनी सञ्ज्ञा विज्ञायते । सति तु सञ्ज्ञासङ्करे "हन्ति" इत्यत्र शब्लुक्, "श्लौ" (६।१।१०) इति द्वित्वञ्च स्यात् । "जुहोति" इत्यत्र श्लौ सति "उतो वृद्धिर्लुकि हलि" (७।३।७६) इति वृद्धिः स्यादिति दिक् । **जसि चेति०** । "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रेण लुप्तं प्रत्ययमाश्रित्य "जसि च" इति सूत्रेण गुणे प्राप्ते सतीत्यर्थः । **न लुमताङ्गस्य** । "प्रत्ययलोपे"—इति सर्वं सूत्रमनुवर्त्तते । लु इत्येकदेशोऽस्यास्तीति लुमान्=पूर्वोक्तः लुक्श्लुलुप्शब्दः । तेन शब्देन प्रत्ययलोपे विहिते सति प्रत्ययनिमित्तकमङ्गकार्यं न स्यादित्याभिप्रेत्य व्याख्याति—"**लुमताशब्देन**" इति । लुमतेति किम् । कार्यते, हार्यते । अत्र "णेरनिटि" (६।४।५१) इति णिजपेक्षया वृद्धिर्भवत्येव । अङ्गस्येति किम् । पञ्च, सप्त कतीत्यादौ प्रत्ययान्तकार्यं सुप्तिङन्तमिति पदसञ्ज्ञा यथा स्यात् । **कति** इति । अस्यायं साधनप्रकारः—"कति" शब्दात् प्रथमाबहुवचने जस्यानीते "कति जस्" इति स्थिते "बहुगण"—इति सूत्रेण सङ्ख्यासञ्ज्ञां विधाय "डति च" इति षट्संज्ञां कृत्वा "षड्भ्योलुक्" इति जसो लुक् । लुक् च प्रत्ययादर्शनमेव । **कति** इति लुप्तेऽपि जसि "प्रत्ययलोपे"—इति सूत्रेण लुप्तं जसं प्रत्ययमाश्रित्य "जसि च" इत्येनेन इकारस्य एकारगुणे प्राप्ते "न लुमताङ्गस्य" इति सूत्रेण जसि लुका लुप्ते प्रत्ययलक्षणाभावात् तन्निमित्तो गुणो न भवति । एवमेव—शसि **कति** । अन्यानि सर्वाणि बहुवचने रूपाणि हरिशब्दवत् इति निगदेन दर्शयति **कतिभिः**" इत्यादि । एवमेव—या सङ्ख्यामानमेषां ते **यति** । सा सङ्ख्या मानमेषां ते **तति** । कतिवत् इति शाकटायन-मुग्धबोधादयः । **चान्द्रिकास्तु** "शेषा निपात्याः

कत्यादयः" इति सर्वमिष्टं साधयन्ति । "यति ते नाग ! शीर्षाणि तति ते नागवेदना" इत्युदाहरन्ति च । प्रसङ्गादाचष्टे—**अस्मद्युष्मदिति** । सरूपाः = समानानि रूपाणि येषां ते इति विग्रहः । लिङ्गविशेषबोधकटाबाद्यभावादिति भावः । त्रिशब्दे विशेषमाह—**त्रिशब्द** इति । "तरतेर्डि" ( ३ । ५ । ) डित्वाट्टिलोपः । तरन्ति एकं द्वौ वा इति त्रयः । त्रिशब्दात् ( त्रित्वावच्छिन्नसङ्ख्यायामेवानादिसङ्केतितात् ) प्रथमाबहुवचने जसि प्रत्यये "त्रि जस्" इति स्थिते जस्येत्त्वे, लोपे, जसि चेति गुणे, अयादेशे परयोगे **त्रयः** । एवम्—द्वितीयाबहुवचने "त्रि अस्" इति स्थिते "प्रथमयोः"—पूर्वसवर्णदीर्घे, शसः सस्य नत्वे **त्रीन** । स्पष्टमन्यत् । षष्ठीबहुवचने "त्रि आम्" इति स्थिते "ह्रस्व-नद्यापो"—इति नुटि, "नामि" इति दीर्घे, णत्वे त्रीणामिति प्राप्ते सति सूत्रमारभ्यते *****त्रेस्त्रयः** । "आमि सर्वनाम्नः" इत्यतः आमि इत्यनुवर्तते । तदाचष्टे—**त्रिशब्दस्य** इति "त्रि आम्" इत्यवस्थायां अनेकाल्त्वात् सर्वस्य त्रिशब्दस्य त्रयादेशः, ततो नुट्, दीर्घश्चेति सिद्धं भवति **त्रयाणाम** इति । **त्रिषु** । षत्वम् । **गौणत्वेपीति** । उपसर्जन त्वेपीत्यर्थः । स्वार्थपरित्यागे सति परार्थावलम्बनत्वं **गौणत्वम्** । तत्रापि त्रयादेशो भवतीत्यर्थः तदेतत् दर्शति—"**प्रियत्रयाणाम्**" इति । प्रियाः त्रयोयेषां ते प्रियत्रयः, तेषामित्यर्थः अयमाशयः—अस्मिन् अन्यपदार्थप्रधाने बहुव्रीहिसमासे त्रिशब्दस्य त्रित्वसङ्ख्यारूपो मुख्योऽर्थो नास्ति परार्थावलम्बनत्वात् । "त्रेस्त्रय" इति सूत्रे तु मुख्यार्थस्यैव त्रिशब्दस्य आमि त्रयादेशविधानम् तदत्र "प्रियत्रीणाम्" इति भाव्यम्, हरीणामिति यथा, यतो "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय" इति न्यायः । अर्थात् प्रकृते—त्रिसम्बन्धिन्यामि इत्यर्थविज्ञानात् गौणे त्रयादेशो न भवतीति ज्ञेयमिति **केचित्** । परं वस्तुतत्त्ववादिनो नैतदिच्छन्ति—यद्यपि इतरविशेषणत्वेनार्थोपस्थापकत्वमुपसर्जनरूपं गौणत्वम् तथापि बाधकवचनाभावादविशेषात् गौणत्वेऽपि त्रयादेशः, उपसर्जनत्वे ऽप्यस्थ्याद्यनङादेशवत् गौणमुख्यन्यायस्य च प्रकृते नैव प्रवृत्तिः तस्य पदकार्ये एव प्रवृत्तेः, अप्रसिद्धत्वरूपस्य

---

*त्रेरिति षष्ठी नतु सान्तम् "त्रिणां त्रयाणां गुणः" ( ७ । ४ । ६५ ) इति निर्देशात् इत्यभिप्रेत्याह मूले त्रिशब्दस्येति । "त्रेरयङ्" इति तु न सूत्रितम् । तत्करोति आचष्टे वा इत्यर्थे 'तत्करोति'—इति णिचि ततः क्विपि "प्रकृत्यैकाच"—इति प्रकृति-भावात् टिलोपाभावे "ह्रस्वस्य पिति"—इति तुकि त्रित् । ततो बहुत्वविवक्षायामामि कृते त्रेरयङि त्रयाणामिति रूपासिद्धेः । न च "वार्णादाङ्गं बलीयः" इति तुकः प्रागेवायं स्यादिति शङ्क्यम् । युगपत्प्रवृत्तावेवाङ्गस्य बलीयस्त्वादिति **ज्ञानेन्द्रस्वामी** । ननु—त्रिशब्दस्य बहुवचनान्तत्वात् कथं त्रेरितिचेत् सत्यम् । त्रिशब्दस्त्रित्वविशिष्टवाचको बहुवचनान्तः अयन्तु—( सूत्रस्थः ) न त्रित्वविशिष्टवाचकः किन्तु तदनुकरणेन गृहीतः अनुकार्यानुकरणयोश्चाभेदविवक्षाया इष्टत्वात् । प्रकृतिवदनुकरणमित्यस्य त्वनित्यत्वाम् ॥

गौणलाक्षणिकत्वरूपस्य वा गौणत्वस्योक्तपरिभाषायां ग्रहणम्, इतरविशेषणत्वेनोपसर्जनत्वं प्रकृते गौणत्वं नेष्टम्, अत एव "प्रियतिसा" इत्यादौ त्रिसादयो भाष्यकृताद हृताः । **इदमत्राकूतकम्**—तदन्तविधिसत्त्वात् त्रिशब्दस्य त्रिशब्दान्तस्य च त्रय देशो भविष्यति । द्विशब्दे विशेषमाचष्टे - **द्विशब्द** इति । एतस्य द्वित्वनियतत्वात् द्विवचनमेवेति भावः । "द्वि औ" इति स्थिते सूत्रमाह—**त्यदादीनामः** । त्यद् आदिर्येषामिति विग्रहः । "अष्टन आ विभक्तौ" (७।२।८४) इत्यतो विभक्तावित्यनुवर्त्तते **अकार** इति । अलोन्त्यपरिभाषावलात् अकारोन्त्यादेश इत्यर्थः । विभक्ताविति किम् । तद् । यद् । "स्वमोर्नपुंसकात्" (७।१।२३) इति सोर्लुकालुप्तत्वात् प्रत्ययलक्षणं न । "**द्विपर्यन्ताना०**" वार्त्तिकमिदम् । द्विपर्यन्तानामित्युक्तेरिह न भवति । भवान् । अन्यथा "भवत् सु" इति स्थिते तकारस्थाने अत्वे कृते "अतो गुणे" (६।१।९७) इति पररूपे "उगिदचाम्"–(७।१।७०) इति नुमि सति सर्वनामस्थाने इत्यनेन दीर्घे सुलोपे, नलोपे च सति "भवा" इति रूपं स्यात् । **भवन्ताविति** । पूर्ववत्तकारस्य अत्वे पररूपे नुमि, दीर्घे "भवानौ" इत्यनिष्टं रूपं स्यात, अतो द्विपर्यन्तानामेवात्वविधानमिति भावः ।

**पाति लोकमिति पपीः सूर्यः । पप्यौ । पप्यः । हे पपीः । पपीम । पपीन् । पप्या । पपीभ्याम ३ । पपीभिः । पप्ये । पपीभ्यः२ । पप्यः । पप्योः । पप्याम् । पपी । पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी । यूस्त्र्याख्यौ नदी । १ । ४ । ३ । इदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः ॥ प्रथमलिङ्गग्रहणं च । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेपि नदीत्वं वक्तव्यमित्यर्थः ॥ अम्बार्थनद्योर्ह्रस्वः । ७ । ३ । १०७ । अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ । हे बहुश्रेयसि । आण्नद्याः । ७ ३ । ११२ । नद्यन्तात्परेषां ङितामाडागमः ॥ आटश्च । ६ । १ । ९० । आटोचि परे वृद्धिरेकादेशः स्यात् ॥ बहुश्रेयस्यै ॥ बहुश्रेयस्याः । बहुश्रेयसीनाम । ङेराम्नद्याम्नीभ्यः । ७ । ३ । ११६ । नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेरामादेशः स्यात् । इह परत्वादाटा नुट् बाध्यते । बहुश्रेयस्याम ॥ शेषं पपीवत् ॥**

अथ ईदन्तप्रकरणम् । **पाति लोकमिति** । "यापेः कित्द्वे च" (उ०) इत्यौणादिक ईप्रत्ययः । कित्वात् "आतो लोप इटि च" इत्यालोपः । "ह्रस्वः" इति अभ्यासस्य ह्रस्वश्च । पपीशब्दस्य प्रातिपदिकसञ्ज्ञोत्तरं प्रथमाया एकवचन-

विवक्षायां सुप्रत्यये स्थापिते सकारोत्तरवर्त्युकारस्येत्त्वे, लोपे, सस्य रुत्वे, रेफस्य विसर्गे **पपीः**। पपी औ इति स्थिते "प्रथमयो"—रिति पूर्वसवर्णदीर्घे प्राप्ते "दीर्घाज्जसि च" इति तन्निषेधे "इको"—इति यणि **पप्यौ**। एवम्—**पप्यः**। हे ! **पपीः**। दीर्घान्तत्वात् "ह्रस्वस्य गुणः" इत्यस्य न प्राप्तिः। इत्यादि प्रथमावत्। द्वितीयैकवचने पपी अम् इति स्थिते "अमि पूर्वः" इति पूर्व रूपे **पपीम्**। "एरनेकाचः"—इति यण् तु न ईप्रत्ययान्तस्य धातुत्वाभावात्। **पप्यौ**। पपी शस् इति स्थिते शस्येत्त्वेन लोपे "प्रथमयो"—रिति पूर्वसवर्णदीर्घे "तस्माच्छसो"—इति सस्य नकारे **पपीन्** (तृ०) **पप्या**। घित्वाभावात् नाभावाऽभावे यणि रूपम्। **पपीभ्याम्**। **पपीभिः** (च०) **पप्ये**। **पपीभ्याम्**। **पपीभ्यः**। (पं) **पप्यः**। **पपीभ्याम्**। **पपीभ्यः**। (ष०) **पप्यः**। **पप्योः**। **पप्याम्**। (स०) **पपी**। **पप्योः**। **पपीषु**। इदन्तु बोध्यम्—घिसञ्ज्ञाभावात् ङेङसिङस्सु "घेर्ङिति" इति गुणो न। आमि दीर्घत्वान्नुडभावः, यणि रूपम्। ङे। तु "पपी ई" इति स्थिते परत्वाद्यणादेशं बाधित्वा सवर्णदीर्घे रूपम्। एवमेव—पुंसि ईकारान्तो "ययी"शब्दोऽपि। यान्त्यनेनेति ययीर्मार्गः। तदेतद्बोधयति—"**एवं वातप्रम्यादयः**" इत्यनेन। "वातप्रमीः" (उ० ४४१) इत्युणादिसूत्रेण माङः ईप्रत्ययः। वातं प्रमिमीते इति **वातप्रमीः**—शृङ्गरहितो मृगाकृतिर्जन्तुविशेषः। * मृगविशेष एवेत्यन्ये। पपीशब्दवत् सर्वा प्रक्रिया। एवं—देवयनीः। अतिलक्ष्मीः। ईकारान्तत्वात्। यदा तु—"माङ् माने" इत्यस्मात् धातोः कर्त्तरि क्विप्। "घुमास्थागापाजहातिसां हलि" (६।४।६६) इति ईत्वे सिद्धो वातप्रमीशब्दः तदा त्वमि शसि ङौ च विशेषः। **वातप्रम्यम्**। **वातप्रम्यः**। **वातप्रम्यि**। अत्र—अमि पूर्वरूपम्, शसि सवर्णदीर्घम्, ङौ सवर्णदीर्घं च बाधित्वा "एरनेकाचोऽसंयोगपूर्वस्य" (६।४।८२) इति वक्ष्यमाणो यण् †। ईकारान्तधातुत्वादिति तु हृदयम्। बहुश्रेयसी शब्दे विशेषं दर्शयितुमुपक्रमते—**बह्व्यः श्रेयस्यो यस्येति**। बह्व्य इति "बह्वादिभ्यश्च" इति ङीप्। श्रेयस्य इति "प्रशस्यस्यश्रः" इतीयसुमि श्रादेशः। अतिप्रशस्ता इत्यर्थः। "द्विवचनविभज्योपपदे" इति ईयसुन्। "उगितश्च" इति ङीप्। "स्त्रियाः पुंवत्" (६।३।३८) इति पुंस्त्वम्। "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वस्तु न "ईयसो बहुव्रीहेर्नेति वाच्यम्" इति वार्तिकनिषेधात्। "बहुश्रेयसी" शब्दस्य "कृत्तद्धितसमासाश्च" इति सूत्रेण प्रातिपदिकसञ्ज्ञायां प्रथमाया एकवचने "बहुश्रेयसी स्" इति स्थिते "हल्ङ्याब्भ्यः"—इति सूत्रेण दीर्घङ्यन्तत्वात्सुलोपः। **बहुश्रेयसी**। बहुश्रेयसी औ इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते "दीर्घाज्जसि च" इति तन्निषेधे यण्, सकारयकारयोः परयोगः। **बहुश्रेयस्यौ**।

---

* कस्तूरिकामृग इत्यर्थः। † उक्तञ्चाभियुक्तैः—शतृशानक्विबन्तानां क्तसन्तानां तथैव च। तृजन्तानाञ्च शब्दानां धातुत्वं नोपहन्यते॥

एवमेव जसि—**बहुश्रेयस्यः** । सम्बोधने—"हेबहुश्रेयसी स्" इत्यवस्थायां नदी कार्यं वक्ष्यन् प्रथमं नदीसञ्ज्ञामाह—**यूस्त्र्याख्यौ नदी** । ईश्च ऊश्च यू । व्याख्यानाद्दीर्घयोरेव ग्रहणम् । अविभक्तिकोयं निर्देश इत्येके । स्त्रियमाचक्षाते स्त्र्याख्यौ । मूलविभुजादित्वात् कः प्रत्ययः । स्त्र्याख्यौ इति अर्थबलात् शब्दौ एव । यू इति तद्विशेषणम् ततस्तदन्तविधिरिति मत्वाऽऽचष्टे "**इदूदन्तौ**"—इति । तत्र **ईदन्तम्**—कुमारी । गौरी । लक्ष्मीः । शार्ङ्गरवीः । **ऊदन्तम्**—ब्रह्मबन्धूः । यवागूः । यू किम् । मात्रे, दुहित्रे "आण्नद्याः" इत्याट् न भवति । स्त्र्याख्याविति किम् । वातप्रम्ये । नित्येति किम् । ग्रामण्ये । प्रकृते बहुश्रेयसीशब्दस्य स्त्रीत्वाभावात् कथं नदीसंज्ञेति शङ्कामपनुदन् वार्त्तिकमाह—**प्रथमलिङ्गग्रहणञ्च** इति । अस्यायमर्थः—प्रथमस्य समासादिवृत्तेः पूर्वं प्रवृत्तस्य स्त्रीलिङ्गस्य "यू स्त्र्याख्यौ" इत्यत्र ग्रहणं कर्त्तव्यमित्यर्थः । नन्वेवं सति समासादिवृत्त्यभावे गौर्यादिशब्दानां नदीसंज्ञा न स्यादित्याशङ्कां प्रत्याचक्षाण आह—**पूर्वस्त्र्याख्यस्येत्यादि** । समासादिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य शब्दस्य वृत्तिदशायां (समासावस्थायाम्) उपसर्जनत्वेन स्त्रीलिङ्गत्वाभावेऽपि नदीसंज्ञा वक्तव्येति वार्त्तिकाभिप्रायः । **अम्बार्थ०** । "सम्बुद्धौ च" इत्यतः सम्बुद्धौ इत्यनुवर्त्तनीयम् । * शेषं स्पष्टम् । एवम्—बहुश्रेयसीशब्दात् सम्बोधनैकवचने सुप्रत्यये स्थापिते उकारस्येत्त्वेन लोपे "यूस्त्र्याख्यौ"—इति सूत्रेण नदीसञ्ज्ञा । ततः सोः सम्बुद्धित्वात् "अम्बार्थ" इत्यनेन ह्रस्वत्वे "हे बहुश्रेयसि स्" इति स्थिते "एङ्ह्रस्वादि"ति सम्बुद्धिलोपे—**हे बहुश्रेयसि** । **हे बहुश्रेयस्यौ** । **हे बहुश्रेयस्यः** "बहुश्रेयसी अम्" इति स्थिते पूर्वसवर्णदीर्घादि बाधित्वा "अमि पूर्वः" इति पूर्वरूपैकादेशे **बहुश्रेयसीम्** । **बहुश्रेयस्यौ** । प्रथमाद्विवचनवत् । "बहुश्रेयसी शस्" इति स्थिते शस्येत्त्वे, लोपे "प्रथमयो"—रिति पूर्वसवर्णदीर्घैकादेशे "तस्माच्छसोनः"—इति शसः सस्य नकारे **बहुश्रेयसीन्** । (तृ) **बहुश्रेयस्या** । **बहुश्रेयसीभ्याम्** । **बहुश्रेयसीभिः** । टायां घित्वाभावात् नाभावो न । यणेव । बहुश्रेयसीशब्दात् चतुर्थ्येकवचने ङेप्रत्यये स्थापिते, ङस्येत्त्वेन लोपे "बहुश्रेयसी ए" इति स्थिते घिसञ्ज्ञाभावात् तत्कार्याभावे सति केवलं यणि प्राप्ते सूत्रमाह—**आण्नद्याः** । अङ्गस्येत्यधिकृतं पञ्चम्या परिवर्त्य नद्या इति पञ्चम्यन्तेन विशेषणीयम् । ततस्तदन्तविधिः "घेर्ङिति" इत्यतो ङिति इत्यनुवर्त्य तस्य षष्ठ्या विपरिणामनं कृत्वा सूत्रं व्याचष्टे—"**नद्यान्तात्**—इति । **आटश्च** । "इकोयणचि" इत्यतः अचि, "वृद्धिरेचि" इत्यतो वृद्धिरिति चानुवर्त्तते । "एकः पूर्वपरयो" रित्याधिकृतञ्च तदेवं व्याख्याति—**आटोऽचि**—इति । "बहुश्रेयसी ए" इत्येवं स्थिते प्राप्तं यणं बाधित्वा "आण्नद्याः" इति सूत्रेण "ङे" इत्यस्य ङिद्वचनत्वात् बहुश्रेयसीशब्दस्य नद्यन्तत्वात्

* अम्बा गौर्यादिशब्दानान्तु नदीत्वं व्यपदेशिवद्भावेन तदन्तत्वाद्बोध्यम् ।

आडागमः, सच टित्वात् "ए" इत्यस्याद्यवयवः। टस्येत्त्वेन लोपः। "बहुश्रेयसी आ ए" इति स्थितिर्जाता। ततः "आटश्च" इति सूत्रेण पूर्वपरयोः "आ ए" इत्यनयोः स्थाने वृद्धिरूपैकादेशः। सच भवन् द्वयोः स्थानिनोः स्थानसाम्यात् कण्ठ्य ऐकारादेश एव। "बहुश्रेयसी ऐ" इति जाते "इको"—इति यणि परयोगे च (च०) **बहुश्रेयस्यै** इति सिद्धम्। यद्यप्यत्र "वृद्धिरेचि" इति सूत्रेणापि वृद्धिकार्यं निर्वोढुं योग्यम् तथापि "ऐज्त" इत्याद्यर्थं सूत्रं न्याय्यत्वादिहोपन्यस्तम्। **बहुश्रेयसीभ्याम्।** **बहुश्रेयसीभ्यः।** ङसिङसोः "बहुश्रेयसी अस्" इति स्थिते नदीसञ्ज्ञा, आडागमः, आटश्चेति आकारो वृद्धिः, यण्, परयोगः इति प्रक्रिया। तदाह—(पं०) **बहुश्रेयस्याः** इति। बहुश्रेयसीभ्याम्। बहुश्रेयसीभ्यः। (ष०) **बहुश्रेयस्याः।** **बहुश्रेयस्योः।** "बहुश्रेयसी आम्" इति स्थिते "ह्रस्वनद्यापो"—इति नुटि, उटो लोपे, अञ्कीनस्य (नस्य) परयोगे—**बहुश्रेयसीनाम्**। सप्तम्येकवचने "बहुश्रेयसी इ" इति स्थिते घिसञ्ज्ञाभावात् तत्कार्याभावे सति "सवर्णं दीर्घे प्राप्ते सूत्रमारभ्यते"—**"ङेराम्नद्याम्नीभ्यः"** इति ङेरिति सप्तम्येकवचनस्य ग्रहणम्। अङ्गाधिकारत्वात् प्रत्ययग्रहणपरिभाषया च तदन्तविधिं मत्वा व्याचष्टे—**नद्यन्तादा**—इति। तदनेन सूत्रेण ङेरामादेशे "बहुश्रेयसी आम्" इति जाते "आण्नद्याः" इति ङिद्वचनत्वात् आडागमे "बहुश्रेयसी आ आम्" इत्यवस्थायाम् आटश्चेति वृद्धौ यणि—**बहुश्रेयस्याम्।** **बहुश्रेयस्योः।** **बहुश्रेयसीषु।** "आदेशप्रत्यययोः" इति सुपः सस्य षत्वम्। ननु—ङेरामादेशे कृते "ह्रस्वनद्यापो नुट्" इति नुटि कृते * यदागमन्यायेन नामोऽप्याम्ग्रहणेन पश्चात् आडागमः स्यात् इत्याशङ्कां वारयति—**इह परत्वादिति** "ह्रस्वनद्यापो" (७।१।५४) इति नुटो विधायकं सूत्रम् सप्तमाध्यायस्य प्रथमपादस्थम्, "आण्नद्याः" (७।३।११२) इति त्वस्यैव तृतीयाध्यायस्थमत इदं परं सूत्रम् "परविधिः पूर्वं विधिं बाधते" इति न्यायेन परत्वादाटा नुट् बाधितो भवति। नच कृतेप्याडागमे नुट् स्यादिति शङ्कनीयम् "सकृद्गतिप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति न्यायात्। **शेषमिति।** ईप्रत्ययान्तपपीशब्दवदित्यर्थः। एवं बहुप्रेयसीशब्दोऽपि।

**अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्। प्रधीः॥ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ। ६।४।७७। श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रूइत्येतस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥ एरनेकाचोऽसंयोगपूर्वस्य। ६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्त-**

* "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति परिभाषा।

स्थानेकाचोऽङ्गस्य यणजादौ प्रत्यये परे । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् ॥

गतिश्च । १ । ४ । ६० । प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । गतिकारकेतरपूर्वपदस्य यण् नेष्यते । शुद्धधियौ । शुद्धधियः ।

न भूसुधियोः । ६ । ४ । ८५ । एतयोरचि सुपि यण्न । सुधीः । सुधियौ । सुधियः । इत्यादि । सुखमिच्छतीति सुखीः । सुतीः । सुख्युः २ । सुत्युः २ । शेषं प्रधीवत् ।

अतिलक्ष्मीः । "लक्षेर्मुट् च" ( ३ । १६० ) इत्यौणादिकसूत्रेण लक्ष-धातोः ईप्रत्यये मुडागमे "लक्ष्मी" शब्दसिद्धिः । लक्षयति पश्यति नीतिमिति लक्ष्मीः । "लक्ष्मीः सम्पत्तिशोभयोः । ऋद्धयोषधौ च पद्मायां वृद्धिनामौषधेऽपि च" इति त्रिकाण्डशेषः । लक्ष्मीमतिक्रान्त इति अतिलक्ष्मीः । "अत्यादयः क्रान्ताद्यर्थे प्रथमया" इति समासः । स्त्रीप्रत्ययान्तत्वाभावान्नोपसर्जनह्रस्वः । अत्र न सुलोपः । अङ्यन्तत्वात् । शेषमिति । अन्यानि सर्वाणि रूपाणि * बहुश्रेयसीशब्दवज्ज्ञेयानीत्यर्थः । तथाहि—

( प्र० ) अतिलक्ष्मीः । अतिलक्ष्म्यौ । अतिलक्ष्म्यः ।

( द्वि० ) अतिलक्ष्मीम् । अतिलक्ष्म्यौ । अतिलक्ष्मीन् ।

( तृ० ) अतिलक्ष्म्या । अतिलक्ष्मीभ्याम् । अतिलक्ष्मीभिः ।

( च० ) अतिलक्ष्म्यै । अतिलक्ष्मीभ्याम् । अतिलक्ष्मीभ्यः ।

( पं० ) अतिलक्ष्म्याः । अतिलक्ष्मीभ्याम् । अतिलक्ष्मीभ्यः ।

( ष० ) अतिलक्ष्म्याः । अतिलक्ष्म्योः । † अतिलक्ष्मीनाम् ।

( स० ) अतिलक्ष्म्याम् । अतिलक्ष्म्योः । अतिलक्ष्मीषु ।

( सं० ) हे ! अतिलक्ष्मि । हे ! अतिलक्ष्म्यौ । हे ! अतिलक्ष्म्यः ।

अथ ईकारान्तः प्रधीशब्दः । प्रध्यायतीति प्रधीः । "ध्यायतेः सम्प्रसारणञ्च" इत्यनेन क्विप् । क्विपः सर्वापहारी लोपः । यकारस्य सम्प्रसारणमिकारः । "सम्प्रसारणाच्च" इति पूर्वरूपम् । "हलः" ( ६ । ४ । २ ) इति दीर्घः । कृदन्तत्वात् कृत्तद्धितेति प्रातिपदिकसञ्ज्ञायां सुबुत्पत्तिः । प्रथमाया एकवचने "प्रधी स्" इति स्थिते ङ्यन्तत्वाभावान्न सुलोपः । किन्तु—रुत्वे, रस्य विसर्गे च सति "प्रधीः" इति रूपम् । अजादौ सर्वत्र वक्ष्यमाणेन "एरनेकाचो"—इति सूत्रेण यणेव, स्त्रीत्वाभावाच्च नदी-

---

* अर्थात् प्रथमाया एकवचनं विहाय अन्यत्र विभक्तिषु अस्यापि बहुश्रेयसीवत् यथायोगं नदीसंज्ञातत्कार्यञ्च भवति ।

† नयन्तत्वात् "ह्रस्वनद्यापो"—इति नुट् ।

कार्यं नास्तीति सर्वं स्पष्टरूपेण बोधयितुं प्राप्तिक्रमेण सूत्रं व्याख्यातुमुपन्यस्यति—**अचिश्नुधातु०** । इश्च उश्च यू तयोर्य्वोः । इवर्णोवर्णयोरित्यर्थः । श्नुश्च धातुश्च भ्रूश्चेति द्वन्द्वः । प्रत्ययग्रहणपरिभाषया श्नुप्रत्ययान्तमित्यर्थः । * य्वोरिति धातोरेव विशेषणम् ततस्तदन्तविधिः । श्नुभ्रुवोस्तु न विशेषणम् नित्यमुवर्णान्तत्वात्, इवर्णान्तमपि न तद्विशेषणमसम्भवात् "सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्" इत्युक्तेः । अङ्गस्येत्यधिकृतम्, ततः "प्रत्यये परत" इति लब्धम्, अचीति तद्विशेषणम् सप्तम्यन्तत्वाच्च तदादिविधिः । इत्येवं सर्वमाकलय्य वृत्तिं रचयति—"श्नुप्रत्ययान्तस्य"—इत्यादि । † आन्तरतम्यात् एरियङ् । ओरुवङ् इति विवेकः । य्वोः किम् । चक्नुः । चक्रुः । अचीति किम् । आप्नुयात् । जुहुयात् । उक्तसूत्रस्य बाधकं सूत्रमवतारयति—**एरनेकाचो०** । "इणो यण्" इत्यतः यण् इति वर्त्तते एरिति षष्ठ्यन्तम् । इवर्णस्येत्यर्थः । पूर्वसूत्रात् धातोरिति पृथक्कृत्यानुवर्त्तनीयम् । तच्च "असंयोगपूर्वस्य" इत्यत्र संयोगांशे अन्वयनीयम् । धातुग्रहणञ्च—आकृत्या उभयोर्विशेषणं संयोगस्य अङ्गस्यचेति । एवमादि मत्वा व्याचष्टे—**धात्ववयवसंयोग**—इति । तदेवं प्रकृतेऽनेन सूत्रेण यणित्यर्थः । अनयोः सूत्रयोः प्रकृतलक्ष्ये योजनप्रकारः प्रदर्श्यते—तथाहि—"प्रधी औ" इति स्थिते सर्वतः प्रथमं "इकोयणचि" इत्यनेन यण्प्राप्तिः । ततः प्रथमयोः"—इत्यनेन पूर्वसवर्णदीर्घे प्राप्ते "अचिश्नुधातुभ्रुवां"—इत्यनेन 'प्रधी' इति इवर्णान्तधात्वङ्गस्य स्थानतः साम्यात् इयङ् प्राप्तः, ततस्तदपवाद-सूत्रं प्रवर्त्तते—"एरनेकाचो"—इति । कुतः—यतोऽत्र इवर्णः अधात्ववयवसंयोग-पूर्वः, तदन्तो धीधातुः, तदन्तमनेकाच्कमङ्गं प्रधीरूपम्, अत एतादृशस्य प्रधीरूपस्य अङ्गस्य अजादिप्रत्यये औकारे परे यणेव, सचालोन्त्यपरिभाषया अन्त्यस्य इकारस्य स्थान एव नतु सर्वस्य । एवम्—"प्रध् य् औ" इति स्थिते हलां परयोगे **प्रध्यौ** इति रूपम् । एष एव च सर्वत्राजादौ विभक्तौ सूत्रप्राप्तिक्रमेण यण्विधिः । ततश्च जसि—**प्रध्यः** । (२) प्रध्यम् । प्रध्यौ । प्रध्यः । (३) प्रध्या । प्रधीभ्याम् । प्रधीभिः (४) प्रध्ये । प्रधीभ्याम् प्रधीभ्यः । (५) प्रध्यः । प्रधीभ्याम् । प्रधीभ्यः । (६) प्रध्यः । प्रध्योः । प्रध्याम् । (७) प्रध्यि । प्रध्योः । प्रधीषु । (सं०) हे । प्रधीः । इत्यादि । **शेषं पपीवदिति** । "प्रधी" शब्दस्य क्विप्प्रत्ययान्तत्वेन धातुत्वम् । "पपी" शब्दस्य तु ईप्रत्ययान्तत्वेन धातुत्वाभाव इति स्वरूपेऽपि विशेषो बोध्यः । यण्कृतं विशेषं

---

* "य्वो"रिति धातोर्भिन्नवचनत्वेऽपि विशेषणं समानाधिकरणम् "वेदाः प्रमाणम्" इत्यादिवत् ।

† तालुस्थानिकस्य इवर्णस्य तादृश एव इयङ् । ओष्ठस्थानकस्य उवर्णस्य तादृश एव उवङित्यर्थः ।

विहाय अन्यासु विभक्तिषु समाना प्रक्रियेत्यर्थः । यदा तु प्रकृष्टा धीर्यस्य सः "प्रधी"-रिति समासः तदा अङ्यन्तत्वान्न सुलोपः । **प्रधीः** । धीशब्दस्य नित्यस्त्रीत्वात् नदीकार्यम् । एवं सति *बहुश्रेयसीशब्दवत् प्रक्रिया । किञ्च—कुमारीमिच्छन् कुमारीवाचरन् ब्राह्मणः **कुमारी** क्यजन्तादाचारक्विबन्ताद्वा कर्त्तरि क्विप् । "हल्ङ्याप्"—इति सुलोपः । अन्यत्र अजादौ विभक्तौ प्रधीशब्दवत्, इयङादेशप्राप्तौ "एरनेकाचो"—इति यणेव । **कुमार्यौ** । **कुमार्यः** । (२) कुमार्यम् । कुमार्यौ । कुमार्यः । (३) कुमार्या । कुमारीभ्याम् । कुमारीभिः । ङिद्वचनेषु नद्यन्तत्वादाडागमः । वृद्धिश्च । (४, कुमार्यै । कुमारीभ्याम् । कुमारीभ्यः । (५) कुमार्याः । कुमारीभ्याम् । कुमारीभ्यः । (६) कुमार्याः । कुमार्योः । † कुमारीणाम् । (७) कुमार्याम् । कुमार्योः । कुमारीषु । (सं) हे ! कुमारि । हे कुमार्यौ । हे कुमार्यः । **मूले**—एवं ग्रामणीरिति । प्रधीशब्दवदेव ग्रामणीशब्दः **ङौत्विति**--"ङे राम्नद्याम्नीभ्यः" इति आमादेशे विशेष इत्याह--**ग्रामण्याम्** इति । एवमेव—सेनानीशब्दोऽपि । 'सेनान्यादीनां वामो नुड् वक्तव्यः" सेनानीनाम् । सेनान्याम् इति **सारस्वताः** । **कौमाराश्चे**त्येके । **गतिश्च** । 'प्रादय' इति सूत्रमनुवर्त्तते । "उपसर्गाः"—इत्यतः क्रियायोगे इति च तदाचष्टे—**प्रादय** इति । "एरनेकाचो"—इति सूत्रस्थं "गतिकारकपूर्वपदस्यैवेष्यते" इति वार्त्तिकम् तद्भाष्यतात्पर्यतोऽर्थतः सङ्गृह्णाति—**गतिकारकेतरेति** । यथाश्रुते तु ‡ दर्शित-कुमारीशब्दे यणभावप्रसङ्गः स्यादिति भावः । **शुद्धधियाविति** । शुद्धा धीर्यस्येति विग्रहे शुद्धधीः । शुद्धधीशब्दात् प्रथमाद्विवचने "शुद्धधी औ" इति स्थिते—ईकारस्य यण् प्राप्तः, उक्तेन वार्त्तिकेन निषिद्ध्यते । तेन—इवर्णान्ताङ्गत्वात् "अचिश्नु"—इत्यनेन सर्वत्राजादौ विभक्तौ इयङ् । शुद्धधियौ । शुद्धधियः । शुद्ध-धियम् । शुद्धधियौ । शुद्धधियः । शुद्धधिया । शुद्धधीभ्याम् । शुद्धधीभिः । शुद्धधिये । शुद्धधीभ्याम् । शुद्धधीभ्यः । शुद्धधियः । शुद्धधीभ्याम । शुद्धधीभ्यः । शुद्धधियः । शुद्धधियोः । शुद्धधियाम । शुद्धधियि । शुद्धधियोः । शुद्धधीषु । हे शुद्धधीः । एङन्ताद्यभावान्न सुलोपः । यदा तु—शुद्धं ब्रह्म ध्यायतीति विग्रहः तदा कारकपूर्वकत्वात "एरनेकाचो"—इति सर्वत्राजादौ विभक्तौ यणेव-**शुद्धध्यौ** इत्यादि प्रधीवत् ।

---

* प्रधीः । प्रध्यौ । प्रध्यः । प्रधीम् । प्रध्यौ । प्रधीन् । प्रध्या । प्रधीभ्याम् । प्रधीभिः । प्रध्यै । प्रधीभ्याम् । प्रधीभ्यः । प्रध्याः । प्रधीभ्याम् । प्रधीभ्यः । प्रध्याः । प्रध्योः । प्रधीनाम । प्रध्याम् । प्रध्योः । प्रधीषु । हे प्रधि । हे प्रध्यौ । हे प्रध्यः ।

† "कुमारी आम्" इति स्थिते "ह्रस्वनद्यापो"—इति नद्यन्तत्वान्नुट् । सप्तम्येकवचने "ङेराम्"—नद्यन्तत्वादेव । सम्बुद्धौ "अम्बार्थनद्यो"—रिति ह्रस्वः ।

‡ कुमारीमिच्छन् ब्राह्मणः कुमारीतिशब्दे ।

परमाधीर्यस्येति विग्रहे **परमधीः । परमधियौ** इत्यादि । अत्रापि उक्तेन वार्त्तिकेण यण्निषेधः ।

सुष्ठु ध्यायति, सु शोभना धीर्यस्येति वा विग्रहे सुधीशब्दः । अत्र सर्वत्राजादौ विभक्तौ ' एरनेकाचो "—इति यणि प्राप्ते तदपवादसूत्रमारभ्यते—**न भूसुधियोः।** " इणो यण् " इत्यतो यण्, " ओः सुपि " इत्यतः सुपि, " इको यणचि " इत्यतः अचि, इति चानुवर्त्त्य व्याचष्टे—**एतयोरचि**—इति । * **सुधीः । सुधियौ । सुधियः** इत्यादि । अधस्तात् दर्शितशुद्धधीशब्दवत् । सूत्राणां प्राप्तिक्रमश्च यथासम्भवं पूर्वोक्तरीत्या बोध्यः । **सुतमिच्छतीति** । सुतमात्मन इच्छतीति विग्रहे " सुप आत्मनः क्यच् " ( ३ । १ । ८ ) इति सुतशब्दात् क्यचि कृते धात्ववयवत्वात् सुब्लुकि " क्यचि च " ( ७ । ४ । ३३ ) इति अकारस्य ईत्वे 'सुतीय' इत्यस्य "सनाद्यन्ताः" —इति धातुसञ्ज्ञायां लडादिः । सुतीयति । ततः सुतीयधातोः " क्विप् च "इति सूत्रेण क्विपि, अल्लोपयलोपौ । एवं सुतीशब्दः ईकारान्तः । तस्य प्रातिपदिकसञ्ज्ञायां प्रथमैकवचने सुतीः। अजादौ सर्वत्र यणेव । किन्तु ङसिङसोः परतः " ख्यत्यात्परस्य " इति सूत्रे दीर्घस्यापि ग्रहणादुकारः तदेतद्दर्शयति—**सुत्युरिति** । एवमेवसुखमात्मन इच्छतीत्यर्थे सुखीशब्दस्यापि । **सुख्युरित्याह** । शेषं प्रधीवत् । सर्वत्र ङसिङसौ वर्जयित्वा प्रधीशब्दवत् प्रक्रियेत्यर्थः । **इतीकारान्ताः** ।

**शंभुर्हरिवत्। एवं भान्वादयः। तृज्वत्क्रोष्टुः ७। १ ।९५। असंबुद्धौ सर्वनामस्थाने क्रोष्टुः इत्यस्य क्रोष्टृप्रयोक्तव्य इत्यर्थः। ऋतोऽङिसर्वनामस्थानयोः ७। ३। ११०। गुणः। इति प्राप्ते। ऋदुशनस्पुरुदंसोनेहसां च। ७। १। ९४। ऋदन्तानामुशन-**

---

* सुधीः । सुधियौ । सुधियः । सुधियम् । सुधियौ । सुधियः । सुधिया । सुधीभ्याम् । सुधीभिः । सुधिये । सुधीभ्याम् । सुधीभ्यः । सुधियः । सुधीभ्याम् । सुधीभ्यः । सुधियः । सुधियोः । सुधियाम् । सुधियि । सुधियोः । सुधीषु । सम्बोधने प्रथमावत् । एवं 'नी' शब्दोऽपि । तस्य अनेकाच इति पर्युदासात् यणन "अचिश्नु" —इतीयङेव । नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । नियौ । नियः । इत्यादि । सप्तम्येकवचने तु ङेराम् । **नियाम्** । **शाकटायनास्तु**— नीशब्दस्य सप्तम्येकवचनं **नियि** इति सिद्धम् । **न्यंशादाम्** ( १ । २ । २५ ) इति सूत्रेण ङिप्रत्ययस्य आम् न भवति । कस्मादिति चेत् क्रमसूत्रे ( सूत्रपाठे ) न्यंशादामिति पूर्वं सूत्रम् । **भ्रूहलश्नोश्नियुवौ** ( १ । २ । ४१ ) इति परसूत्रम् । तथाच परे कार्ये कर्त्तव्ये पूर्वमसद्वद् भवति इत्यामो निषेधो ज्ञातव्यं इत्याहुः ।

सादीनां चानङ् स्यादसंबुद्धौ सौ ॥ **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् । ६ । ४ । ११ ।** अबादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् । **विभाषा तृतीयादिष्वचि । ७ । १ । ९७ ।** तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । **ऋत उत् । ६ । १ । १११ ।** ऋतो ङसिङसोरति परे पूर्वपरयोरुदेकादेशो रपरः ॥ **रात्सस्य । ८ । २ । २४ ।** रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य ॥ रेफस्य विसर्गः । क्रोष्टुः २ । क्रोष्टोः २ । क्रोष्ट्वोः । **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ।** क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शंभुवत् ।

अथ उदन्तानाह—**शम्भुरिति । हरिवदिति ।** अस्य सर्वासु विभक्तिषु हरिशब्दवदेव साधनप्रकारो ज्ञेयः । किन्तु—पूर्वसवर्णदीर्घे ऊकारः, गुणस्तु ओकारः । अव् इत्यादयो विशेषा आन्तरतम्याद्बोध्याः । रूपाणि तु—शम्भुः । शम्भू । शम्भवः । शम्भुम् । शम्भू । शम्भून् । शम्भुना । शम्भुभ्याम् । शम्भुभिः । शम्भवे । शम्भुभ्याम् । शम्भुभ्यः । शम्भोः । शम्भुभ्याम् । शम्भुभ्यः । शम्भोः । शम्भ्वोः । शम्भूनाम् । शम्भौ । शम्भ्वोः । शम्भुषु । हे शम्भो । हे शम्भू । हे शम्भवः । **एवमिति ।** आदिपदेन बाहु-कारु-मेरु-साधु-गुरुप्रभृतयः । उकारान्तक्रोष्टुशब्दे विशेषं दर्शयति—**तृज्वत्क्रोष्टुः ।** "इतोऽत्सर्वनामस्थाने" इत्यतः सर्वनामस्थाने "सख्युरसम्बुद्धौ" इत्यतः सम्बुद्धौ इत्यनुवर्त्त्य व्याकरोति—"असम्बुद्धौ"—इति । रूपातिदेशोऽयम् । **ऋतो ङि० ।** "ह्रस्वस्य गुणः" इत्यतः गुण इत्यनुवर्त्तते, अङ्गस्येत्यधिकृतम्, ऋत इत्यनेन विशेषणीयम्, तेन तदन्तविधिरिति एवम्—"ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात्" इति सूत्रार्थः । **ऋदुशनस्पुरुदंसो० ।** "सख्युरसम्बुद्धौ" इत्यतः असम्बुद्धौ इत्यनुवर्त्तते, "अनङ् सौ" इत्यतोऽनङ् च । अङ्गस्येत्यधिकारः तत् ऋदादिभिर्विशेषणीयम् ततस्तदन्तविधिरित्याख्याति—**ऋदन्तानामिति । अप्तृन्० ।** "नोपधायाः" इत्यतः उपधायाः "सर्वनामस्थाने०" इत्यतः चकारवर्जं च सर्वमनुवर्त्तते तदेवं व्याख्याति—**अबादीनामिति ।** क्रोष्टु स् इति स्थिते "तृज्वत्क्रोष्टुः" इति सूत्रेण सर्वनामस्थानत्वात् तृज्वद्भावे कृते "क्रोष्टृ स्" इति जातम् । ततः—"ऋतो ङि" इत्यनेन अर्—गुणे प्राप्ते "ऋदुशनस्पु"—इत्यनेन तदपबाध्य सौ परे अनङादेशः, सचानेकाल्त्वात्सर्वस्य स्थाने प्राप्तोऽपि ङित्वाद् अन्त्यस्य ऋकारमात्रस्य स्थाने कृतः,

"क्रोष्ट् अनङ् स्" इति, ततः ङस्य नकारोत्तरवर्त्तिन अकारस्यचेत्त्वेन लोपे "क्रोष्ट् अन् स्" इत्यवस्थायां "हल्ङ्याब्भ्यः"—इत्यनेनापृक्तहलः सस्य लोपे "अप्तृन्नि"ति सूत्रेण * उपधादीर्घे "क्रोष्टान्" इति भूते, ततः "नलोपः"-इति नलोपे सिद्धम्—**क्रोष्टा** इति। एवम्—"क्रोष्टु औ" इति स्थिते तृज्वद्भावः। "ऋतो ङि"- इति अकारे गुणे रपरे "क्रोष्ट् अर् औ" इति, स्थिते एकदेशविकृतानन्यन्यायेन तृजन्तत्वात् अप्तृन्निति उपधादीर्घत्वे, परयोगे **क्रोष्टारौ**। एवमेव—"क्रोष्टु जस्" इति तृज्वद्भावादिः। **क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ**। "क्रोष्टु शस्" इति स्थिते शस्येत्त्वेन लोपे तृज्वद्भावस्तु न भवति असर्वनामस्थानत्वात्, किन्तु "प्रथमयोः"—इति पूर्वसवर्णदीर्घे "तस्माच्छसोनः"—इति शसः सस्य नत्वे † **क्रोष्टून्। विभाषा०**। तृज्वत्क्रोष्टुरित्यनुवर्त्तते, अचि इति तृतीयादिविभक्तिविशेषणम् सप्तम्यन्तत्वात् तदादिविधिरित्याह—**तृतीयादिष्विति** तृतीयैकवचने "क्रोष्टु आ" इति स्थितौ "विभाषा तृतीदिष्वचि" इति सूत्रेण अजादितृतीयादिविभक्तिपरत्वात् तृज्वद्भावविकल्पः। तृज्वद्भावपक्षे—"इकोयणचि" इत्यनेन यण्रेफः, परयोगः। **क्रोष्ट्रा**। पक्षे—"क्रोष्टु आ" इति घिसञ्ज्ञायां "आङो ना"—इत्यनेन टास्थाने नादेशे **क्रोष्टुना। क्रोष्टुभ्याम्। क्रोष्टुभिः**। * **क्रोष्ट्रे। क्रोष्टवे। क्रोष्टुभ्याम्। क्रोष्टुभ्यः**। ङसिङसोः परतः तृज्वद्भावपक्षे रूपं साधयितुं सूत्रमुपन्यस्यति—**ऋतउत्**। "एङः पदान्तादति" "ङसिङसोश्च" इत्यतः अति इति, ङसिङसोरिति चानुवर्त्त्य व्याख्याति—**ऋत इति। रपरः इति** ऋकारस्य अकारस्य च स्थाने जातस्य उकारस्य ऋकारस्थानिकत्वस्यानपायाद् "उरण्"-इति रपरत्वमिति भावः। **रात्सस्य**। "संयोगान्तलोप" इत्यनेनैव सिद्धे नियमार्थमेतत्। तेन "ऊर्क्" इत्यादौ न संयोगान्तलोपः। **रेफस्य विसर्ग** इति। 'खरवसानयोः"—इत्यनेनेत्यर्थः। साधनप्रकारश्चायम्—क्रोष्टुशब्दात् पञ्चमैकवचने ङसिप्रत्यये, ङादेरित्त्वेन लोपे "क्रोष्टु अस्" इति सति "विभाषा तृती०"- इत्यनेन तृज्वद्भावपक्षे "क्रोष्टृ अस्" इति जाते "ऋत उत्" इति सूत्रेण पूर्वपरयोर्द्वयोरचोः स्थाने

* यद्यपि—"सर्वनामस्थाने चाऽसम्बुद्धौ" इत्यनेनैवात्र दीर्घसिद्धिः तथापि परत्वात् अप्तृन्नित्येव दीर्घो न्याय्यः।

† "**अमि शसि च तृज्वद्भावोवा**" इति केचित्। केचिदीति **चान्द्र-दुर्गसिंह** तदनुयायिनश्चेत्यर्थः एतेषां मते—पक्षे अमि क्रोष्टुम्। शसि क्रोष्टृन्। **बोपदेवोऽपि** तन्मतमनुसृत्य—"वाच्यघौ"=क्रोष्टुशब्दस्य तुनः स्थाने तृन्वा स्यात् अघावचि परे—क्रोष्टृन् इत्यपाठीत्।

* तृज्वद्भावपक्षे "इको"—इति यण् तदभावपक्षे घेर्ङितीति गुणः।

उकाररूपैकादेशः सच रपरः, परयोगश्च "क्रोष्टुर् अस्" इति भूतम् । ततः "रात्सस्य" इत्यनेन सलोपः, "खरवसानयो"—रिति रेफस्य विसर्गः। **क्रोष्टुः** इत्येकं रूपम्। पक्षे तु—"क्रोष्टु अस्" इत्यवस्थायां घेर्ङितीति गुणे, ङसिङसोश्चेति-पूर्वरूपे, सस्य रुत्वे, रस्य विसर्गे **क्रोष्टोः** इति । क्रोष्टुभ्याम् । क्रोष्टुभ्यः। षष्ठ्येकवचनस्यापि पञ्चम्येकवचनवत्—**क्रोष्टुः, क्रोष्टोः। क्रोष्ट्रोः, क्रोष्ट्वोः।** षष्ठीबहुवचने "क्रोष्टु आम्" इति स्थिते "विभाषा"—(७।१।९७) इति तृज्वद्भावे प्राप्ते, "ह्रस्वनद्यापो"—(७।१।५४) इति नुटि च प्राप्ते "विप्रतिषेधे परं कार्यम्" परत्वात् तृज्वद्भावे एव प्राप्ते तद्बाधकं वार्तिकमारभ्यते—**"नुमचिर"०।** नुम्। वारीणाम्। अचिर। तिसृणाम्। नुट्। क्रोष्टूनाम्। इति क्रमेणोदाहरणानि। तदेवमुक्तेन वार्तिकेण तृज्वद्भावं बाधित्वा नुटि कृते, उटः इत्त्वेन लोपे "नामि" इत्यनेन दीर्घे **क्रोष्टूनाम्** इत्येकमेव रूपम्। सप्तम्येकवचने तृज्वत्पक्षे "क्रोष्टृ इ" इति स्थिते "ऋतो ङि"—इति गुणे रपरत्वे **क्रोष्टरि** इति रूपम् । तदभावपक्षे "अच्च घेः" इति ङेरौत् घेरत्, वृद्धिश्चेति-क्रोष्टौ। क्रोष्ट्रोः, क्रोष्ट्वोः। क्रोष्टुषु। हे क्रोष्टो। हे क्रोष्टारौ। हे क्रोष्टारः। पक्षे हलादौ चेति। तथैव व्याख्यातम्। इत्युदन्ताः।

**हूहूः। हूह्वावित्यादि॥ अतिचमूशब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः २। अतिचमूनाम्। अतिचम्वाम्। खलपूः॥ ओः सुपि। ६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् अचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः। स्वयंभूः। स्वयंभुवौ। स्वयंभुवः। एवं स्वभूः। वर्षाभूः। वर्षाभ्वश्च ६।४।८४ अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि। दृन्भूः। दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः। दृन्भ्वौ। दृन्भ्वः। एवं करभूः। पुनर्भूः॥ दृग्भूकाराभूशब्दौ स्वयंभूवत्।**

अथ ऊदन्ताः। तत्र हूहूशब्दः। गन्धर्वविशेषवाचि अव्युत्पन्नं प्रातिपादिकमेतत्। हूहूः। हूहूशब्दात् प्रथमाया एकवचने सुप्रत्यये उकारस्येत्त्वेन लोपे, रुत्वे, रस्य विसर्गे रूपम्। हूहू औ इति स्थिते "दीर्घाज्जसि च" इति पूर्वसवर्णदीर्घे निषिद्धे "इको"—इति यणि **हूह्वौ**। एवं जसि—**हूह्वः**। अमि तु—"अमि पूर्वः" इति पूर्वरूपे—**हूहूम्। हूह्वौ।** शसि तु—पूर्वसवर्णदीर्घे "तस्माच्छसो"—इति शसः सस्य नत्वे—**हूहून्।** अत्रे सर्वत्राजादौ यणेव। **हूह्वा। हूहूभ्याम्। हूहूभिः। हूह्वे। हूहूभ्याम्। हूहूभ्यः। हूह्वः। हूहूभ्याम्। हूहूभ्यः।**

**हूहः** । **हूहोः** । **हूहाम** । **हूहि** । **हूहोः** । **हूहषु** । हे हूहूः । एङन्ताद्यभावान्न सुलोपः ऊदन्तस्य अतिचमूशब्दस्य विशेषमाह--**अतिचमूशब्दे** इति । चमूमतिक्रान्तः **अतिचमूः** । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । नदीकार्यरूपं विशेषं दर्शयति रूपेण-हे **अतिचमु** इति । "अम्बार्थनद्योर्ह्रस्वः" इति सम्बुद्धौ ह्रस्वः । **अतिचम्वौ** । **अतिचम्वः** । **अतिचमूम** । **अतिचम्वौ** । **अतिचमून्** । **अतिचम्वा** । **अतिचमूभ्याम्** । **अतिचमूभिः** । चतुर्थ्येकवचने-"अतिचमू ङे" इति । "यूस्त्र्याख्यौ"—इति नदीसञ्ज्ञायां ङस्येत्त्वेन लोपे "आण्नद्याः" इति आटि "आटश्च" इत्यनेन पूर्वपरयोः स्थाने वृद्धौ, यणि च कृते-**अतिचम्वै** । एवमेव-तत्र तत्र बहुश्रेयसीशब्दवत् नदीकार्यं ज्ञेयम् । **अतिचमूभ्याम्** । **अतिचमूभ्यः** । (पं०) **अतिचम्वाः** । **अतिचमूभ्याम** । **अतिचमूभ्यः** । (ष०) **अतिचम्वाः** । **अतिचम्वोः** । **अतिचमूनाम** । (ह्रस्वनद्यापोनुट्) । (स०) **अतिचम्वाम** । "ङेराम्नद्याम्नीभ्यः" इत्याम् । **अतिचम्वोः** । **अतिचमूषु** । **खलपूरिति** । ऊदन्त खलपूशब्दः । खलं पुनातीति **खलपूः** । पूञः क्विप् । अस्य प्रथमाया द्विवचने "खलपू औ" इति स्थिते "अचिश्नुधातुभ्रुवां"-इति उवङि प्राप्ते तद्बाधकं सूत्रमारभ्यते-**ओः सुपि** । 'एरनेकाचः'-इति सूत्रम् एरितिवर्जं सर्वमनुवर्तते । "अचिश्नुधातु"-इत्यतो ऽचीति, तेन सुपि इति विशेषणीयम् तदादिविधिः । "इणो यण्" इत्यतः यण् इति चेति सर्वं मत्वा वृत्तिं पठति-**धात्ववयवसंयोग**—इति । एवम्-अनेन सूत्रेण यणादेशो वकारः-खलप्वौ । सर्वत्राजादौ यणेव । तथाहि खलप्वः । (२) खलप्वम् । खलप्वौ । खलप्वः । (३) खलप्वा । खलपूभ्याम् । खलपूभिः । (४) खलप्वे । खलपूभ्याम् । खलपूभ्यः । (५) खलप्वः । खलपूभ्याम् । खलपूभ्यः । (६) खलप्वः । खलप्वोः । खलप्वाम् । (७) खलप्वि खलप्वोः । खलपूषु । (सं०) हे खलपूः हे खलप्वौ । हे खलप्वः । **एवमिति** । आदिना यवलूशरलूकाण्डलूकेदारलूप्रभृतयः । अनेकाचः किम् । लूः । लुवौ । लुवः । धात्ववयव—इति किम् । उल्लूः । उल्लवौ । उल्लवः । असंयोगपूर्वस्य किम । कटप्रूः । कटप्रुवौ कटप्रुवः । *गति इत्यादि किम् । परमलुवौ । सुपि किम् । लुलुवतुः । (१) **स्वयम्भूः** । स्वयं भवतीति क्विप् । अत्र कारकपूर्वत्वाद्यणि प्राप्ते "न भूसुधियोः" इति निषेधे उवङादेशः । स्वयम्भुवौ । स्वयम्भुवः । (२) स्वयम्भुवम् । स्वयम्भुवौ । स्वयम्भुवः । स्वयम्भुवा । स्वयम्भूभ्याम् । स्वयम्भूभिः । स्वयम्भुवे । स्वयम्भूभ्याम । स्वयम्भूभ्यः । स्वयम्भुवः । स्वयम्भूभ्याम । स्वयम्भूभ्यः । स्वयम्भुवः । स्वयम्भुवोः । स्वयम्भुवाम् । स्वयम्भुवि । स्वयम्भुवोः । स्वयम्भूषु । सम्बोधनं प्रथमावत् । **एवं**

---

*इहापि—"गतिकारकेतरपूर्वस्य यणनेष्यते" इति वार्त्तिकं पठनीयमिति भावः ।

**स्वभूरिति** । स्वयम्भूवदित्यर्थः । एवं विभूमित्रभूप्रतिभू आत्मभूप्रभृतयोऽपि । **वर्षाभूरिति** । वर्षासु भवतीति । अत्रापि "न भूसुधियो" रिति यणनिषेधे सूत्रमारभ्यते–**वर्षाभ्वश्च** । "ओः सुपि" इत्याद्यनुवर्त्तते । तदाह–**अस्येति** । **वर्षाभ्वावित्यादि** । खलपूवत् सर्वा प्रक्रियेत्यर्थः । **दृन्करपुनः**–दृन्भूप्रभृतिशब्देषु "न भूसुधियो" रिति निषेधे प्राप्ते यणविधायकं वार्त्तिकमिदम् । **दृन्भ्वौ** इति । वर्षाभूवत् । एवं **करभूरिति** । पुनर्भूः । पुनर्भ्वौ । अयं तु यौगिकः पुंसि । "पुनर्भूर्दिधिषूरूढा" इत्यमरोक्तस्तु स्त्रीलिङ्गः । **दृग्भूकाराभूशब्दाविति** । अनयोः स्वयम्भूशब्दवत् प्रक्रिया ज्ञेयेत्यर्थः । दृशो भवतीति दृग्भूः, कारायां भवतीति काराभूः । कारा वन्धनालयः । **इत्यूदन्ताः** ।

**धाता । धातारौ । धातारः । हे धातः । * ऋवर्णान्नस्य णत्वं वाच्यं । धातॄणां । एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न । पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना । नरौ । नरः ॥ नृ च । ६ । ४।६ अस्य नामि वा दीर्घः । नृणाम् । नॄणाम् ।**

अथ ऋदन्ताः । तत्र धारणपोषणार्थकात् "डुधाञ्" धातोः "ण्वुल्तृचौ" ( ३ । १ । १३३ ) इति तृचि दधातीति "धाता" ! धातृशब्दस्य प्रथमैकवचने सावानीते "धातृ स्" इति स्थिते "ऋदुशनस्पुरुदंसो"—इत्यनेन अनङ् । "अप्तृन्नि"ति उपधाया दीर्घः । सुलोपनलोपौ च । **धाता । धातारौ । धातारः । धातारम् । धातारौ** । सर्वनामस्थानत्वात् 'ऋतोङि'—इति अकारो गुणोरपरः, "अप्तृन्" इति दीर्घश्च । "धातृ शस्" इति स्थिते "लशक्व"—इति शस्येत्त्वेन लोपे 'प्रथमयोः'—इति पूर्वसवर्णदीर्घे "तस्मात्च्छसो"—इति सस्य नत्वे **धातॄन् । धात्रा । धातृभ्याम । धातृभिः । धात्रे । धातृभ्याम । धातृभ्यः** पञ्चम्येकवचने "धातृ अस्" इति स्थिते "ऋत उत्" इति रपरत्वम्, सलोपः, विसर्गः । **धातुः । धातृभ्याम । धातृभ्यः** । ङसिवत् ङसोऽपि । **धातुः । धात्रोः** । आमि "ह्रस्वनद्यापो नुट्" इति नुटि, उटो लोपे "नामि" इति अजन्ताङ्गस्य ऋवर्णस्य दीर्घे—"ऋवर्णान्नस्य णत्वं वाच्यम्" इति वार्त्तिकेण णत्वे-**धातॄणाम्** । ङौ तु "धातृ इ" इति स्थिते "ऋतो ङि"—इति गुणोऽकारः सच रपरः । रेफस्य परयोगः । **धातरि । धात्रोः । धातृषु । हे धातः** । अत्र "ऋतो ङि" इति गुण एव नत्वनङ् "ऋदुशनस्"-इत्यत्र असम्बुद्धावित्यनुवृत्तेः । **हे धातारौ । हे धातारः** ।

---

* वर्णैकदेशानां वर्णग्रहणेनाग्रहणे रेफाभावादाह—**ऋवर्णादिति** ।

**नप्त्रादय** इति। नप्तृ-नेतृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृशब्दाः भेत्तृ-कर्त्तृ-हर्त्तृ- मन्तृप्रभृतयस्तृप्रत्ययान्ताश्च ज्ञेया इत्यर्थः। **पिता** इति। पितृशब्दस्य प्रथमाया एकवचने धातृवदनङादिकार्यम्। सर्वनामस्थाने तु "ऋतो ङि"—इति गुणेऽकारोरपरः, परन्तु "अप्तृन्"—इत्यनेन दीर्घस्तु न भवति तदाह—**नप्त्रादिग्रहणमिति**। अस्यायमाशयः—उणादिनिष्पन्नानां तृन्तृजन्तानामुपधादीर्घश्चेत्तर्हि नप्त्रादीनामेव नान्येषामिति नियमः तदेवं–"पातीति" इति व्युत्पत्तिपक्षे नास्योपधादीर्घः इत्यर्थः। अव्युत्पत्तिपक्षे तु–अप्तृन्नादिष्वनन्तर्भावात् दीर्घशङ्कैव नास्तीति भावः। पितरौ। पितरः। पितरम्। पितरौ। पितॄन्। * इत्यादि। शेषं धातृवत्। † **जामात्रादय** इति आदिना भ्रातृप्रभृतीनां ग्रहणम्। ऋकारान्तं नृशब्दमाह—**ना। नरौ। नरः**। इति। नृशब्दो मनुष्यवाची। "नयतेर्डिच्च" (उ० २। १००) इति ऋन्प्रत्ययः डित्वाट्टिलोपः। नयन्ति पूर्वपुरुषानुत्तमां गतिमिति। अस्यापि—प्रथमाया एकवचने अनङ्दीर्घसुलोपनलोपाः प्राग्वत्। पितृशब्दवत्। किन्तु—षष्ठीबहुवचने नुटि कृते "नृन् आम्" इति स्थिते सूत्रमाह—**नृ च**। "नृ" इति लुप्तषष्ठीकं पदम्। "नामि" इति सूत्रमनुवर्त्तते। "ढ्लोपे"–इत्यतो दीर्घ इति च। "छन्दस्युभयथा" इत्यतः "उभयथा" इत्यप्यनुवर्त्तते तदाचष्टे **अस्येति**। तदनेन पक्षे दीर्घे-**नॄणाम्**, दीर्घाभावे-**नृणाम्** इति रूपद्वयम्। **इत्यृदन्ताः**‡

**गोतो णित्। ७। १। ९० ओकाराद्विहितं सर्वनामस्थानं णिद्वत्। गौः। गावौ। गावः॥ औतोऽम्शसोः। ६। १। ९३। ओकारादम्शसोरचि आकार एकादेशः। गाम्। गावौ। गाः। गवा। गवे। गोः २॥ रायो हलि। ७। २। ८५। रैशब्दस्याकारादेशो हलि विभक्तौ। राः। रायौ। रायः राभ्यामित्यादि। ग्लौः। ग्लावौ। ग्लौभ्यामित्यादि॥ इत्यजन्ताः पुल्लिङ्गाः॥**

---

* पित्रा। पितृभ्याम्। पितृभिः। पित्रे। पितृभ्याम्। पितृभ्यः। पितुः। पितृभ्याम्। पितृभ्यः। पितुः। पित्रोः। पितॄणाम्। पितरि। पित्रोः। पितृषु। हे पितः। हे पितरौ। हे पितरः॥ † जायां मातीति जामाता। तृनि तृचि वा प्रत्यये यालोपः। भ्राजतेऽसावि भ्राता। अत्रापि तृन् तृज्वा, जलोपश्च। अनयोरप्यौणादिकयोर्नप्त्रादिष्वनन्तर्भावात् न दीर्घः।

‡ **सिद्धान्त कौमुद्यान्तु** ॠदन्ता अपि निरूपिताः। तथाहि–"कॄ" "तॄ" अनयोरनुकरणे "प्रकृतिवदनुकरणम्" इति (परिभाषया) वैकल्पिकातिदेशादित्त्वे रपरत्वे कीः। किरौ। किरः। तीः। तिरौ। तिरः इत्यादि (वक्ष्यमाण) गीर्वत्। इत्त्वाभावपक्षे तु "ऋदुशनस्"–इति "ऋतो ङि"–इति च तपरकरणादनङ् गुणौ न। कॄः। क्रौ। क्रः। कॄम्। क्रौ। कॄन्। क्रा। क्रे इत्यादि इत्युक्तम्।

अथ ओदन्ता निरूप्यन्ते । तत्र गोशब्दः । गच्छतीति * गौः । "गमेर्डोस्" (उ० । २ । ६७) **गोतो णित्** । "इतोऽत् सर्वनामस्थाने" इत्यतः सर्वनामस्थाने इत्यनुवर्त्य प्रथमया विपरिणमय्य व्याख्याति—**ओकारादिति । णिद्वदिति ।** णिति परे यत्कार्यं तत्कार्यकारि भवतीत्यर्थः । गोशब्दात् प्रथमैकवचने "गो स्" इति स्थिते "सुडनपुंसकस्य" इति सर्वनामस्थानसंज्ञायां "गोतो"—इति णिद्वदतिदेशे कृते "अचो ञ्णिति" इति अजन्ताङ्गस्य वृद्धिरौकारः, रुत्वविसर्गौ । **गौः । गावौ । गावः । औतोऽम्शसोः** । 'इकोयणचि' इत्यतः अचि इत्यनुवर्त्तते । "एकः पूर्वपरयो" रित्यधिकारः । तद्याचष्टे—**ओकारादिति** । "गो अम्" इति स्थिते णित्वाद् वृद्धौ प्राप्तायाम् अनेन पूर्वपरयोः आकार एकादेशः । **गाम् । गावौ । गाः** । शसि "ओतोम्शसो" रिति पूर्वपरयोः आकारैकादेशः । रुत्वविसर्गौ । **गवा । गोभ्याम् । गोभिः । गवे । गोभ्याम् । गोभ्यः** । गोशब्दात् ङसिङसोः परतः "गो अस्" इति स्थिते "ङसिङसोश्च" इति पूर्वरूपैकादेशे कृते सस्य रुत्वे, विसर्ग—**गोः । गोभ्याम् । गोभ्यः । गोः । गवोः । गवाम । गवि । गवोः । गोषु** । सम्बुद्धौ वृद्धौ सत्यां एङःपरत्वाभावात् न सुलोपः । **हे गौः । हे गावौ । हे गावः** । ऐदन्तो रैशब्दः । राति सुखमिति "रातेर्डैः" (उ० २ । ६६) "रा द्वयोर्विभवे स्वर्णे" इति रुद्रः । **रायो हलि** । "अष्टन आ विभक्तौ" इत्यतः आ इत्यनुवर्त्तते । तदाह—**रैशब्दस्येति** । हलि = हलादावित्यर्थः । "रै स्" इत्यवस्थायाम् अनेन सूत्रेण रै इति सर्वस्य आ इत्यादेशे प्राप्ते अलोन्त्यपरिभाषया अन्त्यस्य ऐकारस्याकारादेशः सस्य रुत्वे, रेफस्य विसर्गे **राः**—। अजादौ सर्वत्र "एचोयवायाव" इति आयादेशः । रायौ । रायः । रायम् । रायौ । रायः । राया । राभ्याम् । राभिः । राये । राभ्याम् । राभ्यः । रायः । राभ्याम् । राभ्यः । रायः । रायोः । रायाम् । रायि । रायोः । रासु । सम्बोधने प्रथमावत् । अथ औकारान्तो ग्लौशब्दः । ग्लौश्चन्द्रः । ग्लै हर्षक्षये धातुः । ग्लायति क्षीणो भवति । "ग्लानुदिभ्यां डौः" (उ० । २ । ६४) इति डौप्रत्ययः टिलोपश्च । **ग्लौः** । अचि सर्वत्र आवादेशः । **ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । ग्लावा । ग्लौभ्याम् । ग्लौभिः । ग्लावे । ग्लौभ्याम् । ग्लौभ्यः । ग्लावः । ग्लौभ्याम् । ग्लौभ्यः । ग्लावः । ग्लावोः । ग्लावाम । ग्लावि । ग्लावोः । ग्लौषु** । सम्बोधने प्रथमावत् । इत्यौदन्ताः ।

**इति प्राज्ञचित्तप्रसादिन्यामजन्तपुलिङ्गप्रकरणं समाप्तम् ।**

---

* "**गौः** स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाण-वाग्भूष्वप्सु भूम्नि च" इति विश्वमेदिन्यौ ॥

अथाजन्तस्त्रीलिङ्गाः।

**रमा॥ औङ आपः।७।१।१८।** आबन्तादौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः॥ **सम्बुद्धौ च।७।३।१०६।** आप एकारः। हे रमे। हे रमे। हे रमाः। रमां। रमाः। **आङि चापः।७।३।१०५।** आङि ओसि चाप एकारः। रमया रमाभ्यां। रमाभिः॥ **याडापः।७।३।११३।** आपो ङितो याट्। वृद्धिः। रमायै। रमाभ्यां। रमाभ्यः। रमायाः। रमाभ्यां। रमाभ्यः रमायाः। रमयोः। रमाणां। रमायां। रमयोः। रमासु। एवं दुर्गादयः॥ **सर्वनाम्नः स्याड् ह्रस्वश्च।७।३।११४।** आबन्तात्सर्वनाम्नो ङितः स्याडापश्च ह्रस्वः। सर्वस्याः २। सर्वासां। सर्वस्याम्। शेषं रमावत्। एवं विश्वादयोऽप्याबन्ताः॥

अथ अजन्तस्त्रीलिङ्गा निरूप्यन्ते। तत्रादौ आकारान्तो रमाशब्दः। रमुक्रीडायाम्। अस्माद्धातोः पचाद्यचि। टाप्। लिङ्गविशिष्टपरिभाषया स्वादयः। * रमते इति **रमा**। अथवा—प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि "ङ्याप्प्रातिपदिकात्" इत्यत्र ङ्यापोः पृथक्ग्रहणात् स्वादयः। वचनादिविवक्षा—पूर्ववत् ज्ञेया। "रमा सु" इति स्थिते "हल्ङ्याप्"—इति सुलोपः। "रमा औ" इति स्थिते—**औङ आपः**। आप इति पञ्चमी। प्रत्ययग्रहणपरिभाषया आबन्तं विवक्षितम्। अङ्गस्येत्यधिकृतम्। औङः इति षष्ठी। "जसः शी" इत्यतः शीत्यनुवर्त्तत इति मत्वा वृत्तिं करोति—**आबन्तादिति** औङ् शब्दो न प्रसिद्धार्थक इति क्लेशं हर्त्तुमाह—**औङ** इति। प्राचां वैयाकरणानां ग्रन्थेष्वित्यर्थः। "रमा औ" इति स्थिते औकारस्य शीभावे तस्य स्थानिवद्भावेन प्रत्ययत्वात् "लशक्व"—इति शस्येत्त्वेन लोपे, औ इति प्रत्ययस्य स्थाने ईकार आदेशः। मकारोत्तरवर्त्तिन आकारस्य, ईकारस्य च स्थाने "आद्गुणः" इति सूत्रेण स्थानसाम्यात् एकारः। हलो मस्य परयोगे—**रमे**। "यस्येति च" इति लोपस्तु न भत्वाभावात्। "रमा जस्" इति स्थिते "चुटू" इति जस्येत्त्वे, लोपे "अकः सवर्णे" इति दीर्घे सस्य रुत्वे, रस्य विसर्गे—**रमाः**। 'प्रथमयोः पूर्वसवर्णः" इति दीर्घस्तु न "दीर्घाज्जसि च" इति निषेधात्। **सम्बुद्धौ च**। "बहुवचने झल्येत्" इत्यतः एदिति "आङि चापः" इत्यतः आप इत्यनुवर्त्त्य वृत्तिमाचष्टे—**आप** इति। आबन्तस्येत्यर्थः। सम्बोधने "हे रमा स्" इति स्थिते अनेन सूत्रेण अलोन्त्यपरिभाषया सहैकवाक्यतापन्नेन मका-

---

*रमयतेः पचाद्यच्। टाप्। एकादेशस्य पूर्वान्तवत्त्वेन प्रातिपदिकत्वात् स्वादयः। "वाचा" इत्यादौ तु लिङ्गविशिष्ट परिभाषया तत्त्वात्ते इति **नागेशः**।

रोत्तरवर्त्तिन आकारस्य एकारादेशे, परत्वेन "एङ्ह्रस्वादिति" सम्बुद्धिलोपः। **हे रमे। हे रमे। हे रमाः।** "रमा अम्" इति स्थापिते "अमि पूर्वः" इति पूर्वरूपे—**रमाम्।** द्वितीयाद्विवचनं प्रथमाद्विवचनवत्—**रमे।** "रमा शस्" इति स्थिते शस्येत्त्वेन लोपे, पूर्वसवर्णदीर्घे कृतेऽपि शसः सस्य स्त्रीत्वान्नत्वाभावे रुत्वविसर्गौ—**रमाः। आङि चापः।** "ओसि च" इति सर्वं सूत्रमनुवर्त्तते। आप इति अङ्गस्येत्यधिकृतस्य विशेषणम्। ततस्तदन्तविधिः। "बहुवचने"—इत्यतः एत् इत्यनुवर्त्तनीयमित्याशयेनाचष्टे—**आङि** इति। "रमा टा" इति स्थिते "चुटू" इत्यनेन टस्येत्त्वे, लोपे "आङि चापः" इत्याबन्ताङ्गस्य एकारादेशे प्राप्ते अलोन्त्यपरिभाषया आकारमात्रस्यैव सः। ततः "रमे आ" इति जाते "एचो"—इत्ययादेशे यथायोगं परयोगे **रमया।** आङिति टासञ्ज्ञा प्राचाम्। **रमाभ्याम्। रमाभिः।** "अतो भिस ऐस्" इत्यत्र अत इति तपरकरणात् रमाभिरित्यत्र भिस ऐस् न। **याडापः।** आप इति पञ्चमी "घेर्ङिति" इत्यतः ङितीति अनुवर्त्त्य षष्ठ्या विपरिणमय्य आचष्टे—**आप** इति। आपः परस्येत्यर्थः। ङितः = ङिद्वचनस्य। याडागमः स्यात्। वृद्धिः = वृद्धिरेचीत्यनेनेत्यर्थः। "रमा ए" इति स्थापिते "याडापः" इति सूत्रेण चतुर्थीङिद्वचनस्य याडागमः, स च टित्त्वात् आद्यवयवः। "रमा याट् ए" इति जाते टस्येत्त्वेन लोपे "या" इत्याकारस्य एकारस्य च द्वयोः स्थाने स्थानसाम्यात् ऐकारो वृद्धिः, यकारस्य परयोगः—**रमायै। रमाभ्याम् रमाभ्यः।** पञ्चम्येकवचने "रमा अस्" इति स्थिते दर्शितरीत्या याडागमे कृते, टस्य लोपे "अकः"—इति सवर्णदीर्घे, सस्य रुत्वविसर्गौ—**रमायाः। रमाभ्याम। रामाभ्यः।** षष्ठ्येकवचनमपि पञ्चम्येकवचनवत्। **रमायाः।** "रमा ओस्" इति स्थिते "आङि चापः" इति एत्त्वे अयादेशे सस्य रुत्वविसर्गौ—**रमयोः।** "रमा आम्" इति स्थिते "ह्रस्वनद्यापो"—इत्यत्र आप् इत्यस्य ग्रहणात् रमाशब्दस्य आबन्तत्वात् नुटि, उटो लोपे "पर्जन्यवल्लक्षणप्रवृत्तिः" इति न्यायेन "नामि" इति दीर्घे "अट्कुप्वाङ्"—इति णत्वम्—**रमाणाम्।** "रमा ङि" इति स्थिते "ङे राम्नद्याम्नीभ्यः" इत्यनेन ङेरामादेशे कृते "रमा आम्" इति भूते "याडापः" इति याडागमे सवर्णदीर्घे—**रमायाम्** नचामादेशस्यान्त्यस्य मस्य हल इत्संज्ञा "न विभक्तौतुस्माः" (१।३।४) इति तन्निषेधात् ओसि षष्ठीद्विवचनवत्। **रमयोः। रमासु।** एवं **दुर्गादय इति।** आदिना उमा-जाया-माया-जृम्भा-रम्भा-तारा-हारा-माला-खट्वाम्बिकाप्रभृतीनां ग्रहणम्। आकारान्तः सर्वाशब्दः। तस्य तृतीयाबहुवचनपर्यन्तं रमाशब्दवत् प्रक्रिया—**सर्वा। सर्वे। सर्वाः। सर्वाम्। सर्वे। सर्वाः। सर्वया। सर्वाभ्याम्। सर्वाभिः।** चतुर्थ्येकवचने—"सर्वा ए" इति स्थिते "याडाप" इत्यनेन आडागमप्राप्तौ तद्बाधकं सूत्रमुपन्यस्यति—"**सर्वनाम्नः**"—इति। "याडाप" इत्यतः आप इत्यनुवृत्तेन पञ्चम्यन्तेन "सर्वनाम्न" इत्यनेन विशेषणीयम्, तत्त्वेन तदन्तविधिः। "घेर्ङिति" इत्यतोऽनुवृत्तं

ङिति इति षष्ठ्या नेतव्यम्, "ह्रस्वनद्याप"—इत्यतोऽनुवृत्तम् आप इति षष्ठ्यन्तं पदं ह्रस्व इति पदेनान्वेतव्यमित्याशयेन सूत्रं व्याख्याति—**आबन्तात्** इति । इति । एवञ्चानेन सूत्रेण स्याट् इत्यागमे, आपो ह्रस्वे च कृते वृद्धौ—**सर्वस्यै । सर्वाभ्याम् । सर्वाभ्यः ।** पञ्चम्येकवचने "सर्वा अस्" इति भूते पूर्ववत् याटः प्राप्तौ स्याडागम-ह्रस्वदीर्घाः । **सर्वस्याः । सर्वयोः** । षष्ठीबहुवचने "सर्वा आम्" इति स्थितौ एकादेशस्य पूर्वान्तत्वेन ग्रहणात् "आमि सर्वनाम्नः"—इति सुटि, उटो लोपे, परयोगे—**सर्वासाम** । सप्तम्येकवचने "सर्वा इ" इति स्थापिते "ङेराम्"—इति आम्, सुटं (७।१।५२) बाधित्वा परत्वात् (८।३।११४) स्याट्, ह्रस्वश्च, सकृद्गति-न्यायेन पुनर्न सुट्—**सर्वस्याम् । सर्वयोः । सर्वासु** । सम्बोधने प्रथमावत् । **शेषमिति** । व्याख्यातमेवास्माभिः। **एवम** इति । आबन्ताः विश्वाप्रभृतयोऽपि सर्वा-शब्दवज्ज्ञेयाः । तथाहि—विश्वा । विश्वे । विश्वाः । विश्वाम् । विश्वे । विश्वाः । विश्वया। विश्वाभ्याम् । विश्वाभिः । विश्वस्यै । विश्वाभ्याम् । विश्वाभ्यः । विश्वस्याः । विश्वाभ्याम्। विश्वाभ्यः । विश्वस्याः । विश्वयोः । विश्वासाम् । विश्वस्याम् । विश्वयोः । विश्वासु । सम्बोधनं प्रथमावत् । एवमन्येऽपि ॥

**विभाषादिक्समासे बहुव्रीहौ ।१।२८।** सर्वनामता वा स्यात् । उत्तरपूर्वस्यै उत्तरपूर्वायै। इत्यादि । अन्तरस्यै शालायै । अपुरीत्युक्ते-नेह । अन्तरायै नगर्यै । तीयस्येति वा । द्वितीयस्यै । द्वितीयायै । एवं तृतीया । अम्बार्थनद्योर्ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल ॥ **असं-युक्ता ये डलकास्तद्वतां ह्रस्वो न** ॥ हे अम्बाडे । हे अम्बाले । हे अम्बिके । जरा । जरसौ । जरे । इत्यादि । पक्षे हलादौ च रमावत् । गोपा विश्वपावत् । मतिः । मत्या ॥ **ङिति ह्रस्वश्च । १ । ४ । ६ ।** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति। मत्यै मतये। मत्याः, मतेः। परत्वात् औत् इति प्राप्ते । **इदुद्भ्याम् । ७ । ३ । ११७ ।** नदीसंज्ञ-काभ्यामिदुद्भ्यां परस्य ङेराम । मत्यां । मतौ । शेषं हरिवत् । एवं बुद्ध्यादयः ॥ **त्रिचतुरोः स्त्रियां तिसृचतसृ । ७ । २ । ९९ ।** स्त्री-लिङ्गयोरेतौ स्तो विभक्तौ । **अचि र ऋतः । ७ । २ । १०० ।** तिसृ-चतसृ ऋतो रादेशोऽचि । गुणदीर्घोत्वानामपवादः । तिस्रः २ । ति-सृभिः । तिसृभ्यः । आमिनुट् ॥ **न तिसृचतसृ । ६ । ४ । ४ ।** एतयो-र्नामि दीर्घे न । तिसृणां । तिसृषु । द्वे २ । द्वाभ्याम ३ । द्वयोः २ ।

**गौरी। गौर्यौ। गौर्यः। हे गौरि। गौर्यावित्यादि। एवं नद्यादयः। लक्ष्मीः। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः।**

उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा **उत्तरपूर्वा**। "दिङ्नामान्यन्तराले" (२।२।२६) इति सूत्रेण समासः। अस्य कश्चिद्विशेषं दर्शयितुं सूत्रमुपन्यस्यति—**विभाषा दिक्समासे**—"सर्वादीनि" इत्यतः सर्वनामग्रहणमनुवर्त्त्य व्याचष्टे—**सर्वनामता**—इति। गौणत्वादप्राप्ते विभाषेयम्, नतु "न बहुव्रीहौ" इति निषेधे प्राप्ते इति भ्रमितव्यम्। तस्यालौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वादस्य च समासविषयत्वादिति **ज्ञानेन्द्रस्वामी। उत्तरपूर्वस्यै** इति सर्वनामसञ्ज्ञापक्षे। अर्थात् अत्र स्याट्, ह्रस्वश्च। सर्वनामसंज्ञाभावपक्षे तु—**उत्तरपूर्वायै**। अत्र याट्। एवम्—ङसिङसोः—**उत्तरपूर्वस्याः, उत्तरपूर्वायाः**। आमि—**उत्तरपूर्वासाम्, उत्तरपूर्वाणाम्**। ङौ—**उत्तर पूर्वस्याम्, उत्तरपूर्वायाम्**। इत्यादीति—शेषं सर्वाशब्दवदित्यर्थः। इदन्तु बोध्यम्—"दिङ्नामान्यन्तराले" (२।२।२६) इति प्रतिपदोक्तस्य = (दिक्शब्दमुच्चार्य विहितस्य) दिक्समास्य ग्रहणात्—या उत्तरा सा पूर्वा यस्याः उन्मुग्धायाः सा उत्तरपूर्वा तस्यै उत्तरपूर्वायै इत्यत्र न सर्वनामसञ्ज्ञा। बहुव्रीहिग्रहणं स्पष्टार्थम्। दिक्ग्रहणं किम्। "नबहुव्रीहौ" (१।१।२८) इति निषेधो वर्त्तते तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेध इति दिग्ग्रहणे पुनः क्रियमाणे ज्ञायते दिगुपदिष्टसमासे विभाषाऽन्यत्र प्रतिषेध इति **काशिका। अन्तरस्यै** शालायै इति। बाह्यायै = नगरबाह्यायै इत्यर्थः। "अन्तरं बहिर्योगोपसंव्यानयोः" (१।१।३६) इति सूत्रेण बहिर्योगेऽर्थे सर्वनामसंज्ञेत्यर्थः। अन्तरा। अन्तरे। अन्तराः इत्यादि सर्वावत्। **अपुरीत्युक्ते**रिति। अन्तरमिति गणसूत्रे अपुरि इति वार्त्तिकात् नगर्यर्थे न सर्वनामसञ्ज्ञा, तदाह—अन्तरायै नगर्यै। अत्र न स्याडागमः किन्तु—"याडाप" इति याट्। एवञ्चास्मिन्नर्थे रमाशब्दवदस्य प्रक्रिया। **तीयस्येतीति**। "तीयस्य ङित्सु वा" इत्यजन्तपुंलिङ्गोक्तं वार्त्तिकं स्मारयति। प्रकृते तत्फलं द्वितीयातृतीयाशब्दयोः ङित्सु पक्षे स्याडागमो ह्रस्वश्च। पक्षे—याट्। तद्दर्शयति **द्वितीयस्यै** इति। एवम्—ङसिङसोः **द्वितीयस्याः २ द्वितीयायाः २** ङौ—**द्वितीयस्याम्, द्वितीयायाम्**। शेषं रमावत्। **एवमिति**। तृतीयाशब्दोऽपि द्वितीयावत्। तृतीयस्यै, तृतीयायै। तृतीयस्याः, तृतीयायाः। तृतीयस्याः, तृतीयायाः। तृतीयस्याम् तृतीयायाम्। शेषं रमावदित्यर्थः। **अम्बार्थेति**। नदीसञ्ज्ञाप्रकरणे पुंसि व्याख्यातमिदम्। अम्बा, अक्का, अल्ला इत्याकारान्ताः शब्दाः। सर्वेऽमी रमावत्। केवलं सम्बुद्धौ अम्बार्थेति सूत्रेण ह्रस्व इत्येव विशेषः। तदुदाहरति अम्बार्थान्—**हे अम्ब**! इत्यादिना। "अम्बा माता" इत्यमरः। **असंयुक्ताः**—इति। अत्र "अम्बार्थं द्व्यक्षरं यदि" इति वचनात् द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वो भवति नान्यस्येत्याशयेन फलितमुक्तम् "असंयुक्ता" इति। "द्व्यच्कानामम्बार्थानां ह्रस्वः" इत्यस्य अङ्गत्वात्तदन्तविधिः

अतः (हे) जगदम्ब! इत्यत्र द्व्यच्काम्बान्तत्वात् भवति ह्रस्व" इति बालमनोरमा।

**जरा** इति। जृष वयोहानौ इत्यस्मात् "षिद्भिदादिभ्योऽङ्" (३।३।१०४) इत्यङ्। "ऋदृशोऽङि"—(७।४।१६) इति गुणः। रपरत्वम्। अदन्तत्वात् टाप्। "जरा" इति। अस्य प्रातिपदिकसञ्ज्ञायां स्वाद्युत्पत्तौ प्रथमाया एकवचनविवक्षया "जरा सु" इति स्थिते "हल्ङ्याब्भ्यः"—इति सुलोपे **जरा। जरसाविति।** "जराया जरसन्यतरस्याम्" इति सूत्रेण सर्वत्र अजादौ विभक्तौ वा जरसादेशः। तदेतदभिप्रेत्याह—**पक्षे हलादाविति।** तथाहि--

(प्र०) जरा। * जरसौ, जरे। जरसः, जराः। (द्वि०) जराम्, जरसम्। जरसौ, जरे। जरसः, जराः। (तृ०) जरसा, जरया। जराभ्याम्। जराभिः। (च०) जरसे, जरायै। जराभ्याम्। जराभ्यः। (पं०) जरसः, जरायाः। जराभ्याम्। जराभ्यः। (ष०) जरसः, जरायाः। जरसोः, जरयोः। † जरसाम्, जराणाम्। (स०) जरसि, जरायाम्। जरसोः, जरयोः। जरासु।

आमन्त्रणे प्रथमावत्। **गोपा।** इति। आकारान्तो गोपाशब्दः स्त्रियाम्। स च विश्वपावत्। यथा पुंसि विश्वपाशब्दस्य प्रक्रिया तथैवास्यापि। आबन्तत्वाभावान्न सुलोप इत्याशयः। इत्यादन्ताः। अथ इदन्ताः। तत्र मतिशब्दः। अयं प्रायेण हरिवत्। **मतिः। मती। मतयः। मतिम्। मती।** "मति शस्" इत्यवस्थायां शस्येत्त्वेन लोपे पूर्वसवर्णदीर्घे स्त्रीत्वान्नत्वाभावः **मतीः।** तृतीयैकवचने घिसञ्ज्ञाभावान्नात्वं न। **मत्या। मतिभ्याम्। मतिभिः। ङितिह्रस्वश्च।** "यूस्त्र्याख्यौ नदी" इत्यनुवर्त्तते "नेयङुवङ्"—इति सूत्रं नञ्वर्जं वर्तते, "वामि" इत्यतो "वा" इत्यपि तदाचष्टे—**इयङुवङ्स्थानाविति।** चतुर्थ्येकवचने "मति ए" इति स्थिते अनेन नदीसंज्ञापक्षे "आण्नद्याः" इत्याटि, "आटश्च" इति वृद्धौ, यणि च सिद्धं रूपम्—**मत्यै।** नदीसंज्ञाभावपक्षे--"शेषोघ्यसखि" इति घिसञ्ज्ञायां "घेर्ङिति" इति गुणे "एचोऽयवा" इति अयादेशे **मतये।** एवमेव ङिद्वचनेषु सर्वत्र द्वे द्वे रूपे। **मतिभ्याम्। मतिभ्यः।** (पं०) **मत्याः, मतेः। मतिभ्याम्। मतिभ्यः।** (ष०) **मत्याः, मतेः। मत्योः मतीनाम्।** (स०) **मत्याम्, मतौ। मत्योः। मतिषु।** सम्बोधनं प्रथमावत्। नदीसंज्ञाभावपक्षे सर्वत्र हरिवत् प्रक्रियेति बोधयितुमाह—**शेषमिति।** एवं **बुद्ध्यादय** इति। आदिना श्रुति-स्मृति-रुचि-कृति-युवति-सिद्धि-यष्टि-तप्तिप्रभृतीनां ग्रहणम्। इदन्तु ज्ञेयम्—विंशतिप्रभृतयः*सङ्ख्येयेऽर्थे एकवचनान्ताः एव। ततः स्वादयः। मतिशब्दवत्

* शीभावात्परत्वाज्जरस्। † आमि नुटः परत्वाज्जरस्।

* 'विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः। सङ्ख्यार्थे द्विबहुत्वे स्तः" इत्यमरः। 'पङ्क्तिविंशति'—(५।१।५९) इति सूत्रे भाष्यप्रदीपोद्योते **नागेश**-

प्रक्रिया । विंशतिः । हे विंशते । विंशतिम् । विंशत्या । विंशत्यै, विंशतये । विंशत्याः, विंशतेः । विंशत्याः, विंशते । विंशत्याम्, विंशतौ । एवं षष्टि-सप्तति-अशीति-नवतिशब्दाः । सङ्ख्यावाचित्वे तु द्विवचनबहुवचनान्ता अपि । द्वे **विंशती** । बहवो **विंशतयः** । **त्रिचतुरोः स्त्रियाम्०** । स्पष्टम् । एतौ = तिसृचतसृ इत्येतावित्यर्थः । "अष्टन आविभक्तौ" इत्यतो विभक्ताविति वर्त्तते । प्रथमा बहुवचने "त्रि अस्" "चतुर् अस्" स्थिते "त्रिचतुरोः"—इति सूत्रेण यथायोगं त्रिशब्दस्य तिसृ इति चतुर्शब्दस्य चतसृ इति आदेशे सति "तिसृ अस्, चचसृ अस्" इत्यवस्थायां "ऋतो ङि"—इति गुणे प्राप्ते सूत्रम् प्रवर्त्तते—**अचि र ऋतः** । पूर्वसूत्रात् तिसृचतसृ इत्यनुवर्त्त्य लुप्तषष्ठीकत्वेनान्वीयते इति व्याचष्टे—**तिसृचतस्रोः** इति । तदनेन ऋकारस्य र् इत्यादेशः, सकाररेफयोः परेणाकारेण योगः, सस्य रुत्वविसर्गौ । **तिस्रः, चतस्रः** । इकोयणचीत्यनेनैव सिद्धं स्यादिति शंकां वारयन्नाह—**गुणदीर्घोत्वानामिति** । तिस्रः तिष्ठन्ति इत्यत्र "ऋतो ङि"—इति गुणस्य, (शसि) तिस्रः पश्य इत्यत्र "प्रथमयोः" इति पूर्वसवर्णदीर्घस्य, प्रियतिस्र आगतः, प्रियतिस्रः स्वम् इत्यत्र "ऋत उत्" इति उत्वस्य च रत्वमपवादः इत्यर्थः । यद्यपि मध्येऽपवादन्यायेन दीर्घोत्वयोरेव रत्वमपवादः स्यान्नतु "ऋतो ङि"—इति गुणस्य तथापि बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वमेवेह बाध्यते इति भावः । विशेषचिन्तायान्तु "मध्येऽपवादा"–इति न्यायेन दीर्घोत्वयोरेव बाधः स्यान्नतु गुणस्य । सामान्यविशेषपक्षौ च जातिव्यक्तिपक्षवल्लक्ष्यानुरोधाद् व्यवस्थितौ इति कैयटादौ स्पष्टम् । एवमेव शसि—**तिस्रः, चतस्रः** । तृतीयादौ—**तिसृभिः** । **चतसृभिः** । **तिसृभ्यः** । **चतसृभ्यः** । **तिसृभ्यः** । **चतसृभ्यः** । षष्ठी बहुवचने "तिसृ आम्, चतसृ आम्" इति स्थापिते "ह्रस्वनद्याप"—इति प्राप्तं नुटं बाधित्वा "अचिरऋत" इति रत्वे "तिस्रा" मिति प्राप्ते "नुमचिरतृज्वद्भाव"—इति वार्त्तिकेण

---

**भट्टस्तु**—विंशत्यादयो द्व्यादयश्च धर्मशक्ता एव धर्मधर्मिणोरभेदाच्च व्यक्तौ कार्याणि । तयोश्च भेदाभेदौ । विंशत्यादयः कदाचिद्भेदेन सङ्ख्यां वदन्ति 'गवां विंशतिः' इति । कदाचिदभेदेन 'विंशतिर्गावः' इति । यदाप्यभेदेन तदापि धर्मगतसङ्ख्यावैशिष्ट्येनैव ततो द्रव्यप्रतीतिः शब्दशक्तिस्वभावात् । यथा 'गावो धनम्' इत्यादौ प्रीतिहेतुत्वगुणगतसंख्या-वैशिष्ट्येनैव द्रव्यप्रतीतिर्धनशब्दात् । इयांस्तु विशेषः—तत्र कदाचित् स्वगतसंख्यावैशिष्ट्ये-नापि प्रतीतिः । अन्यगतसंख्यावैशिष्ट्यमन्यस्य कथमिति चेत् ? आरोपेणेति गृहाण । द्व्यादयस्तु—स्वगतवाच्यसंख्याविशिष्टद्रव्याभेदेन तद्गतसंख्याविशिष्टमेव धर्मं प्रतिपादयन्ति, शब्दशक्तिस्वभावात् इति न कदाचिदपि तत्रैकवचनम् । नापि विंशत्यादिभ्यो बहुवचनम् विंशतिप्रचये तु बहुवचनमिष्टमेव ॥ 'द्व्येकयोः' (१ । ४ । २२) इत्यादौ तु विंशति-वदेव धर्मगतसंख्याविशिष्टद्रव्यस्यैव प्रतीतिः इति द्विवचनम् । एवंप्रतीतिरीदृशवृत्तिविषयैवेति नातिप्रसङ्ग इति निष्कर्ष उक्त इत्याहुः । अधिकं ग्रन्थगौरवान्नोक्तम् ।

नुट्। उटो लोपः। ततः "नामि" इति दीर्घे प्राप्ते तद्बाधकं सूत्रमाह—**न तिसृचतसृ।** "नृलोपे"—इत्यतो दीर्घ इति "नामि" इति सूत्रञ्च अनुवर्त्तते तदाचष्टे—**तिसृचतसृ** इति तदनेन दीर्घनिषेधे "ऋवर्णान्नस्य णत्वम्" इति णत्वे—**तिसृणाम्। चतसृणाम्। तिसृषु। चतसृषु।** "आदेशप्रत्यययो" रिति षत्वम्। **द्वे इत्यादि।** द्विशब्दाद् विभक्तौ "त्यदादीनामः" इति अत्वे "अजाद्यतः"—इति टापि सवर्णदीर्घे "द्वा" इति जाते, ततः रमाशब्दवत् प्रक्रिया। **इति इदन्ताः।** अथ ईदन्ताः। तत्र गौरीशब्दः। गौरशब्दात् स्त्रियां "षिद्गौरादिभ्यश्च" इति सूत्रेण गौरादिलक्षणो ङीष्। "यस्येति च" इत्यकारलोपः। गौरी। अस्मात् प्रातिपदिकसंज्ञायां सुः, हल्ङ्यादिलोपश्च—**गौरी।** "गौरि औ" इत्यत्र "दीर्घाज्जसि च" इति पूर्वसवर्णदीर्घे निषिद्धे "एको"—इति यणि **गौर्यौ।** एवं जसि—**गौर्यः।** सम्बोधने "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वे एङिति सम्बुद्धि लोपे **हे गौरि।** शेषं प्रथमावत् इति मत्वा आह **गौर्यौ** इति। गौरीम्। गौर्यौ। गौरीः। गौर्या। गौरीभ्याम्। गौरीभिः गौर्यै। गौरीभ्याम्। गौरीभ्यः। गौर्याः। गौरीभ्याम्। गौरीभ्यः। गौर्याः। गौर्योः। गौरीणाम्। गौर्याम्। गौर्योः। गौरीषु। एवं **नद्यादय** इति। आदिना वाणी-क्रोष्ट्री-राज्ञी-भवती-पचन्ती-प्राची-प्रतीची-उदीची-उभयी-कार्त्तिकी-चैत्री-दाक्षी-कुमारी-पत्नी-मुमुखी-त्रिलोकी-रोहिणी-अर्याणी-गणकी-हिमानी-भूमी-गुर्वी-पलिक्नी-पिशङ्गी-मयूरी-सखी प्रभृति ङ्यन्तानां ग्रहणम्। **लक्ष्मीरिति।** अङ्यन्तत्वान्न* सुलोपः। शेषं गौरीशब्दवत् अम्बार्थेत्यादिकार्यमित्याशयः। **एवं तरीति।** तरीतन्त्रीप्रभृतयोऽपि लक्ष्मीवत् ङ्यन्तत्वाभावादस्यापि न सुलोपः अन्यन्नदीकार्यं गौरीवत्। इदन्तु ध्येयम्—अवीतन्त्रीतरीलक्ष्मीधीह्रीश्रीणामुणादिषु। सप्तस्त्रीलिङ्गशब्दानां न सुलोपः कदाचन॥ इति। अवीः = रजस्वला स्त्री। तन्त्रीः = वीणा। तरीः = बेडा। लक्ष्मीः = विष्णु प्रिया। धीः = बुद्धिः। ह्रीः = लज्जा। श्रीः = लक्ष्मी शोभा च।

**स्त्री। हे स्त्रि॥ स्त्रियाः। ६।४।७९। अस्येयङजादौ प्रत्यये। स्त्रियौ। स्त्रियः॥ वाम्शसोः ६।४।८०। अमि शसि च स्त्रियां इयङ् वा। स्त्रियम् स्त्रीम॥ स्त्रियः। स्त्रोः। स्त्रिया। स्त्रियै। स्त्रियः २। परत्वान्नुट्। स्त्रीणाम्। स्त्रियाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः॥ नेयङुवङ्स्थानावस्त्री। १।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो नतु स्त्री। हे श्रीः। श्रियै। श्रिये। श्रियाः २। श्रियः।**

---

*"कृदिकारादक्तिनः-" इति ङीषि कृते तु सुलोपो भवत्येवेति **केचित्।** अतएव "लक्ष्मीर्लक्ष्मी हरिप्रिया" इति **द्विरूपकोशः।**

वामि । १ । ४ । ५ । इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो नतु स्त्री । श्रीणां । श्रियाम् २ । श्रियि । धेनुर्मतिवत् ॥ स्त्रियां च । ७ । १ । ९६ । स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते । ऋन्नेभ्यो ङीप् । ४ । १ । ५ । ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री । गौरीवत् । वधूः । शेषं नदीवत् । भ्रूः श्रीवत् स्वयंभूः पुंवत् ॥ न षट्स्वस्रादिभ्यः । ४ । १ । १० । एभ्यो ङीप्टापौ न स्तः ॥

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

स्वसा । स्वसारौ । माता पितृवत् । शसि-मातॄः । द्यौर्गोवत् । राः पुंवत् । नौर्ग्लौवत् ॥ इत्यजन्ताः स्त्रीलिङ्गाः ।

**स्त्री इति** । स्त्यै शब्दसंघातयोः । * स्त्यायतः शुक्रशोणिते अस्यामिति **स्त्री** । "स्त्यायतेर्ड्रट्" इत्यौणादिकः ड्रट्प्रत्ययः । अटावितौ । डित्त्वसामर्थ्यादभस्यापि टेर्लोपे "लोपोव्यो०"—इति यलोपः । टित्त्वात् ङीप् । हल्ङ्यादिना सुलोपः । **हे स्त्रि** इति । अम्बार्थेति ह्रस्वः, सुलोपश्च । **स्त्रियाः** । "अचिश्नु" इत्यतः अचि, इयङ् इति चानुवर्त्य व्याचष्टे—**अस्येयङ्** इति । "स्त्री औ" इति स्थापिते अत्र यणादिप्राप्ते अधात्वधिकारत्वात् "अचिश्नु"—इतीयङि अप्राप्ते "स्त्रियाः" इति अजादिविभक्तिपरकत्वात् ङित्त्वेन अन्त्यस्य ईकारस्य इयङि कृते अङोः इत्त्वलोपौ, यथायोगं परयोगे च कृते—**स्त्रियौ** । एवमेव सर्वत्राजादौ विभक्तौ इयङादेशगतिर्ज्ञेया । जसि—**स्त्रियः** । अमि शसि च नित्यमेव इयङादेशविधौ प्राप्ते सूत्रमाह—**वाऽम्शसोः** । स्त्रियाः इयङ्चेत्यनुवर्त्तते तदाचष्टे—**अमिशसि चेति** । "स्त्री अम्" इति स्थितेऽनेन इयङादेशपक्षे **स्त्रियम्**, तदभावपक्षे "अमि पूर्वः" इति पूर्वरूपे **स्त्रीम्** इति रूपद्वयम् । औटि प्रथमाद्विवचनवत् **स्त्रियौ** । शसि—इयङादेशपक्षे **स्त्रियः**, तदभावे शसेरत्वे लोपे, प्रथमयो"—रिति पूर्वसवर्णदीर्घे सस्य रुत्वे, रेफस्य विसर्गे—**स्त्रीः** ।

**स्त्रिया । स्त्रीभ्याम् । स्त्रीभिः । स्त्रियै । स्त्रीभ्याम् । स्त्रीभ्यः** । ङसिङसोस्तु—"स्त्री अस्" इत्यवस्थायाम् "यूस्त्र्याख्यौ"—विति नदीसंज्ञासत्त्वे, "आण्नद्याः" इति ङिद्वचनत्वात् आटि आगमे, "आटश्च" इति वृद्धौ सस्य रुत्वविसर्गौ—**स्त्रियाः । स्त्रीभ्याम् । स्त्रीभ्यः** । स्त्रियाः । स्त्रियोः । "स्त्री आम्" इति स्थिते "स्त्रियाः" इति प्राप्तमियङं बाधित्वा परत्वात् "ह्रस्वनद्यापो"—इति

---

* स्त्यतेः स्त्यायतेः तृणातेः तनोतेर्वा औणादिकसूत्रेण त्रट्प्रत्ययो धातोश्च सकारादेशो निपात्यते । टित्वात् ङी । तृणाति स्वं च परञ्च दोषेणाच्छादयतीति **स्त्री** इति **जैनशाकटायना**नुसारिणः ।

नुटि, णत्वे—**स्त्रीणाम्** । कृते तु नुटि अजादिविभक्तित्वाभावात्पुनर्नेयङ् । सप्तम्येकवचने—" स्त्री ङि " इति स्थिते " ङेराम् "—इत्यामि कृते "स्त्रियाः" इतीयङि च **स्त्रियाम्** । **स्त्रियोः** । **स्त्रीषु** । ईदन्तस्यापि श्रीशब्दस्य विशेषमाह—" श्रीः " इति । श्रिञ् सेवायाम् । " क्विब्वचि "—( ३ । २ । १७८ ) इति वार्त्तिकेन क्विप् प्रकृतेर्दीर्घश्च । श्रयन्त्येतामिति व्युत्पत्तिः । ङ्यन्तत्वाभावान्न सुलोपः । **श्रीः** **श्रियौ** । **श्रियः** । सम्बोधने "हे श्री स्" इति स्थिते सूत्रमाह-**नेयङुवङ्** इति । "यूस्त्र्याख्यौ" इत्यतो यू नदी चेत्यनुवर्त्य व्याचष्टे—**इयङुवङोः**—इति । इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः । स्थानशब्दो भावल्युडन्तः । **ज्ञानेन्द्रस्वामी** तु—तिष्ठतो ययोरिति स्थानौ । अधिकरणे ल्युट् । इयङुवङोः स्थानाविति षष्ठीसमासः इत्याह । एवमजादिविभक्तौ इयङ्योग्यत्वात् अनेन योगेन नदीसञ्ज्ञानिषेधे "अम्बार्थे"—ति न ह्रस्वः,किन्तु सस्य रुत्वविसर्गौ- **हे श्रीः** । प्रथमावदेव । "श्री अम्" इति स्थिते "अमिपूर्वः"(६ । १ । १०७) इति प्राप्तं पूर्वरूपं बाधित्वा "अचिश्नु"–(६ । ४ । ७७) इतीयङ्-**श्रियम्** । **श्रियौ** । **श्रियः** । **श्रिया** । **श्रीभ्याम्** । **श्रीभिः** । चतुर्थ्येकवचने " ङिति ह्रस्वश्च " इति ङिति नदीसंज्ञापक्षे "आण्नद्याः" इत्याट् । "आटश्च" इति वृद्धिः **श्रियै** । नदीसंज्ञाभावपक्षे-" अचिश्नु "—इतीयङ्-**श्रिये** । एवमेव ङसिङसोरपि द्वे २ रूपे साधनीये । **श्रियाः** । **श्रियः** । **श्रीभ्याम्** । **श्रीभ्यः** । **श्रियाः** । **श्रियः** । **श्रियोः** । " श्री आम् " इति स्थिते—**वामि** । " यूस्त्र्याख्यौ नदी " इति सर्वं " नेयङुवङ्स्थानावस्त्री " इति नञ्वर्जमनुवर्त्य सूत्रं व्याचष्टे—**इयङुवङ्स्थाना**विति । तदनेन नदीसंज्ञापक्षे " ह्रस्वनद्यापो " इति नुटि, उटो लोपे, णत्वे—**श्रीणाम्** । तदभावपक्षे इयङेव—**श्रियाम्** । सप्तम्येकवचनेऽपि " ङिति ह्रस्वश्च " इत्यनेन नदीत्वे " ङेराम् "—इत्यामि इयङि **श्रियाम्** । नदीत्वाभावे तु इयङ्मात्रम्—**श्रियि** । ङेरामादेशे सति नुट् तु न, अटा नुट् बाध्यते इत्यभिहितत्वात् । **श्रियोः** । **श्रीषु** । †

अथ स्त्रियामुदन्ताः । तत्र धेनुशब्दः । धेट् पाने । अस्मात् " धेट इच " (उ० ३ । ३४) इति नुः प्रत्ययः । धीयते इति **धेनुः** । 'धेनुः स्यान्नवसूतिका' **इत्यमरः** " धेनुर्गोमात्रके दोग्ध्र्याम् " इति **हैमः** ।

अस्य प्रक्रियां सुगमां मत्वा आह—**धेनुर्मतिवत्** इति । बालबोधसौकर्याय रूपाणि लिख्यन्ते—

धेनुः । धेनू । धेनवः । धेनुम् । धेनू । धेनूः । धेन्वा । धेनुभ्याम् । धेनुभिः ।

---

† " कृदिकारादक्तिनः " ( वा० ४ । १ । ४५ ) इति ङीषि तु नदीवत् श्री, श्र्यौ, श्र्यः । श्रीम्, श्रियो, श्रीः इत्यादि । भवन्ति चैवञ्जातीयकाः प्रयोगाः । " तां दृष्ट्वा श्रीमिवायतीम् " इति, " कथामिव श्रीमतिकुत्सयन्त " इति चैवमाद्येषु काव्येषु ।

धेन्वै, धेनवे । धेनुभ्याम् । धेनुभ्यः । धेन्वाः, धेनोः । धेनुभ्याम् । धेनुभ्यः । धेन्वाः, धेनोः । धेन्वोः । धेनूनाम् । धेन्वाम्, धेनौ । धेन्वोः । धेनुषु । हे धेनो । हे धेनू । हे धेनवः ।

एवं तनु–रज्जु–स्नायु–ऊरू–करेणुप्रभृतयः । क्रोष्टुशब्दस्य स्त्रियां विशेषं वक्ति–**स्त्रियां च** । "तृज्वत्क्रोष्टुः" इत्यनुवर्त्य व्याचष्टे–**स्त्रीवाची क्रोष्टुशब्द** इति । रूपातिदेशोऽयम् । एवञ्च—स्त्रियां क्रोष्टुशब्दो नास्त्येव, किन्तु क्रोष्टृशब्द ऋदन्त एवेति फलति । **ऋन्नेभ्यो ङीप्** । ऋत ऋकारः नो नकारः । प्रयोगापेक्षं बहुत्वम् । प्रातिपदिकविशेषणात् तदन्तविधिः, स्त्रियामित्यधिकारः तदाचष्टे—**ऋदन्तेभ्य**–इति । ङपावितौ । "क्रोष्टृ ई" इति जाते "इको"—इति यणि परयोगे च कृते "क्रोष्ट्री" इति जातम्, ततः स्वादिविभक्तिः । "क्रोष्ट्री सु" इति धारिते ङ्यन्तत्वात् हल्ङ्याबिति सुलोपः । **क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः** । अस्य सर्वाणि रूपाणि गौरीवत् । **इत्युदन्ताः** । अथ ऊदन्तेषु वधूशब्दः । "वहो धश्च" इत्यूप्रत्ययः हस्य धादेशः । उणादेऽसौ **वधूः** । सस्य रुत्वविसर्गौ ॥ धात्ववयवोवर्णाभावात् उवङ् न । ऊकारस्य यणादिविशेषस्तु सुगम इति मत्वा आह—"शेषं नदीवत्" इति । तथाहि–वधूः । वध्वौ । वध्वः । वधूम् । वध्वौ । वधूः । वध्वा । वधूभ्याम् । वधूभिः । वध्वै । वधूभ्याम् । वधूभ्यः । वध्वाः । वधूभ्याम् । वधूभ्यः । वध्वाः । वध्वोः । वधूनाम् । वध्वाम् । वध्वोः । वधूषु । हे वधु । हे वध्वौ । हे वध्वः । एवं जम्बू–चमू–यवागू–कद्रूप्रभृतयः । भ्रूः श्रीवत् । भ्रमत्यसौ **भ्रूः** । "भ्रमेश्च डूः" इत्यौणादिको डूः । सु शोभना भ्रूर्यस्याः सा सुभ्रूः । अस्त्रीप्रत्यान्तत्वात् "गोस्त्रियोः"—इति ह्रस्वत्वं न । अस्याप्युवङादिविशेषः सुगमः । **हे सुभ्रूः** । "नेयङुवङ्"—इति तस्य तदन्तस्य च नदीसंज्ञानिषेधे ह्रस्वाभावः । कथं तर्हि–"हा पितः क्वासि हे सुभ्रु" इति **भट्टिः** ।* प्रमाद एवायमिति बहव इति **दीक्षिताः** । **स्वयम्भूः** पुंवत् । **खलपूः** पुंवत् इत्यपिज्ञेयम् । अथ ऋदन्ताः । **न षट्स्वस्रादिभ्यः** । "ऋन्नेभ्यः" इत्यतो ङीप् "टाबृचि" इत्यतः टाप् इत्यनुवर्त्य व्याख्याति–**एभ्यः**–इति । स्वस्रादीन् दर्शयति–**स्वसा**—इति ॥

स्वसृशब्दात् "ऋन्नेभ्यः"—इति प्राप्तः ङीप् "न षट्"—इति सूत्रेण निषिद्धः । ततः प्रथमैकवचने सावानीते "ऋदुशनस्"—इत्यनङि, "अप्तृन्नि"ति सूत्रे स्वसृशब्दग्रहणात् उपधादीर्घे, सुलोपे, नलोपे—**स्वसा** ।

---

* विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः, स च विरहपोषकत्वात् काव्ये गुण इति बोध्यमिति **केचित्** । व्याकरणान्तरे तु—"सुभ्रूदीव्यजम्बार्थानां धौ ह्रस्वः" (मु० बो० १५३) इति सूत्रेण हे सुभ्रु इत्येव । अन्ये तु–"सुभ्रूशब्दस्य धौ वा ह्रस्व इति केचित्" इत्युक्त्वा हे सुभ्रूः, हे सुभ्रु इति रूपद्वयमुशन्ति । कालिदासोऽपि–"विमानना सुभ्रु ! कुतः पितुर्गृहे" इति प्रायुङ्क्त ।

स्वसारौ । स्वसारः । स्वसारम् । स्वसारम् । स्वसारौ । स्वसृः । स्त्रीत्वात् शसः सस्य न नकारः । स्वस्रा । स्वसृभ्याम् । स्वसृभिः । स्वस्रे । स्वसृभ्याम् । स्वसृभ्यः । * स्वसुः । स्वसृभ्याम् । स्वसृभ्यः । स्वसुः स्वस्रोः । स्वसॄणाम् । † स्वसरि । स्वस्रोः । स्वसृषु । हे स्वसः । **माता पितृव**दिति । अप्तृन्निति सूत्रे औणादिकतृजन्तेषु नप्त्रादीनामेव दीर्घनियमादित्याशयः । शसि **मातॄः** । स्त्रीत्वान्नत्वाभावः । अन्यानि सर्वाणि रूपाणि पितृवदेवेत्यर्थः । इत्यृदन्ताः । अथ ओकारान्तो द्योशब्दः **द्यौ**र्गोवदिति । "ओतो णित्" इति णित्वातिदेशात् "अचो ञ्णिति" इति वृद्धिः । अस्य सर्वाणि रूपाणि गोवदेव । **राः** पुंवत् । ऐकारान्तोऽयम् । "रायो हलि" इत्यात्वम् । **नौ** र्ग्लौवत् । अजादौ सर्वत्र आवादेशः । "स्त्रियां नौस्तरणिस्तरि" रित्यमरः ।

इति प्राज्ञचित्तप्रसादिन्यामजन्तस्त्रीलिङ्गप्रकरणम् ।

# अथाजन्ता नपुंसकलिङ्गाः ।

**अतोम् । ७ । १।२४ ।** अतोऽङ्गात् क्लीबात्स्वमोरम् । ज्ञानम् एङ्ह्रस्वादिति सम्बुद्धिलोपः । हे ज्ञान । **नपुंसकाच्च ।७।१।१९।** क्लीबादौङः शी । भसंज्ञायाम् । **यस्येति च । ६ । ४ । १४८ ।** ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यकारलोपे प्राप्ते । औङःश्यां प्रतिषेधः । ज्ञाने । **जश्शसोः शिः ।७।१।२०।** क्लीबात् । **शि सर्वनामस्थानम् ।१।१।४२। नपुंसकस्य झलचः ।७।१।७२।** झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने । **मिदचोन्त्यात्परः ।१।१।४७।** अचां मध्ये योन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः । **अद्ड्डतरादिभ्यःपञ्चभ्यः ।७।१।२५।** एभ्यः क्लीबेभ्यः स्वमोरद्ड्डादेशः ॥ **टेः ।६।४।१४३।** डिति भस्य टेर्लोपः । कतरत्, कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत् । कतमद् । इतरत् । अन्यत् २ । अन्यतरत् २ । अन्यतमशब्दस्य तु अन्यतममित्येव । एकतरात्प्रतिषेधः । एकतरम् । **ह्रस्वो नपुंसके प्रातिपदिकस्य ।१।२।४७।** लुक् । वारि । **इकोचिविभक्तौ**

* "ऋत उत्" इत्युकारो रपरः । रुत्वविसर्गौ । † "ऋतो ङिसर्वनामस्थानयो" रिति गुणः ।

।७।१।७३। इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी । वारीणि । न लुमतेत्यस्याऽनित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हेवारे । हेवारि । घेर्ङितीति गुणे प्राप्ते । वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन । वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ।

अथाजन्तनपुंसकलिङ्गा निरूप्यन्ते । तत्र अकारान्तनपुंसकलिङ्गो ज्ञानशब्दः । **अतोऽम्** । अत इत्यधिकृतस्य अङ्गस्य विशेषणम् । ' स्वमोर्नपुंसकात् ' इत्यनुवर्त्तते तदाचष्टे—**अतोऽङ्गात्**—इति । अदन्तादङ्गादित्यर्थः । अमोऽम्विधानं " स्वमो "—रितिप्राप्तस्य लुको बाधनार्थम् । " ज्ञा " धातोर्भावे ल्युटि ज्ञानपदसिद्धिः । ज्ञप्तिर्ज्ञानम् । ज्ञानशब्दात् " कृतद्धिते "—ति प्रातिपदिकसंज्ञायां प्रथमैकवचने " ज्ञान सु " इति स्थिते "अतोऽम्" इति सूत्रेण सोरमादेशे " ज्ञान अम् " इति ज्ञाते " अमि पूर्वः " इति पूर्वरूपैकादेशे **ज्ञानम्** । सम्बुद्धौ—" हे ज्ञान सु " इत्यत्र सोरमादेशे, अमोऽकारस्य पूर्वरूपे कृते एकादेशस्य पूर्वान्तवत्त्वेनाङ्गत्वात् ततः परस्य हल्मात्रस्य लोप इत्याशयेनाह—**एङ्ह्रस्वादिति** । हे ज्ञान । **नपुंसकाच्च** । " जसः शी " इत्यतः शी " औङः आपः " इत्यतः औङ इति चानुवर्त्त्य व्याचष्टे—**क्लीबादौङः**—इति । भसञ्ज्ञायाम्=" सुडनपुंसकस्य " इति पर्युदासेन असर्वनामस्थानत्वात् औङि " यचिभम् " इति सूत्रेण भसञ्ज्ञा प्रवर्त्तत इति भावः । **यस्येति च** । इश्च अश्च यं तस्य यस्येत्यर्थो व्याख्यानात् । " भस्य " इत्यधिकारः । चकारेण "नस्तद्धिते" (६।४।१४४) इत्यतः तद्धिते इत्यनुकृष्यते, तदाचष्टे—**इकारे**—इति । इवर्णान्तस्य ईकारे यथा—दाक्षी । इवर्णान्तस्य तद्धिते यथा—दौलेयः, आत्रेयः । अवर्णान्तस्य ईकारे यथा—कुमारी । अवर्णान्तस्य तद्धिते यथा—दाक्षिः । **इत्यकार लोप** इति । शी इत्यस्य असर्वनामस्थानत्वेन तस्मिन् परतः पूर्वस्य भत्वादिति भावः । एतत्प्रतिषेधकं वार्तिकमारभ्यते—औङःश्यामिति । औङः स्थाने यः शी आदेशः तस्मिन् परतः " यस्येति च " इति लोपस्य प्रतिषेधो वक्तव्यः इत्यर्थः । **ज्ञाने** इति । ज्ञान शब्दात् औङि आगते " ज्ञान औ " इति च स्थिते " नपुंसकस्य " इति सूत्रेण क्लीबात् " ज्ञान " रूपादङ्गात् परस्य औङः स्थाने शीभावे, शस्येत्त्वेन लोपे, " ज्ञान ई " इत्यवस्थायां " यचि भम् " इति भसञ्ज्ञायां " यस्येति च " इत्यनेन ईकारपरकत्वात् भस्याऽवर्णस्य लोपे प्राप्ते " औङ श्याम् "—इति वार्त्तिकेन तत्प्रतिषेधः, " आद्गुण " इति गुणश्च, **ज्ञाने** । प्रथमाबहुवचने " ज्ञान जस् " इति स्थापिते सूत्रस्य प्राप्तिः **जश्शसोः शि** इत्यस्य । " स्वमोर्नपुंसकात् " इत्यतो नपुंसकादनुवर्त्त्य व्याख्यानं वष्टि **क्लीबात्** इति । जसा सहचरितस्य शसो ग्रहणात् इह न भवति । कुण्डशो ददाति । वनशः प्रविशन्तीति । तदनेन सूत्रेण जसः स्थाने " शि " इत्यादेशे कृते " ज्ञान शि " इति भूतम् । ततः—शि**सर्वनामस्थानम्** इति सूत्रेण

"शि" इत्यस्य सर्वनामस्थानसंज्ञा जाता। शि इत्यविभक्तिको निर्देशः। महासञ्ज्ञाकरणं पूर्वाचार्यानुरोधेन। शस्येत्त्वेन लोपः "ज्ञान इ" इति स्थितिः। ततः सूत्रं प्रवर्त्तते—**नपुंसकस्य** इति। झल् च अच्चेति समाहारद्वन्द्वः। "इदितो नुम्"—इत्यतो नुम् इति वर्त्तते। "उगिदचाम्"—इत्यतः सर्वनामस्थाने इति च। अङ्गस्येत्यधिकृतं झलचः इत्यनेन विशेष्यते, विशेषणत्वाच्च तदन्तविधिरिति सर्वं मत्वा वृत्तिं करोति—**झलन्तस्य** इति। **मिदचो०**। स्थानेयोगप्रत्ययपरत्वस्यायमपवादः। अच इति निर्धारणे षष्ठी। जातौ चेदमेकवचनम्। ननु—पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यायमपवादोऽस्त्विति चेन्न बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इतीहाभ्युपगमात्। अन्यथा श्नमोमित्करणं व्यर्थं स्यात्। नच श्रवणार्थ एव मकारः स्यादिति वाच्यम् "तृणह इम्" (७।३।९२) इति निर्देशात्। **उपधादीर्घः** इति। "सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रेणेत्यर्थः। एवम् "ज्ञान इ" इत्यत्र नपुंसकस्येति सूत्रेण नुमः प्राप्तौ "मिदचोन्त्यात्" इत्यनेन अन्त्यस्य नकारोत्तरवर्त्यकारस्य परो नुमागमः। उभो लोपे "ज्ञान न् इ इति" जाते "सर्वनामस्थाने"—इत्यनेन नान्तपदोपधाभूतस्य नकारोत्तरवर्त्यकारस्य दीर्घे, नस्य परयोगे च कृते—**ज्ञानानि। पुनस्तद्वदिति**। यथा प्रथमा साधिता तथैव द्वितीयापि साध्येत्यर्थः। **ज्ञानम्। ज्ञाने। ज्ञानानि**। "शेषम्" इति। तृतीयादिविभक्तिषु अकारान्तरामशब्दवदित्यर्थः। **एवमिति** आदिना दर्शन—चारित्र—मूल—कुलादीनां ग्रहणम्। **अद्ड्डतरादिभ्यः**। † अद्ड् डतरादिभ्यः इति छेदः। डतरादिः सर्वाद्यन्तर्गणः। डतर-डतम—अन्य—अन्यतर—इतर इति। डतरडतमौ प्रत्ययौ। ततस्तदन्ताः शब्दा ग्राह्याः। "स्वमोर्नपुंसकात्" इति सूत्रमनुवर्त्य व्याख्याति-**पञ्चभ्यः०** इति। पञ्चभ्यः इति किम्। नेमं तिष्ठति। नेमं पश्य। डित्करणं किम्। "कतरत् तिष्ठति" इत्यत्र सवर्णदीर्घो माभूत्। **टेः**। "अल्लोऽनः" इत्यतः अल्लोप इति "तिविंशतेर्डिति" इत्यतः डिति इति चानुवर्त्य भस्येत्यधिकृतं मत्वा व्याचष्टे—**डिति** इति। कतरशब्दात् सावनीते "अतोऽम्" इत्यस्य प्राप्तौ तद्बाधकः सुस्थाने अद्ड् इत्यादेशः। डस्येत्त्वेन लोपे "कतर अद्" इति स्थिते "टे" इति भस्य टेः लोपे, रेफस्य परयोगे "वावसाने" इति पक्षे चर्त्वेन दस्य तः। **कतरत्, कतरद्** इति द्वे रूपे। **कतरे**। औङः शीः। आद्गुणः। **कतराणि**। "नपुंसकस्येति"ति नुमि, "सर्वनामस्थाने"—इति दीर्घे "अट् कुप्वाङ्"—इति णत्वे सिद्धम्। हे कतरत्। अत्र* टेर्लुप्तत्वात् "प्रथमयोः"—

---

† दस्य ष्टुत्वेन डकारः, डस्य संयोन्तलोपश्च आदेशस्वरूपावगतये न कृत इति **कैयटः**। सर्वोऽयं छान्दसातिदेशमहिमेति **वयम्**। आदेशस्वरूपावगतिस्तु फलम्।

* डित्वाभावे "टेः" इति लोपस्याप्रसक्त्या पररूपं बाधित्वा पूर्वसवर्णदीर्घः प्रसज्येतेति भावः। ननु—पूर्वसवर्णदीर्घाभावाय दकार एवादेशः क्रियतामित्यत आह—

इति पूर्वसवर्ण दीर्घः, "एङ्ह्रस्वात्"—इति सम्बुद्धिलोपश्च न भवति। **हे कतरे। हे कतराणि**। द्वितीया प्रथमावत्। **शेषं पुंवत्** इति सर्वशब्दवदित्यर्थः। एवमेव "**कतमद्**" इत्यादि साधनीयम्। **अन्यतमशब्दस्य** इति। अस्य अव्युत्पन्नप्रातिपदिकत्वात् डतमप्रत्ययान्तत्वाभावेन अद्डादेशो नेति भावः। "सामान्यादिष्वन्यतमत्तमः" इत्यादिप्रयोगाः प्रमादिका एवेति भाव इति **ज्ञानेन्द्रस्वामी**। "एकाच्च प्राचाम्" (५। ३। ९६) इति डतरान्तत्वात्प्राप्तौ वार्त्तिकमाह—**एकतरात्** इति। स्वमोरद्डादेशप्रातिषेधो वक्तव्य इत्यर्थः। **एकतरम्**। रासन्तं ज्ञानशब्दवत् शेषं सर्वशब्दवदित्याशयः। अथ क्लीबे आदन्ता निरूप्यन्ते। श्रीपाशब्दो विश्वपावत् क्विबन्तः घञन्तो वा तस्य नपुंसके ह्रस्वविधिमाह ह्रस्वो नपुंसके०। स्पष्टम्। नपुंसक इति किम्। ग्रामणीः। प्रातिपदिकस्येति किम्। काण्डे, कुड्ये। श्रीपाशब्दस्याचो ह्रस्वे कृते "श्रीप" इति जाते ज्ञानवत् प्रक्रिया इत्याह * **ज्ञानवत्** इति। **अथ इदन्ताः**। तत्र वारिशब्दः। **स्वमोर्नपुंसकात्**। "षड्भ्यो लुक्" इत्यतः लुक् इति वर्त्तते। तदाह—**लुक्** इति। "वारि सु" इति स्थिते अनेन सोर्लुकि—**वारि**। "वारि औ" इति स्थिते औङः शीभावे च, तदुत्तरं विधिमाह **इकोऽचि०**। "इदितोनुम्"—इत्यतो नुम्, "नपुंसकस्य झलचः" इत्यतो नपुंसकस्येति वर्त्तते तदाचष्टे—**इगन्तस्य०** इति। **अचि विभक्तौ** = अजादौ विभक्तावित्यर्थः। अनेन अन्त्यावयवे नुमि कृते उमोलोपे "वारिन् ई" इति स्थितिर्जाता "अट्कुप्वाङ्"—इति णत्वे **वारिणी**।

अथ "वारि जस्" इति जसः शिभावः, नुम् उमो लोपः, "सर्वनामस्थाने" इति दीर्घः, णत्वम्—**वारीणि। नलुमतेति**। अस्यायमाशयः—"हे वारि सु" इत्यत्र सोर्लुकि "न लुमता"—इति निषेधस्य * नित्यत्वात् पक्षे "ह्रस्वस्य गुणः" इति

---

**एङ् ह्रस्वादिति**। अयमाशयः। सोर्दकारादेशे सति तस्य स्थानिवत्त्वेन सम्बुद्धित्वात् ह्रस्वान्तादङ्गात्परत्वाच्च लोपः प्रसज्येत। अद्डादेशे तु टिलोपे सति "कतर्" इत्यङ्गं, न तद्ध्रस्वान्तम्, यत्तु "कर" इति ह्रस्वान्तं न तदङ्गम्। रेफादकारस्य प्रत्ययावयवत्वेन तदन्तस्य प्रत्ययपरकत्वाभावेन अङ्गत्वाभावात्, अतष्टिलोपार्थमद्डादेशविधिरेव न्याय्यः।

* ननु—"श्रीप" शब्दाच्चतुर्थ्येकवचने ङयि, ङकारस्य इत्वे लोपे "ङेर्य" इति यादेशे "सुपि च" इति दीर्घे "श्रीपाय" इति सिद्धे, अत्र यकारे पूर्वस्य भत्वात् "आतोधातोः" इत्याकारलोपः स्यादिति जायते शङ्का। उत्तरन्तु—सन्निपातपरिभाषाविरोधान्नेति ब्रूमः। अत्र अत्वजातीयमुपजीव्य जायमानस्य यादेशस्य भसंज्ञाद्वारा तज्जातीयाऽऽकारविघातनिमित्तत्वं कथं स्यात्। उपजीव्यविरोधो न न्याय्य इति भावः। न च—रामाय इत्यादौ सुपिचेति दीर्घार्थमुक्तपरिभाषाऽनित्यत्वाभ्युपगमात् इहापि तदप्रवृत्तिरेव स्यादिति वाच्यम्। "कष्टाय"—इति निर्देशेन दीर्घे तदप्रवृत्तावपि लोपे तदप्रवृत्तेर्वक्तुमशक्यत्वात्।

सम्बुद्धिनिमित्तको गुणः—**हे वारे**। पक्षे तु—**हे वारि**। शेषे प्रथमावत्। तृतीयैकवचने टायां **वारिणा**। अजादिविभक्तित्वात् नुम्। णत्वम्। **वारिभ्याम्। वारिभिः** चतुर्थ्येकवचने—"वारि ए" इति स्थापिते नुमं बाधित्वा परत्वात् "घेर्ङिति" इति गुणे प्राप्ते तद्बाधकं वार्त्तिकमाह—**वृद्ध्यौत्व०**। अतिसखीनि इत्यत्र "सख्युरसम्बुद्धौ" इति णिद्भावाद् वृद्धिः प्राप्ता, वारिणी इत्यत्र "अच्च घे" रित्यौत्वं, प्रियक्रोष्टुनि इत्यादौ तृज्वद्भावः प्राप्तः। तदनेन वार्त्तिकेन विप्रतिषिध्यते। एवञ्च प्रकृते गुणप्राप्तौ तद्विप्रतिषेधे नुमेव। णत्वम्। **वारिणे**। वारिभ्याम्। वारिभ्यः। वारिणः। वारिभ्याम्०। वारिणः। वारिणोः। "वारि आम्" इति स्थिते "ह्रस्वनद्यापो"—इति प्राप्तं नुटं बाधित्वा परत्वात् नुमि प्राप्ते पुंस्युक्तं वार्तिकं स्मारयति—**नुमचिरेति**। नुट् एव। आगते नुटि, उटो लोपे "नामि" इति दीर्घे, णत्वे **वारीणाम्**। यद्यपि नुम्नुटोः आपाततो विशेषो न प्रतीयते तथापि नुमि सति तस्याङ्गावयवत्वात् नामीति दीर्घो न स्यादिति भावः। **वारिणि। वारिणोः। वारिषु। हलादौ हरिवत्।** इति तथा प्रतिपदं दर्शितमिवास्माभिः।

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य। ७। १। ७४।** प्रवृत्तिनिमित्तक्यै भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि॥ अनादये। अनादिने। इत्यादि। शेषं वारिवत्॥

यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्त्तते।
क्लीबवृत्तौ तदेव स्यादुक्तपुंस्कं तदोच्यते॥
पीलुर्वृक्षः फलं पीलु पीलुने नहि पीलवे।
वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः॥

तस्मै पीलुने॥ न पुंवत्प्रवृत्तिनिमित्तभेदात्॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः। ७। १। ७५।** टादावचि। **अल्लोपोऽनः। ६। ४। १३४।** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याकारस्य लोपः। दध्ना। दध्ने। दध्नः २ दध्नोः २। **विभाषा ङिश्योः। ६। ४। १३६।** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याकारस्य लोपो वा ङिश्योः। दध्नि। दधनि वारिवत्। एवमस्थिसक्थ्यक्षि। सुधि। सुधिनी। सुधीनि। हे सुधे। हे सुधि। सुधिना। इत्यादि। मधु। मधुनी। मधूनि। हे मधो। हे मधु। एवमम्ब्वादयः। सुलु। सुलुनी। सुलुना। इत्यादि। धातृ। धातृणी। धातॄणि। हे धातः। हे धातृ। हे धातृणी। धातॄणाम्। एवं ज्ञातृकर्त्रादयः। **एच इग्घ्रस्वादेशे। १। १। ४८।** आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात्। प्रद्यु। प्रद्युनी। प्रद्यूनि।

**प्रद्युना इत्यादि। प्ररि। प्ररिणी। प्ररीणि। प्ररिणा॥ एकदेशविकृतमनन्यवत्। प्रराभ्यां। प्ररीणाम्। सुनु। सुनुनी। सुनूनि। सुनुनेत्यादि। इत्यजन्ता नपुंसकलिङ्गाः।**

अथ नपुंसकलिङ्गे "अनादि" शब्दः। न आदिः उत्पत्तिर्यस्य स अनादिः **ईश्वरः**। अनादिः **अविद्या**। अनादि **ब्रह्म** इति विशेष्यनिघ्नोऽयं शब्दस्त्रिलिङ्गः। अस्य क्लीबे प्रथमाद्वितीययोर्वारिवत् प्रक्रिया—**अनादि। अनादिनी। अनादीनि**। पुनरप्येवमिति। टादावचि विशेषं वक्तुं सूत्रमुपन्यस्यति—**तृतीयादिषु०**। भाषितः पुमान् यस्मिन्नर्थे स भाषितपुंस्कः। सोऽस्त्यस्येति **तद्भाषितपुंस्कम्** प्रवृत्तिनिमित्तम्। अर्शआदित्वादच्। तेनैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपमिति लब्धार्थाभिप्रायेण सूत्रं व्याचष्टे—**प्रवृत्तिनिमित्तैक्ये**—इति। "इकोऽचि विभक्तौ" इत्यतो "अचि" इत्यनुवर्त्तनीयम्। एकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कस्य शब्दस्य वा पुंवद्भाव इत्यर्थः। यस्य शब्दस्य पुंनपुंसकयोरेकप्रवृत्तिनिमित्तत्वं तस्य पुंवत्त्वमिति पर्यवसितोऽर्थः। वेति गालवग्रहणात् ज्ञेयम्। तथा च—अनादिशब्दस्य पुंसि क्लीबे च आरोपितादित्वं प्रवृत्तिमित्तमेकमेवेति भवत्येव पुंवद्भावः। पीलुशब्दस्य वृक्षे वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिः, वृक्षविशेषप्रभवत्वं वेति पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भाव इत्येतदर्थं—सङ्ग्राहकं कारिकाद्वयं लिखति—**यन्निमित्त** मित्यादि। पुंवद्भावे ह्रस्वनुमोरभावः फलमिति सारः। टादौ किम्। अनादिनी। अचि किम्। दधिभ्याम्। भाषितपुंस्कम् इति किम्। त्रपुणे। जतुने। * **अनादिना। अनादिभ्याम्। अनादिभिः**। अनादिशब्दात् चतुर्थ्येकवचने ङयि स्थापिते उक्तेन सूत्रेण पुंवद्भावपक्षे "घेर्ङिति" इति गुणे अयादेशे † **अनादये**। पुंवद्भावाऽभावपक्षे "इकोऽचि"—इति नुमि **अनादिने**। एवमन्यत्राप्यजादौ। अनादिभ्याम्। अनादिभ्यः। अनादेः, अनादिनः। अनादिभ्याम्। अनादिभ्यः। अनादेः, अनादिनः अनाद्योः, अनादिनोः। अनादीनाम्। अनादौ, अनादिनि।

---

* अत्र टायां नुमं बाधित्वा नाभावः। एवम्—आमि नुट् एवेति विशेषो ज्ञेयः।—

† इदन्तु बोध्यम्—घटपटादिशब्दास्तावत् घटत्वपटत्वादिरूपेणैव तत्तद्व्यक्तिं प्रत्याययन्ति नतु द्रव्यत्वपृथिवीत्वादिरूपेणेति निर्विवादम्। ततश्च यद्विशेषणं पुरस्कृत्य घटादिशब्दाः तत्तद्व्यक्तिषु प्रयुज्यन्ते तद्विशेषणं प्रवृत्तिनिमित्तमित्युच्यते, वाच्यतावच्छेदकमिति यावत्। एवञ्च नपुंसकत्वं लिङ्गान्तरे च यस्य एकमेव वाच्यतावच्छेदकं तत् शब्दस्वरूपं भाषितपुंस्कशब्देन विवक्षितम्। अनादिशब्दश्च उत्पत्त्यभावात्मकमनादित्वं पुरस्कृत्य स्त्रीपुन्नपुंसकतत्तद्व्यक्तिप्रत्यायक इति भवति तस्य प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कता इति **बालमनोरमा**। विस्तरस्त्वन्यत्रानुसन्धेयः।

अनाद्योः, अनादिनोः। अनादिषु। हे अनादे, हे अनादि। इत्याशयेनाह—**शेषं वारिवत्।** तस्मै पीलुने। **अत्र न पुंवदिति।** पुंसि वृक्षत्वं प्रवृत्तिनिमित्तम्। क्लीबे फलत्वमिति प्रवृत्तिनिमित्तभेद इत्यर्थः।

अथ इदन्तो दधिशब्दः। दधि। दधिनी। दधीनि। पुनरेप्यवम्। तृतीयादिषु विशेषं वक्तुमाह—**अस्थिदधि०।** तृतीयादिषु, अचि इति च पूर्वसूत्रादनुवर्त्य संक्षेपेणाह—**टादावचि** इति। **अल्लोपोऽनः।** अत इति लुप्तषष्ठीकं भिन्नं पदम्। अन इत्यवयवे षष्ठी, अतो विशेषणम् अङ्गस्य, भस्येत्यधिकृतम्—अवयवषष्ठ्यन्तमाश्रीयते इत्यधिकारद्वयफलितार्थं मत्वा व्याचष्टे—**अङ्गावयवोऽसर्व०** इति।

दधि शब्दात् टायां टस्येत्वे, लोपे "दधि आ" इति स्थिते "अस्थि दधि"—इत्यनेन नुमोऽपवादः ङित्वादन्त्यस्य इकारस्य स्थाने अनङादेशः। अङावितौ। "दध् अन् आ" इति स्थिते "अल्लोपोऽनः" अत्यनोऽकारस्य लोपे, अज्भीनस्य परसंयोगे **दध्ना।** एवं सर्वत्र अजादौ विभक्तौ प्रक्रिया ज्ञेया। **दधिभ्याम्। दधिभिः। दध्ने। दधिभ्याम्। दधिभ्यः। दध्नः। दधिभ्याम्। दधिभ्यः। दध्नः। दध्नोः। दध्नाम्।** "दधि इ" इति स्थिते। अनङादेशे जाते "दध् अन् इ" इत्यवस्थायां विशेषसूत्रमाह—**विभाषा ङिश्योः।** ङिश्च शीचेति विग्रहः। शी इति "नपुंसकाच्च" इति विहितो गृह्यते नतु "जश्शसोः शिः"। तस्मिन् परे भत्वाभावात्। "अल्लोपोऽनः" इति सर्वमनुवृत्तं मत्वाऽऽचष्टे—**अङ्गावय**—इति। तदनेन अनोऽकारस्य लोपपक्षे **दध्नि।** लोपाभावपक्षे—**दधनि। दध्नोः। दधिषु।** शेषमिति स्पष्टम्। **एवमिति।** अस्थ्यादयोऽपि दधिवदेव। अथ ईदन्तो नपुंसकलिङ्गो "सुधी" शब्दः। सु शोभना धीर्यस्य (कुलस्य) इति विग्रहे "ह्रस्वो नपुंसके"—इति। "सुधि सु" इति स्थापिते "स्वमोर्नपुंसकात्" इति सोर्लुकि-**सुधि।** सुधिनी। सुधीनि। पुनरप्येवम्। यद्यपि—औङि सुधि ई, जसि—सुधि इ इत्यवस्थायां इयङादेशप्राप्तिः तथापि परत्वात् नुमा इयङ् बाधितः। **हे सुधे हे सुधि** इति "न लुमता" इति निषेधस्यानित्यत्वात् पक्षे सम्बुद्धिनिमित्तो गुणः। **सुधिना** इति। पक्षे—सुध्यातृत्वरूपं शोभनज्ञानवत्त्वं वा प्रवृत्तिनिमित्तं पुन्नपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् "तृतीयादिषु"—इति पुंवत्पक्षे नुमभावात् "न भूसुधियोः" इतियण्निषेधात् इयङ्। **सुधिया** इत्यपि। एवम्—सुधिने, सुधिये। सुधिनः, सुधियः। सुधिनोः, सुधियोः। सुधिनि, सुधियि इति। शेषं पुंसि नपुंसके च समानम्।

अथ उकारान्तो * मधुशब्दः। "मधु मद्ये पुष्परसे" "मधुर्वसन्ते चैत्रे च" इत्यमरादिकोशप्रमाणात् पुन्नपुंसकयोर्मधुशब्दस्य मद्यत्ववसन्तत्वादिरूपं प्रवृत्तिनिमित्तं भिन्नं भिन्नमेवेति भाषितपुंस्कत्वाभावात् पुंवद्भावो नास्ति। मधु। मधुनी। मधूनि।

---

* **मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः।**
**अर्द्धर्चादिगणे पाठात्पुन्नपुंसकयोर्मधु॥**

पुनरप्येवम् । हे मधो, हे मधु । (३) मधुना । मधुभ्याम् । मधुभिः । (४) मधुने । मधुभ्याम् । मधुभ्यः । (५) मधुनः । मधुभ्याम् । मधुभ्यः । (६) मधुनः । मधुनोः । मधूनाम् । (७) मधुनि । मधुनोः । मधुषु । सर्वत्राजादौ "इकोऽचि"—इति नुमेव । आमि तु "नुमचिरे" ति नुमं बाधित्वा नुट् । **एवमश्र्वादयः** । आदिना तालु—जानु—कशेरु—त्रपुप्रभृतीनां ग्रहणम् । ऊदन्तः सुलू शब्दः । सुष्ठु लुनाति यत् कुलं तत् । "ह्रस्वो नपुंसके"—इति ह्रस्वः । स्वमोर्लुक् । **सुलु । सुलुनी** । "ओः सुपि" ( ६ । ४ । ८३ । ) इति यणं बाधित्वा परत्वात् ( ७ । १ । ७३ ) नुम् । **सुलूनि** । पुनरप्येवम् । तृतीयादिषु तु शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तमेकमेवेति पुंवत्त्वविकल्पः । तत्र टायां पुंवत्त्वे यणि—**सुल्वा** । पुंवत्त्वाभावे तु यणं बाधित्वा नुमेव—**सुलुना सुलुभ्याम् । सुलुभिः** । ङेप्रभृतिषु पुंवद्भावे यण् । अन्यत्र "वृद्ध्यौत्वतृज्वद्भाव"—इति पूर्वविप्रतिषेधेन नुम् ।

तथाहि—सुल्वे, सुलुने । सुलुभ्याम् । सुलुभ्यः । सुल्वः, सुलुनः सुलुभ्याम् । सुलुभ्यः । सुल्वः, सुलुनः । सुल्वोः, सुलुनोः । सुल्वाम्, सुलूनाम् । सुल्वि, सुलुनि । सुल्वोः, सुलुनोः । सुलुषु । हे सुलु । अथ ऋकारान्तो धातृशब्दः । दधाति यत् कुलं तत् दधाति वा सकलं प्रपञ्चमधिष्ठानभावेन इति **धातृ** ब्रह्म, स्वमोर्लुक् । "नलुमता"—इति निषेधात् "ऋदुशनस्"—इत्यनङादेशो न भवति । **धातृणी** । "इकोऽचि" इति नुमि "ऋवर्णान्नस्य णत्वम्"—इति णकारः । **धातॄणि**—"जश्शसोः शि" इति शिभावे नुमि, "सर्वनामस्थाने"—इति दीर्घे, णत्वे च सिध्यति । पुनरप्येवम् । सम्बुद्धौ तु—"न लुमता"—इति निषेधस्याऽनित्यत्वात् सम्बुद्धिनिमित्तको ह्रस्वस्य गुणः । **हे धातः । गुणाभावे, हे धातृ** । धातृशब्दस्य धारणपोषणकर्तृत्वरूपं प्रवृत्तिनिमित्तमेकमेवेति पुंवत्त्वविकल्पः । तेन तृतीयादिष्वाचि द्वे द्वे रूपे । **धात्रे, धातृणे । धातुः २, धातृणः २ । धात्रोः २ धातृणोः २** । हलादौ पुंवत् । आमि तु "नुमचिरतृज्वद्भाव" इति पूर्वविप्रतिषेधेने नुटि "नामि" इति दीर्घे-**धातॄणाम् । धातरि, धातृणि । एवमिति** । आदिना नेतृ—भर्तृ—हर्तृ प्रभृतीनां ग्रहः । अथ "प्रद्यो" शब्दः । प्रकृष्टा द्यौः यस्मिन्नहनि । "ह्रस्वो नपुंसके"—इत्यनेन ह्रस्वप्राप्तावपि एचां ह्रस्वाभावादिदमारभ्यते—**एच इग्घ्रस्वादेशे** । अस्यायमाशयः । एचां पूर्वभागोऽकार सदृशः, उत्तरस्तु इवर्णोवर्णसदृशः तत्रोभयान्तरतमस्य ह्रस्वस्याभावात् पर्यायेण अकारः स्यात् इकारोकारौ च स्याताम्, तथा च मा कदाप्यकारो भूदिति नियमार्थेयं परिभाषा । एवञ्च—आन्तरतम्यात् * एकारैकारयोः इकारः । ओकारौकारयोः उकारः । तदनेन

---

* एकारान्तस्योदाहरणन्तु—इः स्मृतो येन सः **स्मृतेः** । सु शोभनः स्मृतेः यस्य तत् **सुस्मृति** इत्यादि । एतच्च परिभाषासूत्रमपार्थकम्—तथाच वार्तिककारेणोक्तम् "सिद्धमेङः सस्थानत्वात् ऐचोश्चोत्तरभूयस्त्वात्" इति । अस्यार्थः शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इउवर्णावेवेति सिद्धम् । एचोश्चेति चकारो भिन्नक्रमः उत्तर-

"प्रद्यो" शब्दस्य ओकारस्य उकारे ह्रस्वादेशे कृते, प्रथमाया एकवचने सावानीति, "प्रद्यु सु" इति स्थिते "स्वमो"—रिति सोर्लुकि **प्रद्यु। प्रद्युनी। प्रद्यूनि।** पुनरप्येवम्। इह न पुंवत्, यदिगन्तं "प्रद्यु" इति तस्य भाषितपुंस्कत्वाभावात् †टादावचि सर्वत्र नुम्। मधुशब्दवत्। ऐकारान्तः "प्रै" शब्दः। प्रकृष्टा राः धनं यस्य कुलस्य तत्। "प्रै" इत्यस्य ह्रस्वत्वे "प्रि" इति जातम्। एतस्य प्रथमा द्वितोया च वारिवत्। टायाम्—प्रिणा। हलादौ सर्वत्र एकादेशविकृतस्यानन्यत्वात् "रायो हलि" इत्यात्वम्। प्राभ्याम्। प्राभिः। प्रिणे। प्राभ्याम्। प्राभ्यः। प्रिणः। प्राभ्याम्। प्राभ्यः। प्रिणः। प्रिणोः। आमि—"प्रि आम्" इति स्थिते "इकोऽचि"—इति नुमि प्राप्ते "नुमचिर"—इति पूर्वविप्रतिषेधेन नुट्। उटो लोपे, "रायो हलि" इत्यात्वे **प्राणाम्** इति **माधवः।** वस्तुतस्तु—सन्निपातपरिभाषया नुटि आत्वं न। "नामि" दीर्घस्त्वारम्भसामर्थ्यात् सन्निपातपरिभाषां बाधते इति इकारस्य दीर्घे **प्रीणाम्।** प्रिणोः। प्रिषु। सम्बोधनम्—हे प्रे, हे प्रि। ०।

इति प्राज्ञचित्तप्रसादिन्यामजन्तनपुंसकलिङ्गम्।

—:❀:—

# अथ हलन्ताः पुंल्लिंगाः।

**हो ढः ।८।२।३१। झलिपदान्ते च। लिट्। लिड्। लिहौ २ लिहः। लिड्भ्याम्। लिट्सु। लिट्त्सु। दादेर्धातोर्घः ।८।२।३२। झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः॥ एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७। धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। इह व्यपदेशिवद्भावेन धात्ववयवत्वाद् भष् भावः। धुक्। धुग्। दुहौ। दुहः। दुहा। धुग्भ्याम्। धुक्षु॥ वा द्रुहमुहष्णुहष्णिहाम् ।८।२।३३। एषां हस्य वा घो झलि पदान्ते च। ध्रुक्। ध्रुग्। ध्रुट्। ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्यां। ध्रुड्भ्यां। ध्रुक्षु। ध्रुट्सु ध्रुट्त्सु॥ एवं मुहः॥ धात्वादेः षः सः ।६।१।६४। स्नुक्। स्नुग्। स्नुट् २ एवं ष्णिहः॥ इग्यणः संप्रसारणम्॥ १।१।४५॥**

---

भूयस्त्वाच्चेति हेतोरनन्तरं बोध्यः। अर्धमात्रा अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मल्लग्रामादिवद् भूयसा व्यपदेशेनापि इकारोकारौ भविष्यत इति **ज्ञानेन्द्रस्वामी।**

† प्राचा तु प्रद्यवा, प्राया, सुनावा इत्याद्युदाहृतम्। एजन्तेषु पुंवद्भावो नास्तीति **माधवः।** मतान्तरे त्वस्तीति संक्षिप्तसारः।

**यणः स्थाने प्रयुज्यमानो य इक्स संप्रसारणसंज्ञः स्यात्॥ वाह ऊठ् ।६।४।१३२। भस्य वाहः संप्रसारणमूठ्॥ संप्रसारणाच्च ।६।१।१०८। संप्रसारणादचि पूर्वरूपमेकादेशः। वृद्धिः। विश्वौहः। इत्यादि।**

अथ हलन्तपुंलिङ्गप्रकरणे वर्णसमाम्नायक्रममनुसृत्य हकारान्ता निरूप्यन्ते। **होढः।** ह इति षष्ठ्यन्तम्। ढः प्रथमान्तम्। "झलो झलि" "स्कोः" इत्यतः 'झलि, अन्त" इति चानुवर्त्तते। -'पदस्य" इत्यधिकृतम् तदाचष्टे—**झलि०।** झलि परतः पूर्वस्य पदान्ते वा विद्यमानस्य हस्येत्यर्थः। "लिह्" आस्वादने। क्विप्। लेढीति "लिट्"। लिह् शब्दो हान्तः। "कृदि"—ति प्रातिपदिसंज्ञा। प्रथमैकवचने "लिह् सु" इति। "हल्ङ्याप्" इति सुलोपे, पदान्तत्वात् अनेन हस्य ढः "लिढ्" इति जातम्। "झलां"—इति ढस्य जश्त्वेन स्थानसाम्यात् डकारप्राप्तौ "वावसाने"—इति पक्षे चर्त्वेन टकारोऽपि। **लिट् लिड्।** अजादौ सर्वत्र "अज्झीनम्"—इति। **लिहौ। लिहः। लिहम्। लिहौ। लिहः। लिहा।** भ्यामादिहलादौ "स्वादिष्वि"ति पदत्वे "होढ" इति ढत्वे "झलां"—इति जश्त्वेन डः। लिड्भ्याम् लिड्भिः। लिहे। लिड्भ्याम्। लिड्भ्यः। लिहः। लिड्भ्याम्। लिड्भ्यः। लिहः। लिहोः। लिहाम्। लिहि। लिहोः। सप्तमी-"लिह सु" इति, हस्य ढत्वे, ढस्य जश्त्वेन डे "खरि च" इति चर्त्वस्याऽसिद्धत्वात्, ततः प्रागेव "ङःसि"—इति पक्षे धुट् सच टित्त्वादाद्यवयः। उटः इत्त्वेन लोपे, धस्य चर्त्त्वेन तः, ततो ढस्य चर्त्त्वेन टः। "लिटत्सु" इत्येकं रूपम्। धुडभावे हस्य ढः, तस्य जश्त्वेन डः, तस्य चर्त्त्वेन टः *। **लिट्सु** इत्यपरं रूपम्। एवमेवाग्रेपि लक्ष्यानुसारं बोध्यम्। सम्बोधनं प्रथमावत्। **दादेर्धातोः०।** "होढः" इत्यतो "ह" इति षष्ठ्यन्तमनुवर्त्तते। "झलि, पदस्य, अन्ते च" इत्यपि पूर्ववत्। "धातो" रित्यावर्त्तनीयम्। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेन सूत्रं व्याख्याति—**झलि**—इति। "होढः" इत्यस्यापवादोऽयम्। उपदेश इति, धातूपदेशकाले यो दकारादिर्धातुः तदवयवस्य हस्येत्यर्थः। उपदेशे किम्। "अधोक्" इत्यत्र यथा स्यात्। दामलिहमात्मनः इच्छति दामलिह्यति। ततः क्विपि दामलिट् अत्र माभूत्। **एकाचोबशोभष्०।**

"दादेर्धातोः" इत्यतो धातोरित्यवयवषष्ठ्यन्त मनुवर्त्तते तत् "झषन्तस्य" इत्यनेनान्वेतव्यम्। "पदस्य" इत्याधिकारः "स्को"—रित्यतः "अन्ते" चेति वर्त्तते इति मत्वा वृत्तिं करोति **धात्ववयवस्य**—इति। **इह व्यपदेशि०।** विशिष्टोऽपदेशो व्यपदेशः = मुख्यव्यवहारः। सोऽस्यास्तीति व्यपदेशी, तेन तुल्यं व्यपदेशिवत्। धातावेव धात्ववयवो गौणः "राहोः शिरः" इतिवदित्याशयः। भष्भाव इति। क्विपः प्राक्प्रवृत्तायाः धातुसञ्ज्ञाया निरपवादत्वेनावस्थितत्वात् "दादे"—रिति

---

* धुटश्चर्त्वस्याऽसिद्धत्वात् पक्षे "चयो द्वितीयाः"—इति तस्य थो न। ष्टुत्वं तु तकारस्य न शङ्क्यमेव "न पदान्तात्" इति निषेधस्य जागरूकत्वात्।

घत्वे कृते झषन्तत्वादिति भावः। दोग्धीति "धुक्"। क्विप्। "दुह् सु" इति हल्ङ्यादिना सुलोपे, पदान्तत्वात् ढापवादे "दादे"—रिति हस्य घे "दुघ्" इति जाते झषन्तत्वात् "एकाचो"—इति भष्भावेन दस्य धे, ततो जश्त्वचर्त्वे—**धुक्, धुग्** इति सौ रूपद्वयम्। यद्यपि क्विबन्तात् दुहेः सोर्लोपे "दादे"—रिति घत्वे "दुघ्" इति समुदायस्य पूर्वावयवो यो "दु" इत्येकाच् तस्य झषन्तत्वाभावात्, "उघ्" इत्यन्तावयवे तु न बश्, "दुघ्" इति त्ववयवो नास्ति किन्त्ववयवसमुदायोऽवयवी, अतो भष्भावो न सम्भवी तथापि व्यपदेशिवद्भावेन एकस्मिन्नप्यवयवव्यवहारो गौण आश्रित इति न दोषः। दुहौ। दुहः। दुहम्। दुहौ। दुहः। दुहा। भ्यामादौ "दुह् भ्याम्" इत्यादि स्थितौ "दादे"—रिति हस्य घत्वे स्वादिष्विति पदत्वे भष्भावे, "धुघ्भ्याम्" इत्यादि जाते "झलां"—इति जश्त्वेन घस्य गः। धुग्भ्याम्। धुग्भ्यः। दुहे। धुग्भ्याम्। धुग्भ्यः। दुहः। धुग्भ्याम्। धुग्भ्यः। दुहः। दुहोः। दुहाम्। दुहि। दुहोः। सप्तमी बहुवचने "दुह्सु" इति पूर्ववत् घत्वे, भष्भावे च कृते "झलां"—इति जश्त्वेन गः। तस्य "खरि च" इति चर्त्वस्यासिद्धत्वात् "आदेशप्रत्यययोः" इति षत्वे, चर्त्वे—**धुक्षु**। **वाद्रुह०**। "द्रुह" जिघांसायाम्, "मुह" वैचित्ये, "ष्णुह" उद्गिरणे, "ष्णिह" प्रीतौ। द्रुहेर्दादित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते उभयत्र विभाषेयम्। "दादे"—रित्यतो "घ" इति वर्त्तते, झलीत्याद्यपि पूर्ववत्। एषाम् = द्रुहादीनां चतुर्णाम्। **ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्**, घत्वे, पक्षे ढत्वे भष्भावे च चर्त्वविकल्पे रूपचतुष्टयम्। अत्र भष्भावार्थमेव "होढः" इति सूत्रे "ढ" एव विहितो नतु डः। तथासति झषन्तत्वाभावात् भष्भावो न स्यात्। अजादौ सुपि—**द्रुहम्, द्रुहः**" इत्यादि। भ्यामादौ–घत्वपक्षे भष्भावे **ध्रुग्भ्याम्** इत्येवमादि। ढत्वपक्षे भष्भावे—**ध्रुड्भ्याम्**। इत्यादि द्वे द्वे रूपे। सप्तमीबहुवचने "द्रुह् सु" इति स्थिते घत्वे भष्भावे "आदेश" इति षत्वे, "खरि च" इति चर्त्वे—**ध्रुक्षु** घत्वाभावपक्षे तु—हस्य ढत्वे भष्भावे। ढस्य जश्त्वेन। डे, "डः सि"—इति धुटि, उटो लोपे "ध्रुड् ध् सु" इति, "खरि च" इति चर्त्वेन डस्य टः, धस्य तः, हलोः प्रयोगे "**ध्रुट्त्सु**" इति रूपम्। धुडभावे तु त्वत्वे "**ध्रुट्सु**" इति। **एवं मुह** इति। भष्भाववर्जं द्रुहशब्दवत् मुह्शब्दस्यापि रूपाणि। मुक्, मुग्, मुट्, मुड् इत्येवमादीनि ज्ञेयानि। **धात्वादेः**। धातोरादेः षकारस्य स्थाने सकारादेशो भवतीत्यर्थः। धातु ग्रहणं किम्। षोडश। षडिकः। आदेरिति किम्। कर्षति कृषति। अनेन सूत्रेण ष्णुहः षस्य सत्वम्। सिद्धिस्तु भष्भाववर्जं द्रुह्शब्दवत्। **एवमिति**। स्निक्, स्निग्, स्निट्, स्निड् इत्येवमादि स्नुह्शब्दवत् प्रक्रियेत्यर्थः। अथ हकारान्तो † विश्ववाह्-

† विश्वं वहतीत्यर्थे "वहश्च" (३। २। ६४) इति सूत्रेण ण्विः प्रत्ययः। णकार इत् वेर्लोपः। "अत उपधाया" (७। २। ११६) इति वृद्धिः। उपपदसमासः।

शब्दः । " विश्ववाह् सु " इति स्थिते हल्ङ्यादिलोपे "होढः" इति ढत्वे "वावसाने" इति चर्त्वविकल्पे—**विश्ववाट्, विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहम् ।** "विश्ववाहौ । द्वितीयाबहुवचने " विश्ववाह् अस् " इति स्थिते—शसादावचि सम्प्रसारणकार्यं विधातुं सम्प्रसारणसंज्ञामाह—**इग्यणः०** इति । " इग्यो यणः स्थाने भूतो भावी वा तस्य "सम्प्रसारण" मित्येषा संज्ञा भवतीति **जयादित्यः । वाह ऊठ् ।** "भस्य" इत्यधिकृतम् । "वसोः"–इत्यतः "सम्प्रसारणम्" इत्यनुवर्त्त्य " ऊठ् " इत्यनेनान्वीय व्याचष्टे—" भस्य इति । **सम्प्रसारणाच्च ।** " इको "—इत्यतः अचीति " अमि पूर्वः " इत्यतः पूर्व इति वर्त्तते तदाचष्टे—**सम्प्रसारणादचि**—इति । **वृद्धिरिति ।** " एत्येधत्यूठ्सु " इत्यनेनेत्यर्थः । "विश्व-वाह अस् " इत्यत्र " यचिभम् " इति पूर्वस्य भत्वे " वाह "—इति संम्प्रसारणं प्राप्तम् । तत्र किं नाम " सम्प्रसारणम् " इति जिज्ञासायाम्—" इग्यणः " वस्य यणः स्थाने जायमानस्य ऊकारस्य सा सञ्ज्ञेति ज्ञाते, तस्मिन् सति, " विश्व ऊ आ अस् " इति जाते "सम्प्रसारणाच्च" इति आकारस्य पूर्वरूपे—"विश्व ऊह् अस् इति स्थिते ' आत् '—गुणे प्राप्ते "एत्ये"—इति ऊठि परे पूर्वपरयोर्द्वयोरचोः स्थाने आन्त-र्यात् औकारो वृद्धिः, ततः शसः सस्य रुत्वविसर्गयोः सतोः—" **विश्वौहः** " इति रूपम् । एवं सर्वत्राजादौ प्रक्रिया । हलादौ तु—" होढ " इति ढत्वे, तस्य यथायोगं जश्त्वचर्त्वे ज्ञेये । विश्वौहा । विश्ववाड्भ्याम् । विश्ववाड्भिः । विश्वौहे । विश्वौहः २ । विश्वौहोः । विश्वौहाम् । विश्वौहि । विश्ववाट्सु, विश्ववाट्त्सु । सम्बोधनं प्रथमावत् ।

**चतुरनडुहोरामुदात्तः ।७।१।९८। सर्वनामस्थाने । सावन-डुहः ।७।१।८२।नुम् । आच्छीनद्योर्नुम् इति सूत्रादादित्यधिकाराद-वर्णात्परोयं नुम् । अतो विशेषविहितेनापि नुमा आम् न बाध्यते, आमा च नुम् न बाध्यते । संयोगान्तलोपः । नुम्विधिसामर्थ्याद्वसु-स्रंस्विति दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । अनड्-वान् । अम्सम्बुद्धौ ।७।१।९९। चतुरनडुहोः । हे अनड्वन् । अन-ड्वाहौ । अनडुहः । वसुस्रंसुध्वंस्वनडुहां दः ।८।२।७२। सान्तव-स्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । पदान्ते किम् । स्रस्तम् ध्वस्तम् । सहेः साडः सः ।८।३।५६। साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः । तुराषाट् । तुराषाड् । तुरासाहौ । तुरा-षाड्भ्यामित्यादि ॥ दिव औत् ।७।१।८४। दिविति प्रातिपदिकस्या-न्त्स्यात्सौ । सुद्यौः । सुदिवौ ॥ दिव उत् ।६।१।१२३। पदान्ते । सुद्यु-भ्यामित्यादि । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः२ । षड्चतुर्भ्यश्च ।७।१।५५। एभ्य आमो नुडागमः स्यात् । रषाभ्यां नो णः समा-**

नपदे ।८।४।१। चतुर्णाम्। रोः सुपि ।८।३।१६। रोरेव विसर्जनीयः सुपि। चतुर्षु ॥ मो नो धातोः।८।२।६४। पदान्ते। प्रशान्। प्रशामौ। किमः कः ७।२।१२०। विभक्तौ। कः। के। इत्यादि।

**चतुरनडुहोः**। "इतोऽत्" इत्यतः "सर्वनामस्थाने" इति वर्त्तते। **सावनडुहः**। "आच्छीनद्योर्नुम्" इत्यतो "नुम्" इत्यनुवर्त्त्यम्। अस्य नुम् स्यात्सौ परे इत्यर्थः। "अनडुह् सु" इति स्थिते "चतुरनडुहो०"—इति मित्त्वात् डकारोत्तरवर्त्युकारात् अन्त्यादचः परः "आम्" इत्यागमे—"अनडु आम ह् सु" इति भूते मस्येत्त्वेन लोपे "सावनडुहः" इति नुमि उमो लोपे "अनडु आ न् ह् सु" इत्यवस्थायां "इको"—इति डकारोत्तरवर्त्तिन उकारस्य वकारे यणि हलः परयोगे "अनड्वान् ह् सु" इति स्थिते "हलङ्याब्भ्यो"—इति सुलोपे, "संयोगान्तस्य"—इति हलोपे, "न लोपः"—इति नलोपप्राप्तौ "पूर्वत्रासिद्धम्" इति न्यायेन संयोगान्तलोपसूत्रस्य (८।२।२३) न लोप (८।२।७) सूत्रस्याग्रेऽसिद्धत्वात् न लोपाऽभावे—"**अनड्वान्**" इति सिद्धम्। अत्राशङ्क्यते—ननु आम् नुम् च एतौ द्वावपि मित्त्वात् अन्त्यादचः उकारात्परौ प्राप्तौ तत्र "चतुरनडुहोः"—इत्याम् सर्वनामस्थाननिमित्तकत्त्वेन सामान्यविहितः यथा "लिङः सीयुट्" (३।४।१०२) इति सामान्यविहितः सीयुट्। नुम् तु "सावनडुहः" इति सूत्रेण सर्वनामस्थानविशेषे सुमात्रे विहित्वात् विशेषविहितः। यथा—"यासुट् परस्मैपदेषूदात्तो ङिच्च" (३।४।१०३) इत्यनेन लिङः परस्मैपदानामेव यासुट्। एवं विशेषविहितेन यासुटा सामान्यविहितः सीयुडिव नुमा आम् बाध्यताम्, एवं सति "अनडुन्" इत्याकारकं रूपं स्यात् "अनड्वान्" इति मा भूत् इत्यरिकायां समाधानफक्किकां लिखति—**आच्छीनद्यो**रिति। अस्मात् सूत्रात् "सावनडुहः" इति नुम्विधायके सूत्रे "आत्" इति पञ्चम्यन्तं पदमनुवर्त्तते, ततश्च—"अनडुहोऽवर्णात् परो नुम् स्यात् सौ" इति सूत्रार्थलाभात् विशेषविहितेनापि "सावनडुहः" इति नुमा "चतुरनडुहोः"—इति सामान्यविहितः आम् न बाध्यते। एवमत्र उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभाव एव नास्तीति भावः। ननु—"अनड्वान् ह् सु" इत्यत्र सुलोपे, हस्य संयोगान्तलोपे, नुमो नकारस्य "वसुस्रंसु"—इति दकारः स्यात् इत्याशङ्कायां सिद्धान्तफक्किकामाह—"**नुम्विधि०**" इति। अस्यायमाशयः। यद्यत्र नुमो नस्य दत्वं चिकीर्षितं, तर्हि नुमोऽभावेऽपि "अनड्वाह्" इत्यवस्थायां हकारस्य दत्वे "अनड्वाद्" इत्याकारकं रूपं सिद्ध्यत्येवेति व्यर्थो नुम्विधिपरिश्रमः। अतो निश्चीयते यस्मादत्र नुम् विहितः अत एवात्रोक्तेन सूत्रेण दत्वं न। **संयोगान्तेति** हकारलोपस्याऽसिद्धत्वे सति नकारस्य प्रातिपदिकान्तत्वाभावात् पदान्तत्वाभावाच्च नलोपे नेत्यर्थः। **अम्सम्बुद्धौ**। "चतुरनडुहो" रिति वर्त्तते तदाचष्टे—**चतु**रिति। सम्बुद्धौ "हे अनडुह् स्" इति स्थिते आमागमे प्राप्ते तदपवादः "अम् सम्बुद्धौ" इत्यम्। स च मित्त्वादन्त्यादचः परः। ततः "सावनडुहः" इति नुम्। मस्य लोपः,

उमोलोपश्च। यण्। "हे अनड्वन् ह स्" इति सति सुलोपे। संयोगान्तलोपश्च--"**हे अनड्वन्**" इति सिद्धम्।
प्रथमाद्विवचने "अनडुह् औ" इति स्थिते "चतुरनडुहोः"—इति सर्वनामस्थानत्वात् आम्। नुम् तु न तस्य सावेव विहितत्वात्। मस्य लोपे, यणि, **अनड्वाहौ। अनड्वाहः। अनड्वाहम्। अनड्वाहौ**। शसादावचि सर्वत्र अविकल एव अनडुह्शब्दः, केवलं हकारस्य परस्मिन् अचि योगः—**अनडुहः अनुडुहा**। भ्यामादौ हलि तु विशेषमाचष्टे—**वसुस्रंसु०**। इति वस्वितिप्रत्ययः तेन तदन्तं ग्राह्यम्। "स सजुषोः" इति सूत्रात् सेत्यनुवर्त्तते, तच्च वसोरेव विशेषणम्, नतु स्रंसुध्वंसोरव्यभिचारात्, नाप्यनडुहः असम्भवादित्यभिप्रेत्याह—**सान्तवस्वन्तस्येति**। पदस्येत्यधिकृतम्। "अनडुह् भ्याम्" इति स्थापिते "स्वादिष्वि-" ति पदत्वे, अनेन सूत्रेण अलोन्त्यपरिभाषया सहैकवाक्यतया हस्य दः—अनडुद्भ्याम्। अनडुद्भिः। अनडुहे। अनडुद्भ्याम् अनडुद्भ्यः। अनडुहः। अनडुद्भ्याम। अनडुद्भ्यः। अनडुहः। अनडुहोः। अनडुहाम्। अनडुहि। अनडुहोः। सप्तमीबहुवचने दत्वे, "खरि च" चर्त्वेन दस्य तः। अनडुत्सु। पदान्तग्रहणफलं पृच्छति—**पदान्ते किम्** इति। उत्तरमाह—**स्रस्त**मित्यादि। क्तप्रत्ययान्तौ प्रयोगाविमौ, अत्र पदान्तत्वाभावात् न दकारः। अन्यथा "स्रत्तम्, ध्वत्तम्" इत्यशुद्धं स्यादिति भावः। अथ हकारान्तः "तुरासाह्" शब्दः। तत्र विशेषं वक्तुमाह—**सहेः साडः सः**। "साड" इति कृतढत्व-डत्व-वृद्धेरनुकरणम्। सहेरिति इक्प्रत्ययान्तः धातुनिर्देशात्। तदेतदाचष्टे—**साड्रूपस्येति** "तुरासाह्" शब्दात् "सौ" धृते हल्ङ्यादिलोपे "होढ" इति हस्य ढत्वे, जश्त्वेन डत्वे, अनेन सस्य षत्वं विवृतप्रयत्नसाम्यात्। चर्त्वपक्षेऽपि मूर्धन्यादेशः "साड" इति कृतजश्त्वनिर्देशस्य पदान्तोपलक्षणत्वात्। सुलोपः। पक्षे चर्त्वम्—**तुराषाड्, तुराषाट्**। अजादावव्भीनम्। तुरासाहौ। * तुरासाहः। तुरासाहम्। तुरासाहौ। तुरासाहः। तुरासाहा। तुराषाड्भ्याम्। तुराषाड्भिः। भ्यामादावपि ढत्वे, जश्त्वेन डे सस्य षत्वम्। सुपि तु—धुड्विकल्पे चर्त्वम्। स्पष्टमन्यत्। तुराषाट्सु, तुराषाट्त्सु। अन्येऽपि रत्नदुह्-कामदुह्-गुणदुह्-मित्रद्रुह्प्रभृतयो हान्ता हलन्ते पुंसि यथालक्षणं साधनीयाः। इति **हान्ताः**। अथ वकारान्ताः। तत्र दिव् शब्दः स्त्रीलिङ्गः। "द्योदिवौ द्वे स्त्रियामभ्र" मित्यमरः। सु शोभना द्यौर्यस्य यस्मिन् वा वासरे स इति बहुव्रीहौ पुंसि "सुदिव्" शब्दः। ततः प्रथमैकवचने "सुदिव् स्" इति स्थापिते सूत्रं प्राप्तम्—**दिव औत्**। "सावनडुहः" इत्यतः "सौ" इति वर्त्तते। **प्रातिपदिकस्येति**। अव्युत्पन्नस्य "दिवेर्डिविः" इति न्यासोद्दितसूत्रेण

---

* तुरं वेगवन्तं साहयति अभिभवतीति ण्यन्तात् सहेः "क्विप्" (३।२।७६) इति क्विप्। "अन्येषामपि"—(६।३।१३७) इति पूर्वपदस्य दीर्घः। तुराषाट्=इन्द्रः। "तुराषाण्मेघवाहनः" इत्यमरः।

व्युत्पन्नस्य वा ग्रहणम् । नतु " दिवु " क्रीडादौ इति धातोः । " निरनुबन्धकग्रहणे न सानुबन्धकस्य " इति परिभाषया । तेन " अक्षद्यूः " इत्यादौ न भवति * । तकार उच्चारणार्थः । अतएव अनेकाल्त्वप्रयुक्तो न सर्वादेशः । एवम्—अनेन सूत्रेण वकारस्य औकारादेशे, इकारस्य यणि, सस्य रुत्वे, रेफस्य विसर्गे **सुद्यौः** । अजादौ सर्वत्र अन्भीनम् । **सुदिवौ** । **सुदिवः** । सुदिवम् । सुदिवौ । सुदिवः । तृतीया—सुदिवा । तृतीयाया द्विवचने भ्यामि " सुदिव् भ्याम् " इति स्थिते सूत्रमाह—**दिव उत्** । पदान्तादित्यनुवृत्तं सप्तम्या विपरिणम्यते इति मत्वाह—**पदान्ते** इति । दिवोन्तादेश उकारः स्यात् पदान्ते इत्यर्थः । उत् इति तपरकरणन्तु—"भाव्यमान उकारः सवर्णग्राहकः" इति ज्ञापनार्थमिति "तित्स्वरितम्" (६।१।१८५) इति सूत्रे भाष्ये स्पष्टमिति **बालमनोरमा** । तदनेन भ्यामादौ पदसञ्ज्ञत्वात् वकारस्य पदान्तविषयकत्वात् उकारान्तादेशः । यण् । परयोगः । सुद्युभ्याम् । सुद्युभिः । सुदिवे । सुद्युभ्याम् । सुद्युभ्यः । सुदिवः । सुद्युभ्याम् । सुद्युभ्यः । सुदिवः । सुदिवोः । सुदिवाम् । सुदिवि । सुदिवोः । सुद्युषु । सम्बोधनं प्रथमावत् । एवमेव—प्रियदिव्-अतिदिव्प्रभृतयः । इति वान्ताः । अथ रेफान्तः संख्यावाची चतुर्शब्दः " चतेरुरन् " इत्युणादिषु व्युत्पादितः । अस्य नित्यं बह्वर्थवाचकत्वात् जसादयः । " चतुर् जस् " इति स्थिते ' चतुरनडुहो '—इत्युकारात्पर आम् । उकारस्य यण् । रेफः परेणाकारेण सङ्गतः "चत्वार स्" इति जाते सस्य रुत्वविसर्गौ । **चत्वारः** । शसि—चतुरः । इत्यादि । षष्ठीबहुवचने—"चतुर् आम्" इति स्थिते ह्रस्वाद्यन्तत्वाभावात् नुटि अप्राप्ते सूत्रमारभ्यते—**षट्चतुर्भ्यश्च** । "आमि"—इत्यतः आम् इति अनुवर्त्य षष्ठ्या विपरिणमय्य व्याख्याति—**एभ्यः** इति । **रषाभ्यां नो०** । स्पष्टम् । " षड् "—इति सूत्रेण आमो नुटि, उटो लोपे, " चतुर् न आम् " इति जाते " रषाभ्याम् "—इति नस्य णत्वे—**चतुर्णाम्** । **रोः सुपि** । " खरवसानयोः "—इत्यतः " विसर्जनीय " इत्यनुवर्त्तते । सप्तमीबहुवचने " चतुर् सु " इति स्थिते स्वादिष्विति पदान्तत्वात् " खरवसानयोः "—इति रेफस्य विसर्गे प्राप्ते " रोः सुपि " इति विसर्गस्य निषेधः । ततः रेफस्य इण्त्वेन "आदेशप्रत्यययोः—" इति षत्वम् । **चतुर्षु** । अथ रेफान्तः "सुवार्" शब्दः । सु शोभनं वाः यस्मिन् देशे सः । " सुवार् स् " इति स्थिते संयोगान्तलोपे " खरवसानयोः "—इति रेफस्य विसर्गः सुवाः । सुवारौ । सुवारः । सुवारम् । सुवारौ । सुवारः । सुवारा । सुवार्भ्याम् । सुवार्भिः । सुवारे । सुवार्भ्याम् । सुवार्भ्यः । सुवारः । सुवार्भ्याम् । सुवार्भ्यः । सुवारः । सुवारोः । सुवाराम् । सुवारि । सुवारोः । सुवार्षु । सम्बोधनं प्रथमावत् । एवं सुद्वारादयः । इति रान्ताः । लान्तेषु—कमलं कमलां वा आचष्टाणः " कमल् " कमलौ । कमलः । कमलम् इत्यादि

---

* न च तत्रान्तरङ्गत्वात् ऊठेव स्यात् न तु औत्वप्रसक्तिरिति वाच्यम् । ऊठि कृतेऽपि एकदेशविकृतन्यायेन दिव औदित्यस्यापि प्रसक्तिसम्भवादिति दिक् इति **तत्त्वबोधिनी** ।

षत्वम् । कमल्पु । अथ मकारान्तः प्रशाम् शब्दः । प्रपूर्वात् " शमु " धातोः क्विप् । "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५) इति दीर्घः । **मो नो धातोः** । "पदस्य" इत्यधिकृतम् इत्याह **पदान्त** इति । " प्रशाम् सु " इति स्थिते " हल्ङ्याब्भ्य "—इति सुलोपे " मो नो "—नस्य मत्वे **प्रशान्** इति । प्रशामौ । प्रशामः । प्रशामम् । प्रशामौ । प्रशामः । प्रशामा । प्रशान्भ्याम् । प्रशान्भिः । प्रशामे । प्रशान्भ्याम् । प्रशान्भ्यः । प्रशामः । प्रशान्भ्याम् । प्रशान्भ्यः । प्रशामः । प्रशामोः । प्रशामाम् । प्रशामि । प्रशामोः । प्रशान्सु । सं० प्र० वत् । एवं—प्रदाम्—प्रकाम्—प्रतामादयः । अथ "किम्" शब्दः । **किमः कः** । " अष्टन आ विभक्तौ " इत्यतो विभक्तौ इति वर्त्तते । किमः कः स्याद्विभक्तावित्यर्थः * अकच्सहितस्याप्ययमादेशः " किम् सु " इति स्थिते अनेन " क " इत्यादेशे सर्वशब्दवत् सर्वा प्रक्रिया ज्ञेया । रूपाणि तु—कः । कौ । के । कम् । कौ । कान् । केन । काभ्याम् । कैः । कस्मै । काभ्याम् । केभ्यः । कस्मात् । काभ्याम् । केभ्यः । कस्य । कयोः । केषाम् । कस्मिन् । कयोः । केषु । इति मत्वा आह—**इत्यादि इति** ।

**इदमो मः । ७ । २ । १०८ ।** सौ । त्यदाद्यत्वापवादः ॥ **इदोऽय् पुंसि । ७ । २ । १११ ।** इदम इदोऽय् सौ पुंसि । अयम् । त्यदाद्यत्वम् ॥ **अतो गुणे । ६ । १ । ९७ ।** अपदान्तादतो गुणे पररूपमेकादेशः । **दश्च । ७ । २ । १०९ ।** इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः । **अनाप्यकः । ७ । २ । ११२ ।** अककारस्येदम इदोऽनापि विभक्तौ । आबिति प्रत्याहारः । अनेन ॥ **हलि लोपः । ७ । २ । ११३ ।** अककारस्येदम इदोऽनापि हलादौ ॥ **नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे ॥ आद्यन्तवदेकस्मिन् । १ । १ । २१ ।** एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपिचेति दीर्घः । आभ्याम् ॥ **नेदमदसोरकोः । ७ । १ । ११ ।** अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एभिः । अस्मै । एभ्यः २ । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । एषु ॥ **द्वितीयाटौस्स्वेनः । २ । ४ । ३४ ।** इदमेतदोरन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं

* इमोऽकाराविधौ तु साकच्कस्य " कक " इति रूपं स्यादिति भावः । " मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनो " रित्यमरः । अत्र कशब्दस्य किंशब्दत्वाभावात् न सर्वनामत्वम् । वेधसि तु किंशब्दोऽप्यस्ति तस्य सर्वनामत्वमस्ति, नास्तीति पक्षद्वयम् " कस्येत् " इति ( ४।२।२५ ) सूत्रे भाष्ये स्पष्टम् ।

**विधातुं पुनरुपादानमन्वादेशः। यथानेन व्याकरणमधीतम्, एनं छन्दोध्यापयेति। अनयोः पवित्रं कुलम्, एनयोः प्रभूतं स्वमिति। एनम्। एनौ। एनान्। एनेन। एनयोः २।**

* इदम् शब्दे विशेषं वक्ति—**इदमो मः**। "सौ" इति। "तदोः सः सा"—इत्यतः "सौ" इति वर्त्तते। "इदमो मस्य मः स्यात् सौ परे" इत्यर्थः। "त्यदाद्यत्वापवादः" इति। "त्यदादीनामः" इत्यस्य बाधकं सूत्रमेतादित्यर्थः। **इदोऽय् पुंसि**। "यः सौ" इत्यतः "सौ" इति वर्त्तते। "इदः" इत्यवयवषष्ठी इदम्शब्दस्य अवयवो य "इद्" तस्य "अय्" इत्यादेशः। "इदम् स्" इति स्थिते "त्यदादीनामः" इत्यत्वे प्राप्ते "इदमो"—इति मस्य म एव। ततः—"इदोऽय्"—इति "इद्" इत्यस्य स्थाने "अय्" इत्यादेशः। अय् अम् स्" इति जाते यस्य पराऽकारयोगे हल्ङ्यादिना सोर्लोपे—**अयम्**। "इदम् औ" इति स्थिते त्यदाद्यत्वे "इद अ औ" इति जाते सूत्रं प्रवर्त्तते—"**अतो गुणे**" इति†। "एङि पररूपम्" इत्यतः पररूपमिति। "उस्यपदान्तात्" इत्यतः अपदान्तात् इति च वर्त्तते। "पूर्वपरयो" रित्यधिकृतम् तदाचष्टे—**अपदान्तात्**—इति। तदनेन पररूपैकादेशे कृते "इद औ" इति स्थिते उत्तरं विधिमाह—**दश्च**। "इदमो म" इति सर्वं वर्त्तते। "अष्टन आ"—इत्यतो मण्डूकप्लुत्या "विभक्तौ" इति च, तद्व्याख्याति—**इदम०** इति। एवमनेन दस्य मादेशे कृते "इम औ" इति जाते वृद्धिः। इमौ। इमे। इमम्। इमौ। इमान्। **त्यदादे**" रिति। प्रचुरप्रयोगादर्शनमेवात्र बीजम्। टादावचि विशेषं वक्ति। **अनाप्यकः**। अन्, आपि, अकः, इति छेदः। आविति प्रत्याहारो नतु टाप् विभक्ताविति विशेषणात् अतो व्याचष्टे—**अककारस्ये**त्यादि। आपि विभक्तौ = हलादिविभक्तावित्यर्थः। तृतीयैकवचने "इदम् आ" इति स्थिते, त्यदाद्यत्वे, पररूपे, इदः "अन्" इत्यादेशे "अन आ" इति जाते "टाङसि"—इति टाया इनादेशे, आद्गुणे च—**अनेन** इति सिद्धम्। **हलिलोपः**। "आप्यक" इति पूर्वसूत्रादनुवृत्तम्। "इदमो"—इत्यतः "इदमः" इति, "इदोय्"—इत्यतः "इद" इति, अष्टनः"—इत्यतो "विभक्ता" वित्यनुवर्त्त्य व्याचष्टे—**अककारस्ये**ति। **नानर्थके०**। परिभाषेयम्। अनर्थके अलोन्त्यविधिर्न अभ्यासविकारं वर्जयित्वेति सरलार्थः। **आद्यन्तवदेकस्मिन्**। सत्यन्यस्मिन् यस्य पूर्वो नास्ति स आदिः। सत्यन्यस्मिन् यस्य परो नास्ति सोऽन्त इति लोके प्रसिद्धम्। तदुभयमेकस्मिन्नसहाये न सम्भवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि न स्युरतोऽयमतिदेश आरभ्यते। इदम्शब्दात् तृतीयाद्विवचने भ्यामि "इदम् भ्याम्"

---

* "इन्देः कमिर्नलोपश्च"। इदम्।

† "अकः सवर्णे दीर्घ" इत्यस्यापवादोऽयम्। अत इति किम्। यान्ति। गुण इति किम्। अपचे। अपदान्तादित्येव। दण्डाग्रम्।

इति स्थिते त्यदाद्यत्वे, पररूपे च, "अनाप्यकः" इति सूत्रेण इदः स्थाने अनादेशप्राप्तौ तद्बाधकेन "हलिलोप" इत्यनेन टादिहलादिविभक्तिपरत्वात् "इद्" इत्यस्य लोपे "अ" मात्रमवशिष्टम्। "अ भ्याम्" इति च जातम्। अत्र यद्यपि "हलि"— इति सूत्रेण लोपप्राप्तौ अलोन्त्यपरिभाषया "द्" इत्येतस्यैव लोपप्रसक्तिः तथापि "नानर्थके =" अनर्थकेऽलोन्त्यपरिभाषाया न प्रवर्त्तते इति इदम्शब्दे "इद्" इत्यस्यानर्थकत्वात्। अत "इद्" इत्यस्य सर्वस्यैव लोपः। ततः "सुपि च" इति दीर्घप्राप्तिः। परन्तु "अ भ्याम्" इत्यवस्थायाम् अङ्गस्य अकाररूपत्वात् अदन्तत्वाभावात् यद्यपि दीर्घो नार्हति भवितुम् तथापि "आद्यन्तव"—इति सूत्रेण असहायेऽपि आद्यन्तप्रयुक्तकार्यं भवत्येवेति उक्तेन सूत्रेण दीर्घे सति=**आभ्याम्** इति सिद्धम्। एवं तृतीयाबहुवचने "इदम् भिस्" इति स्थिते त्यदाद्यत्वे, पररूपे, "हलि" इति इदो लोपे 'अ भिस्' इति स्थिते 'अतो भिस' इति भिसः ऐसादेशे प्राप्ते तद्बाधकं सूत्रम्—**नेद**०। "अतो भिस"—इत्यतो "भिस ऐस्" इति वर्त्तते तदाचष्टे—"**अककारयो**" रिति। एवमनेन ऐस्भावे निषिद्धे "बहुवचने" इति अकारस्य एत्वे "**एभिः**" इति सिद्धम्। चतुर्थ्येकवचने "इदम् ङे" इति स्थिते त्यदाद्यत्वे, पररूपे "इद ए" इति जाते ङेर्यादेशं बाधित्वा "सर्वनाम्नः स्मै" इति स्मैभावे **अस्मै। आभ्याम्।** पूर्ववत्। **एभ्यः।** अस्य—त्यदाद्यत्वे, पररूपे, हलिलोपे "बहुवचने"—इति एत्वे सिद्धिः। **अस्मात्।** त्यदाद्यत्वे, पररूपे, हलिलोपे, "ङसिङयोः"—इति स्मादादेशः। **आभ्याम्। एभ्यः।** पूर्ववत्। **अस्य।** त्यदाद्यत्वे, पररूपे, हलिलोपे "ङसिङयोः"—इति स्यादेशः। षष्ठीद्विवचने "इदम् ओस्" इति स्थिते त्यदाद्यत्वे, पररूपे, "अनाप्यकः" इति अनादेशे "अन ओस्" इति जाते "ओसि च" इत्येत्वे अयादेशः। **अनयोः।** आमि तु—त्यदाद्यत्वे, पररूपे "आमि सर्वनाम्नः"—इति सुटि उटोलोपे, "हलिलोप" इति इहदोलोपे "बहुवचने" इति एत्वे "आदेश"—इति षत्वे **एषाम्।** सप्तम्येकवचने "इदम् ङि" इति स्थिते त्यदाद्यत्वे, पररूपे, "ङसिङयोः"—इति ङिस्थाने स्मिन् इत्यादेशे हलिलोपे **अस्मिन्। अनयोः।** पूर्ववत्। "इदम् सु" इति त्यदाद्यत्वे, पररूपे, हलिलोपे एत्वे, षत्वे च **एषु। द्वितीयाटौस्स्वेनः।** द्वितीया च, टा च, ओश्च द्वितीयाटौसः। तेष्विति द्वन्द्वः। "इदमोऽन्वादेशे" इत्यतः इदम् इति अन्वादेश इति च वर्त्तते। "एतदस्त्रतसोः" इत्यतः एतद इति च। तदाचष्टे—**इदमेतदो**० इति। अन्वादेशशब्दं व्याख्याति **किञ्चिदिति।** विधातुम् = अपूर्वं बोधयितुम्। अन्वादेशमुदाहृत्य दर्शयति—**यथेति** प्रयोगसिद्ध्यंशे तु द्वितीयायाम्, टायाम्, ओसि च "एन्" इत्यादेशः। साधनप्रकारस्तु "अन्" इत्यादेशपत्नवत्। तदेवं स्वयं रूपाणि दर्शयति—"**एनौ**" इत्यादिना। उदाहरणञ्चान्यत्रापि यथा—

**इमं विद्धि हरेर्भक्तं विद्ध्यथैनं शिवार्चकम्।**
**इमाविमान् वित्त शैवानेनावेनांस्तु वैष्णवान्॥**
**अनेन पूजितः कृष्णोऽथैनेन गिरिशोऽर्चितः।**

अनयोः केशवः स्वामी शिवः स्वामी अथैनयोः॥

इत्यादि ज्ञेयम्।

**राजा॥ न ङिसंबुद्ध्योः ८।२।८। नस्य लोपो न ङौ संबुद्धौ च। हे राजन्॥ ङावुत्तरपदे प्रतिषेधः। ब्रह्मनिष्ठः। राजानौ राजानः। राजानं। राजानौ। जञोर्ज्ञः) राज्ञः॥ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२। सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र, राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न। राजभ्याम्। राजभिः। राजभ्यः। राज्ञि। राजनि। यज्वा। यज्वानौ। यज्वानः। न संयोगाद्वमन्तात्। ६।४।१३७। वमान्तसंयोगादनोऽकारस्य लोपो न। यज्वना। यज्वना। यज्ज्वभ्याम्। ब्रह्मणः।**

अथ नकारान्तेषु राजन् शब्दः राजृ दीप्तौ। "कनिन् युवृषि" (उ०।१।१५६) इत्यौणादिकः कनिन् प्रत्ययः। राजते इति राजा। **राजा** प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रे च पुंसि स्यात्" इति **मेदिनी**। अस्य प्रथमैकवचने "राजन् स्" इति स्थिते हल्ङ्यादि (६।१।६८) लोपापेक्षया परत्वात् पूर्वमेव "सर्वनामस्थाने" (६।४।८) इति दीर्घे "राजान् स्" इति जाते ततो हल्ङ्यादिलोपः। राजा। सम्बुद्धौ "हे राजन् स्" इति स्थिते हल्ङ्यादिना सुलोपे नस्य पदान्तत्वात् "न लोपः"—इति लोपे प्राप्ते तद्वारकं सूत्रमाह—**न ङिसम्बुद्ध्योः**। "न लोप"—इति सूत्रमनुवर्तते। तदाचष्टे—**नस्येति**। तदनेन नलोपे निषिद्धे—**हे राजन्**। ब्रह्मणि निष्ठा यस्य स **ब्रह्मनिष्ठः**। अत्र समासे "सुपोधातु"—इति ङेर्लुकि "प्रत्ययलक्षणमाश्रित्य" न ङिसम्बुद्ध्योः" इति नकारलोपो माभूदित्याशङ्कायां वार्त्तिकमाह—"ङावुत्तर"—इति) उत्तरपदे परतो यो ङि तस्मिन् परे "न ङि"—इति नलोपप्रतिषेधस्य प्रतिषेधो वक्तव्यः अर्थात् एतादृशस्थले नलोपो भवत्येव। एवं "चर्मतिल" इत्यादावपि। "राजन् औ" इति स्थिते "सर्वनामस्थाने"—इति उपधादीर्घे—**राजानौ**। एवम् **राजानः**। सम्बुद्धावप्येवम्। **राजानम्। राजानौ**। द्वितीयाबहुवचने शसि "राजन् अस्" इति स्थिते "अल्लोपोऽनः" इत्यनोऽकारलोपे "स्तोश्चुना"—इतिश्चुत्वेन नस्य ञे "राज्ञ् अस्" इति सति "जञोर्ज्ञः" इति जकारञकारयो रुभयोर्योगे "ज्ञ्" ध्वनिविशेषे जाते, तस्य परयोगे सस्य रुत्वविसर्गौ। **राज्ञः**। एवं सर्वत्राजादौ विभक्तौ बोध्यम्। **राज्ञा** "राजन् भ्याम्" इति स्थापिते "स्वादिषु"—इतिपदसंज्ञत्वात् नलोपे कृते "सुपिचे" ति दीर्घभावः प्राप्तः, एवमेव—"राजन् भिस्" इत्यत्र नलोपे "अतो भिस"—इत्यैस्भावः, "राजन् भ्यस्" इत्यत्र नलोपे "बहुवचने"—इत्येत्वं प्राप्तम् अतः सूत्रान्तरमारभते—'**नलोपः**'—इति सुपः स्थाने विधिः सुब्विधिः, सुपि विधिः सुब्विधिरिति उभयथापि विग्रहः। विधि-

शब्दो भावसाधनः । विधानं विधिरिति । **नान्यत्रेति ।** 'पूर्वत्राऽसिद्धम्' इत्यनेनैव असिद्धत्वे सिद्धे सूत्रमिदम्—'एष्वेवासिद्धः' इति । "तत्र चान्यत्र च प्राप्तौ परिसंख्या" इति लक्षणलक्षित * परिसंख्यार्थमेव । तत्रैषु सिद्धत्वात् सूत्रमन्यत्र निषेधार्थमेवेति सूत्रविधेयमाह—**नान्यत्रेति ।** 'सुब्विध्यादिभिन्ने नलोपोऽसिद्धो न' इति फलितम् । अन्यत्रेत्युदाहरणे दर्शयति—**राजाश्व** इति । अत्र—सवर्णदीर्घविधेः सुब्विध्यनन्तर्भावात् तत्कर्त्तव्यनलोपस्यासिद्धत्वाभावे सति, नकारलोपस्य सत्वात् सवर्णदीर्घो निर्बाध इति भावः । आदिना 'दण्डयश्व' इत्यादेः सङ्ग्रहः । प्रकृते सूत्रस्य फलितमाह—**इत्यसिद्धत्वादिति ।** सुपि परतो दीर्घविधिः, भिसः ऐस्विधिः, भ्यसि एत्वविधिश्च एते सुबाश्रयविधयः । एषु कर्त्तव्येषु "पूर्वत्रासिद्धम्" इति नलोपस्याऽसिद्धत्वान्न दीर्घादिकमित्यर्थः । राजभ्याम् । राजभिः । राज्ञे । राजभ्याम् । राजभ्यः । राज्ञः । राजभ्याम् । राजभ्यः । राज्ञः । राज्ञोः । राज्ञाम् । सप्तम्येकवचने—" राजन् इ " इत्यवस्थायाम्—"विभाषा ङिश्योः" इति विकल्पेन अल्लोपः । तत्र अल्लोपपक्षे नस्य श्चुत्वे "अज्ञोर्ञः" इति ञे वर्णे "अन्भीनम्"—**"राज्ञि"** इत्येकं रूपम् । अल्लोपाऽभावपक्षे तु केवलं नकारस्य परत्र योगे—**" राजनि "** इत्येव । एवं मूर्धन्—उक्षन्—तक्षन् प्रभृतयः । अथ नकारान्तो "यज्वन्" शब्दः । "सुयजोर्ङ्वनिप्" । इष्टवान् इति **यज्वा ।** अस्य स्वादिपञ्चसु राजवत्प्रक्रिया । यज्वा । यज्वानौ । यज्वानः । यज्वानम् । यज्वानौ । द्वितीयाबहुवचने—" यज्वन् शस् " इति स्थिते शस्येत्त्वेन लोपे " अल्लोपोऽनः " इति वकारोत्तरवर्त्त्यकारलोपे प्राप्ते तत्प्रतिषेधकं सूत्रमाह—" **न संयोगा** "—इति । वश्च म् च वमौ । तावन्ते यस्य । " अल्लोपोऽनः " इति सूत्रमनुवर्त्तते तदाचष्टे—**वमान्तेति** । तदनेन वकारान्तसंयोगपरस्य अनोऽकारस्य लोपाऽभावे नस्य परवर्त्तिनि अकारे निविष्टे—यज्वनः । एवं सर्वत्राजादौ । भ्यामादौ हलि तु राजवत् । यज्वना । यज्वभ्याम् । यज्वभिः । यज्वने । यज्वभ्याम् । यज्वभ्यः । यज्वनः । यज्वभ्याम् । यज्वभ्यः । यज्वनः । यज्वनोः । यज्वनाम् । यज्वनि । यज्वनोः । यज्वसु । हे यज्वन् । हे यज्वानौ । हे यज्वानः । मान्तसंयोगस्य । उदाहरणमाह—" **ब्रह्मण** " इति । ब्रह्मन्शब्दस्यापि शसादावचि अल्लोपो नेत्याशयः ।"अट्कुप्वाङ्"—इति णत्वम् । शेषं राजवत् । सर्वासु विभक्तिषु रूपाणि यथा—ब्रह्मा । ब्रह्माणौ । ब्रह्माणः । ब्रह्माणम् । ब्रह्माणौ । ब्रह्मणः । ब्रह्मणा । ब्रह्मभ्याम् । ब्रह्मभिः । ब्रह्मणे । ब्रह्मभ्याम् । ब्रह्मभ्यः । ब्रह्मणः । ब्रह्मभ्याम् । ब्रह्मभ्यः । ब्रह्मणः । ब्रह्मणोः । ब्रह्मणाम् । ब्रह्मणि । ब्रह्मणोः । ब्रह्मसु । हे ब्रह्मन् । ० । ब्रह्मा=प्रजापतिः । "वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापति" **रित्यमरः** । एवं सुशर्मन्—श्रीवर्मन्—प्रभृतयः ।

---

* वस्तुतस्तु—अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव नियमविधित्वम् । अतएव " पञ्चपञ्चनखा भक्ष्या " इत्यत्र पञ्चानां पञ्चनखप्राणिनां भक्षणनियमे तदितरेषां पञ्चनखानां भक्षणप्रतिषेधो गम्यते इति पस्पशायां प्रपञ्चितम् ।

**इन्हन्पूषार्यम्णां शौ । ६ । ४ । १२ ।** एषां शावेवोपधाया दीर्घः ॥ **सौ च । ६ । ४ । १३ ।** इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ । वृत्रहा । हे वृत्रहन् । **एकाजुत्तरपदे णः । ८ । ४ । १२** एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णत्वं स्यात् । वृत्रहणौ । वृत्रहणः । **हो हन्तेर्ञ्णिन्नेषु । ७ । ३ । ५४ ।** ञिति णिति प्रत्यये ने च परे हन्तेर्हस्य कुत्वं स्यात् । **हन्तेः । ८ । ४ । २२ ।** उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णो नान्यस्य । प्रहण्यात् । **अत्पूर्वस्य । ८ । ४ । २२ ।** हन्तेरत्पूर्वस्यैव नस्य णो नान्यस्य । प्रघ्नन्ति । योगविभागसामर्थ्यात् "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायं बाधित्वा "कुमति च" (८ । ४ । १३) इति णोपि निवर्त्तते । वृत्रघ्नः । इत्यादि । एवं शार्ङ्गिन्यशस्विन्अर्यमन्पूषन् ॥ **मघवा बहुलम् । ६ । ४ । १२८ ।** मघवन्शब्दस्य वा तृ इत्यन्तादेशः । ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः । ७ । १ । ७० ।** अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने । मघवान् । इह उपधादीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति बहुलग्रहणात् । मघवन्तौ । मघवतः मघवता । तृत्वाभावे सुटि राजवत् । **श्वयुवमघोनामतद्धिते । ६ । ४ । ११३ ।** अन्नन्तानामेषामतद्धिते परं संप्रसारणं स्यात् । मघोनः । मघवभ्यामित्यादि । एवं श्वन् युवन् । **न संप्रसारणे संप्रसारणम् । ६ । १ ३७ ।** यूनः । युवभ्यामित्यादि ।

अथ नकारान्तो वृत्रहन्शब्दः । वृत्रं हतवान् इत्यर्थे "ब्रह्मभ्रूणवृत्रेषु क्विप्" (३।२।८७) इति क्विप् । कपावितौ । अपृक्तलोपः । उपपदसमासः । "सुपोधातु"—इत्यमो लुक् । वृत्रहन् शब्दः । अस्य प्रथमैकवचने "वृत्रहन् सु" इति स्थिते "सर्वनामस्थाने"—इत्युपधादीर्घे प्राप्ते तन्निषेधार्थमाह—**'इन्हन्'** इति । "ढ्रलोपे"—इत्यतो दीर्घ इति "नोपधायाः" इत्यत उपधाया इति चानुवर्त्त्य व्याचष्टे—**एषामिति** "शावेवे"ति नियमः । शेरन्यत्र नेत्यर्थः । तथा च—शेः सर्वनामस्थानत्वादेव दीर्घे सिद्धे पुनर्विधानमितरव्यावृत्त्यर्थं, नियमार्थमेवेति भावः । एवमनेन उपधादीर्घस्य अप्राप्तौ आह—**सौ च** । पूर्वसूत्रमनुवर्त्तते । तदाचष्टे—**इन्नादीनामिति** । शावेवेतिनियमेन दीर्घेऽप्राप्ते विध्यर्थमिदमित्याशयः । एवम् हकारोत्तरवर्त्तिन अकारस्य दीर्घे हल्ङ्यादिना सुलोपे—**वृत्रहा । हे वृत्रहन्** । सम्बुद्धौ निषेधान्न दीर्घः । "सौ च" इति सूत्रे असम्बुद्धौ इत्यनुवर्त्तत इति भावः । **एकाजुत्तर०** । समासस्य चरमावयवे उत्तरपदशब्दो रूढः ।

एकः अच् यस्मिन् तत् एकाच् । तत् उत्तरपदं यस्य स "एकाजुत्तरपदः" इति बहुव्रीहिगर्भो बहुव्रीहिः । उत्तरपदशब्दस्य समासे रूढत्वात् तदाक्षिप्तसमासोऽनेन विशेष्यत इति मत्वा व्याचष्टे—**एकाजुत्तरपदमिति** । प्रथमाया द्विवचने "वृत्रहन् औ" इति स्थिते उपधादीर्घस्तु न भवति उक्तनियमात्, किन्तु "एकाजुत्तर"—इति सूत्रेण नस्य णत्वम् अत्र एकाजुत्तरपदं हन्, तादृशः उपपदसमासः । पूर्वपदं वृत्रेतिपदम्, तत्स्थं निमित्तं नाम णत्वनिमित्तं रेफः, ततः परः प्रातिपदिकान्तस्थो नः, तस्य णकार इति घटितं लक्षणम् । अज्झीनम् । वृत्रहणौ । वृत्रहणः । वृत्रहणम् । वृत्रहणौ द्वितीयाबहुवचने "वृत्रहन् अस्" इति स्थिते "अल्लोपोऽनः" इत्यल्लोपे "वृत्रह्न् अस्" इति जाते सूत्रमारभ्यते—**हो हन्ते**"—इति । हः इति स्थानषष्ठी । हन्तेरित्यवयवषष्ठी । ञ्च णच्च ञ्णौ । तावितौ ययोः तौ ञ्णितौ । तौ च नश्च ञ्णिन्नाः, तेष्विति विग्रहः । "चजोः कुघिण्यतोः" इत्यतः कुग्रहणमनुवर्त्तते तदाचष्टे—**ञ्णितीति** । तदनेन हकारस्य नकारपरत्वात् कुत्वम् । तत्र घोषवतो नादवतो महाप्राणस्य हस्य तादृशवर्गचतुर्थो घकारः । वृत्रघ्न् अस्" इति जातम् । झोः परयोगे सस्य रुत्वविसर्गौ—**वृत्रघ्नः** इति सिद्धम् । अत्र नस्य णत्वे प्राप्ते "हन्तेरत्पूर्वस्य" इति सूत्रं योगविभागेन व्याचष्टे—**हन्तेः** इति । "रषाभ्यां"—इति सर्वमनुवर्त्तते । "उपसर्गादसमासेऽपि" इत्यतः उपसर्गादिति च । तात्स्थ्यात् ताच्छब्द्यम् इत्याह—**उपसर्गस्थादिति** । उदाहरति—प्रहण्यात् । अत्र भिन्नपदस्थत्वात् अप्राप्ते णत्वे वचनम् । प्रकृतोपयुक्तमाचष्टे—**अत्पूर्वस्य** । उपसर्गस्थादिति तु निवृत्तम् । सिद्धे सत्यारम्भो नियमार्थः इति तदाचष्टे—**अत्पूर्वस्यैवेति** । प्रघ्नन्ति । प्रपूर्वात् हन्तेर्लट्, झिः । झोन्तः । शप् । लुक् । "गमहनजन"—( ६ । ४ । ९८ ) इत्युपधालोपः । "हो हन्तेः"—इति कुत्वम् । अत्र उपसर्गस्थरेफपरत्वात् "हन्तेः" इत्यनेन प्राप्तं णत्वम् "अत्पूर्वस्य" इति नियमकरणान्न भवति । "वृत्रघ्न" इत्यत्र तु "प्रातिपदिकान्तम्विभक्तिषु च" इत्यादि णत्वं निवर्त्तते । ननु—"वृत्रघ्न" इत्यत्र "अनन्तरस्य"—इति न्यायेन "अत्पूर्वस्य" इत्यनेन "हन्तेः" इति प्राप्तमव्यवहितं णत्वमेव निवर्त्तते नतु "कुमति च" इति प्राप्तमपीत्याशङ्कायां सिद्धान्तफक्किकामाह—**योगविभागसामर्थ्यादिति** । "हन्तेरत्पूर्वस्य" इत्यकेनैव योगेन णत्वसिद्धौ पृथक् योगकरणसामर्थ्यात् उक्तन्यायं बाधित्वा "अत्पूर्वस्य" इत्यनेनात्र प्रवृत्तियोग्यणत्वविधायकशास्त्रमात्रस्य बाधान्न णत्वमिति भाव इति संक्षेपः । **एवमिति** । आदिना वृत्रहन्—भ्रूणहन्—दण्डिन्—करिन् प्रभृतीनां ग्रहणम् । **अर्यमणि, अर्यम्णि** । **पूषणि, पूष्णि** । "विभाषाङिश्योः" इत्यनेन वा अल्लोपः । **वोपदेवस्तु**—"पूष्णो ङिर्ङिर्वा" इति सूत्रयित्वा "पूषि" इत्यपि मेने । मघवन्शब्दे विशेषमाचष्टे—**मघवा बहुलम्** । "अर्वणस्त्रसौ"—इत्यतः "तृ" इत्यनुवर्त्तते लुप्तप्रथमाकम् । "मघवा" इति षष्ठ्यर्थे प्रथमा । तदाचष्टे—**मघवन्** इति । * **ऋ इदिति** । "उपदेशेऽजनुनासिकः"—इत्यनेनेत्संज्ञक

---

* "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषां स्मारयतीत्यर्थः ।

इत्यर्थः । **उगिदचां सर्वनामस्थाने०** । उक् इत् येषां ते उगितः । " अच " इति लुप्तनकारस्य " अन्चु " गतिपूजनयोरिति धातोर्ग्रहणम् । व्याख्यानात् । अधातो-रिति उगिद्विशेषणम् नत्वञ्चतेरसम्भवात् । "इदितोनुम् धातोः" इति सर्वमनुवर्त्तते तदा-चष्ट—**अधातो**रिति । सर्वनामस्थान इति किम् । भवतः पश्य । उगिदचामिति किम् । दृषत् । दषदौ । दृषदः । अञ्चतिग्रहणं नियमार्थं अञ्चतेरेव धातोः अन्यस्य माभूत्— उखास्रत् । पर्णध्वत् । मघवन् शब्दस्य प्रथमैकवचने " मघवन् सु " इति स्थिते " मघवा "—इति सूत्रेण पक्षे " तृ " इत्यन्तादेशे " मघवतृ स् " जातम् । ऋ इत् । लोपश्च । " मघवत् स् " इत्यवस्थायाम् " उगिदचाम् "— इति अन्त्याचः परो नुम् । उभोलोपश्च । ततः—" मघवन् त् स् " इति जाते हल्-ङ्यादिना सुलोपे " मघवन् त् " इति स्थितौ " संयोगान्तस्य " इति तलोपे " सर्व-नामस्थाने "—इति उपधादीर्घे **मघवान्** इति रूपम् । इह दीर्घे कर्त्तव्ये संयोगान्त-लोपस्याऽसिद्धत्वं न भवति बहुलग्रणात् । एवं—" मघवन् औ " इति स्थिते " तृ " इत्यन्तादेशे, ऋकारस्य इत्त्वेन लोपे, " उगिदचाम् "—नुमि, उभो लोपे, हलोः परयोगे **मघवन्तौ** । एवमेव—मघवन्तः । मघवन्तम् । मघवन्तौ । शसादौ सर्वनामस्थाना-भावान्न नुम् । मघवतः । मघवता । भ्यामादौ हलि त्रादेशे " स्वादिषु "—इति पद-त्वात् जश्त्वम् । मघवद्भ्याम् । मघवद्भिः । मघवते । मघवद्भ्याम् । मघवद्भ्यः । मघवतः मघवद्भ्याम् । मघवद्भ्यः । मघवतः । मघवतोः । मघवताम् । मघवति । मघवतोः । सुपि त्रादेशे जश्त्वे "खरिच" इति चर्त्वम् । मघवत्सु । तृत्वाभावपक्षे तु—'मघवन् सु' इत्यत्र 'सर्वनामस्थाने'— इत्युपधादीर्घे हल्ङ्यादिना सुलोपे—**मघवा** राजवत् । मघवानौ । मघवानः । मघवानम् मघवानौ । शसादावचि "मघवन् अस्" इत्येवमादिस्थिते "अल्लोपोऽनः" इत्यनोऽकारलोपे प्राप्ते सूत्रमारभ्यते—**श्वयुवमघो०** । श्वा च, युवा च, मघवा च इति द्वन्द्वः । "वसोः सम्प्र-सारणम् " इत्यतः सम्प्रसारणमनुवर्त्तते । अङ्गस्येत्याधिकृतम् । " अल्लोपोऽनः " इत्य-तोऽपकृष्टम् " अन " इति श्वयुवमघोनाम् प्रत्येकं विशेषणं, ततस्तदन्तविधिरित्या चष्टे—**अन्नन्तानाम्** इति । तदनेन " इग्यणः सम्प्रसारणम् " इति वकारस्य उकारः सम्प्रसारणम् " मघ उ अन् अस् " इति च स्थितिर्जाता " सम्प्रसारणाच्च " इत्यकारस्य पूर्वरूपे, आद्गुणे, नस्य परयोगे "मघोनस्" इति स्थिते सस्य रुत्वविसर्गौ— **मघोनः** । एवमेव सर्वत्राजादौ विभक्तौ प्रक्रिया ज्ञेया । हलादौ तु " स्वादिषु "— इति पदत्वात् " नलोपः "—इति नलोपो ज्ञेयः । मघोना । मघवभ्याम् । मघवभिः । मघोने । मघवभ्याम् । मघवभ्यः । मघोनः । मघवभ्याम् । मघवभ्यः । मघोनः । मघोनोः । मघोनाम् । मघोनि । मघोनोः । मघवसु । सम्बोधनं राजवत् ।

**एवं श्वन्** इति । श्वा । श्वानौ । श्वानः । श्वानम् । श्वानौ । " श्वन् अस् " इति स्थिते " श्वयुव "—इति वस्य उसम्प्रसारणे " श् उ अन् अस् " इति जाते, अकारस्य पूर्वरूपे "अज्झीनम्"—इति यथायोगं परयोगे, सस्य रुत्वे, रेफस्य विसर्गे—

**शुनः** । शुना । श्वभ्यामित्यादि । एवम्—युवा । युवानौ । युवानः । युवानम् । युवानौ । द्वितीयाबहुवचने " युवन् अस् " इति जाते " श्वयुव "—इति वस्य उसम्प्रसारणे " यु उ अन् अस् " स्थितौ अनेनैव सूत्रेण यकारस्यापि इकारे सम्प्रसारणे प्राप्ते सूत्रमाह—* **न सम्प्रसारणे**—इति । अतो यकारस्य नेत्वम् अतएव ज्ञापकात् अन्त्यस्य यणः ( वकारस्य ) पूर्वं सम्प्रसारणम् । एवमकारस्य पूर्वरूपे द्वयोः उकारयोः सवर्णदीर्घे परयोगादौ सति **यूनः** । यूना । युवभ्याम् । युवभिः । यूने । युवभ्याम् । युवभ्यः । यूनः । युवभ्याम् । युवभ्यः । यूनः । यूनोः । यूनाम् । यूनि । यूनोः । युवसु । हे युवन्० ।

अर्वा । हे अर्वन् ॥ **अवर्णस्त्रसावनञः** ६।४।१२७।।नञा रहितस्यार्वन्नित्यस्य तृ इत्यन्तादेशो नतु सौ । अर्वन्तौ । अर्वतः । अर्वद्भ्याम् । **पथिमथ्यृभुक्षामात्** ।७।१।८५। सौ । **इतोऽत्सर्वनामस्थाने** ।७।१।८६: पथ्यादेः । **थो न्थः** ।७।१।८६। पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । हे पन्थाः । पन्थानौ । पन्थानः । **भस्य टेर्लोपः** । ७।१।८८ । पथ्यादेः । पथः । पथिभ्याम् । पथिभ्यः । एवं मन्थाः । ऋभुक्षाः । **ष्णान्ता षट्** ।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्च २ । पञ्चभिः । पञ्चभ्यः २ । षट्चतुर्भ्यश्चेति नुट् । **नोपधायाः** ।६।४।७। नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् । पञ्चसु । **अष्टन आ विभक्तौ** ।७।२।८४। हलादौ वा स्यात् । **अष्टाभ्य औश्** ।७।१।२१। कृताकारादष्टनो जश्शसोरौश् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ २ । अष्टाभिः । अष्टाभ्यः २ । अष्टानाम् । अष्टासु । आत्वाभावे अष्ट । पञ्चवत् । **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५६। एभ्यः क्विन् । अञ्चेः सुप्युपपदे । युजिक्रुञ्चोः केवलयोः । क्रुञ्चेर्नलोपाभावश्च निपात्यते । कनावितौ । **कृदतिङ्** । ३।१।९३ । अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः ॥ **वेरपृक्तस्य** । ६।१।६७ । लोपः । **क्विन्प्रत्ययस्य कुः** ।८।२।६२। क्विन्प्रत्ययो यस्मात्तस्य कवर्गोन्तादेशः पदान्ते । ऋत्विक्, ऋत्विग् । ऋत्विग्भ्याम् । **युजेरसमासे**

---

* " लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते " इत्यस्य तु नायं विषयः । कार्याश्रयवर्णभेदेन लक्ष्यभेदात् अन्यथा—संस्कर्त्तेत्यादौ " अनचि च " इत्यादेरसकृत्प्रवृत्तिर्नस्यात् ।

**। ७।१।७१ । सर्वनामस्थाने नुम् सुलोपः । संयोगान्तस्य लोपः । कुत्वेन नस्य ङः । युङ् । युञ्जौ । युञ्जः । युग्भ्याम् । असमासे किम् । सुयुग् । चोः कुः ।८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते । सुयुक् सुयुजौ सुयुजः । सुयुग्भ्याम् । खन् खञ्जौ खञ्जः । खन्भ्याम् ।**
"अन्येभ्योऽपि दृश्यन्ते" इति ऋधातो र्वनिप्प्रत्यये गुणे रपरत्वे "अर्वन्" शब्दः सिद्ध्यति । सोऽयमश्वे योगरूढः । तथा च **श्रीहर्षः**–"वाहैरलुप्यत सहस्रदृगर्वगर्वः" इति प्रायुङ्क्त । अस्य सौ राजवद्रूपमिति मत्वा पठति **अर्वा** इति । **हे अर्वन्** । यथा–"हे राजन्" इति । अन्यत्र विशेषमाह—**अर्वणस्त्रसा**–इति । तृ असौ इति पदच्छेदः । न विद्यते नञ् यस्येति बहुव्रीहिः । "अङ्गस्य" इत्यधिकृतं अर्वणा विशेष्यते इति मत्वाऽऽचष्ट–**नञा रहितस्येति** । ऋ इत् । "नानुबन्धकृतमनेकाल्त्वम्" इति भावः । अलोन्त्य परिभाषया नकारस्यैवादेशः । "अर्वन् औ" इति स्थिते अनेन सूत्रेण "तृ" इत्यन्तादेशे "अर्वतृ औ" इति जाते ऋकारस्य इत्त्वेन लोपे "उगिदचाम्"—इति अन्त्याचः परे नुमि कृते, उभो लोपे "अर्वन् तृ औ" इत्यवस्थायां परयोगः । अर्वन्तौ । अर्वन्तः । अर्वन्तम् । अर्वन्तौ । शसादावचि नुम् तु नास्त्येव । अर्वतः । अर्वता । अर्वद्भ्याम् २ । अर्वद्भिः । अर्वते, अर्वद्भ्यः २ । अर्वतः २ । अर्वतोः २ अर्वताम् । अर्वति, अर्वत्सु । इत्यादि स्पष्टम् । असाविति किम् । अर्वा । अनञः किम् । अनर्वाणौ । अनर्वाणः । "यज्वन्" शब्दवदस्य* प्रक्रिया । अथ नकारान्ताः पथिन्-मथिन्-ऋभुक्षिन् शब्दाः । एषु विशेषमाह—**पथिमथि०** । पन्थाश्च, मन्थाश्च, ऋभुक्षाश्च पथिमथिऋभुक्षाणः तेषाम् । केचित्तु—पथिन् च मथिन् च ऋभुक्षिन् च इति विगृह्णन्ति । "सावनडुहः" इत्यतः साविति वर्त्तते "आ आत्" इति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः । "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषासमालोचने तु नैव प्रश्लेषावश्यकता । "वृद्धिरादैच्" इत्यत्र त्वाकारो न भाव्यमान इति बोध्यम् । **इतोऽत्सर्वनामस्थाने** । "पथिमथि ऋभुक्षाम्" इति वर्त्तते । इत् इति तपरकरणं स्पष्टार्थम् । पथ्यादिषु त्रिषु दीर्घप्लुतयोरसम्भवात् भाव्यमानत्वादेव सवर्णाऽग्राहकत्वे सिद्धे अदिति तपरकरणमपि स्पष्टार्थमेवेति व्याचष्ट—**पथ्यादे**रिति । "पथ्यादेरिकारस्य† अकारः स्यात् सर्वनामस्थाने परे" इत्यर्थः । **थोन्थः** । पथिमथिग्रहणमनुवर्त्तते ऋभुक्षिग्रहणं निवृत्तम् तत्र थाभावात् "इतोऽत्"—इत्यत "सर्वनामस्थाने" इति वर्त्तते । स्थान्यादेशौ द्वावप्यनच्कौ । तदाह—**पथिमथो**रिति । प्रथमैकवचने "पथिन् सु" इति स्थिते "सुडनपुं"—इति सर्वनामस्थानसञ्ज्ञायाम् "पथिमथि" इत्यनेन सौ परे आकारान्तादेशे अर्थात् नस्य

---

* शसादावचि "न संयोगाद्वमन्तात्" इत्यल्लोपो नेति भावः ।

† अत्रैव दीर्घाकारविधानेन पूर्वसूत्रस्यमाकारविधानन्तु न सम्यक् । "वा षपूर्वस्य निगमे" ( ६।४।९ ) इति दीर्घाभावपक्षे "ऋभुक्षणम्" इत्यत्र ह्रस्वाकारश्रवणाय सर्वनामस्थाने नैव दीर्घाकारो विहितः किन्तु सावेवेति बोध्यम् ।

आकारादेशे "पथि आ सु" इति स्थितिर्जाता। ततः "इतोऽत्" इति थकारोत्तरवर्त्तिन इकारस्य अकारदेशे "पथ् अ आ सु" इति जाते "थोन्थ" इति थस्य न्थे, परयोगे "पन्थ आ स्" इति सति "अकः सवर्णे"—इति द्वयोरकारयोर्दीर्घैकादेशे सस्य रुत्वे, विसर्गत्वे च **पन्थाः** इति। एवम् "पथिन् औ" इति स्थिते आत्वं तु न, सावितिवचनात् किन्तु "इतोऽत्"—इति इकारस्य अकारे विहिते, थस्य न्थादेशे "पन्थन् औ" इति जाते "सर्वनामस्थाने"—इत्युपधादीर्घे—पन्थानौ। एवम्—पन्थानः। पन्थानम्। पन्थानौ। शसादावचि "पथिन् अस्" इत्यादिस्थापनायां विध्यन्तरमारभते—**भस्य टेः** इति। पथ्यादेरित्यनुवर्त्तत इति भावः। तदनेन इन्मात्रस्य लोपे 'अन्भीनम्'—इति सस्य रुत्वविसर्गौ च—पथः। पथा। पथिभ्याम्। पथिभिः। पथे। पथिभ्याम्। पथिभ्यः। पथः। पथिभ्याम्। पथिभ्यः। पथः। पथोः। पथाम्। पथि। पथोः। पथिषु। सम्बोधनं प्रथमावत्। एवमेव—मन्थाः। मन्थानौ। मन्थानः। मन्थानम्। मन्थानौ। मथः। मथा। मथिभ्याम् इत्यादि। मन्थाः=दध्यादिमथनदण्डः। 'ऋभुक्षाः स्वर्गवज्रयोः' इति। मत्वर्थे इन् प्रत्यये ऋभुक्षिन् शब्द इन्द्रवाची। अत्र 'थोन्थः' इति सूत्रवर्ज सर्वमात्वादिकं भवति। तथाहि—"ऋभुक्षिन् स्" इति स्थिते "पथिमथि"—इति नकारस्य अकारान्तादेशे, "इतोऽत्"—इति इकारस्य अत्वे सवर्णदीर्घे सस्य रुत्वविसर्गौ—**ऋभुक्षाः**। अन्यत्राऽजादौ षात्परत्वात् नस्य णः इत्यधिकम्। ऋभुक्षाणौ। ऋभुक्षाणः। ऋभुक्षाणम्। ऋभुक्षाणौ। शसादावचि तु—"भस्य टेर्लोपः" इति इन्मात्रस्य लोपे ऋभुक्षः। ऋभुक्षा। हलादौ नलोपे—ऋभुक्षिभ्याम्। ऋभुक्षिभिः इत्यादि। स्त्रियां नान्तलक्षणे ङीपि भत्वात् टिलोपः। सुपथी नगरी। अनृभुक्षी सेना। आत्वं नपुंसके न भवति "न लुमता"—इति प्रत्ययलक्षणप्रतिषेधात्—सुपथि वनम्। "सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः"। हे सुपथिन्—हे सुपथि। "न लोपः सुप्स्वर"—इति नलोपस्याऽसिद्धत्वात् ह्रस्वस्य गुणो न। द्विवचने भत्वात् टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात्—सुपन्थानि। पुनरपि—सुपथि। सुपथी। सुपन्थानि। सुपथा। सुपथे। सुपथिभ्यामित्यादि ज्ञेयम्। पञ्चन् शब्दो नित्यं बहुवचनान्तः। तस्य षट्संज्ञाकार्यं लुकं च विधास्यन् षट्संज्ञासूत्रमाह—**ष्णान्ता षट्**। ष् च नश्च ष्णौ, तौ अन्ते यस्याः सा ष्णान्ता। "बहुगुण"—इत्यतः "सङ्ख्या" इत्यनुवर्त्तते तदाचष्टे—"**षान्ता**"—इति। पञ्चन् शब्दो नान्तः संख्यावाची चेति, अतोऽनेन सूत्रेण अस्य षट्संज्ञा। ततः "पञ्चन् जस्" इति स्थिते "षड्भ्यो लुक्" इति जसो लुक् "न लोपः"—इति नस्य लोपे—**पञ्च**। तथैव शसि—**पञ्च**। संख्या किम्। विप्रुषः। पामानः। * शतानि सहस्राणि इत्यत्र तु सन्निपात-

---

* "शत जस्" "सहस्र जस्" इत्यत्र "जश्शसोः शिः" इत्यनेन जातस्य शेः "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायाम् "नपुंसकस्य झलचः" इति नुमागमे "सर्वनामस्थाने"—इत्युपधादीर्घे "शतान् इ" "सह-

परिभाषाया न लुक्। सर्वनामस्थानसन्निपातेन कृतस्य नुमः तदविघातकत्वात्। **पञ्चभिः। पञ्चभ्यः २**। षष्ठीबहुवचने "पञ्चन् आम्" इति स्थिते षट्चतुर्भ्यश्च इति नुटि, नलोपे तस्याऽसिद्धत्वात् "नामि" इति दीर्घे अप्राप्ते सूत्रमाह— **नोपधायाः**। न इति लुप्तषष्ठीकं पदम्। तत् अधिकृतस्य "अङ्गस्य" विशेषणम् अतस्तदन्तविधिः। "ढ्रलोपे"—इत्यतो दीर्घ इति वर्त्तते। "नामि" इति सूत्रञ्चे-त्याचष्ट—**नान्तस्योपधाया** इति। एवञ्च नलोपस्यासिद्धत्वात् प्रथमं दीर्घः, ततो नलोपः। **पञ्चानाम्। पञ्चसु**। अष्टन्शब्दो नित्यं बहुवचनान्तः। अस्य विशेषं वक्ति—"**अष्टन**"—इति। "रायो हलि" इत्यतो हलि इत्यपकृष्यते। विभक्ताविति किम्। अष्टत्वम्। अष्टता। "आ" इति व्यक्तिनिर्देशोऽयम्। आकृति-निर्देशे तु नकारस्थानेऽनुनासिकाकारः स्यात्। **अष्टाभ्यः**। "जश्शसोः शि" इत्यतः "जश्शसोः" इति वर्त्तते। शित्वात्सर्वादेशः। कृताकारात् = नकारस्य आत्वे कृते सति यः अष्टाशब्दः तस्मादित्यर्थः। औशादेशोऽयं "षड्भ्यो लुक्" इत्यस्यापवादः।

ननु—जश्शसोः परतः अष्टन्शब्दस्य आत्वमेव नास्ति "अष्टन आ"— इति सूत्रे आत्वविधौ हलीत्यपकर्षस्योक्तत्वादितीमां शङ्कां परिहरति—'**अष्टभ्य**' इति अयमाशयः। कृतात्वस्येदमनुकरणम्, नतु लक्षणवशसम्पन्नस्य। अन्यथा वैकल्पिकत्वेन लाघवाद् "अष्टभ्य"—इति ह्रस्वघटिते एव निर्देष्टव्ये दीर्घघटितनिर्देशो ज्ञापयति क्वचिदजादावपि आत्वमिति। वैकल्पिकञ्चेदमष्टन आत्वम् "अष्टनो दीर्घात्" (६।१।१७२) इति सूत्रे दीर्घग्रहणाज्ज्ञापकात्। "अष्टन् जस्" इति स्थिते एकस्मिन् पक्षे अन्त्यस्य नस्य आत्वे कृते "अष्ट आ नस्" इति जाते "अकः सवर्णे—" इति दीर्घे "अष्टा जस्" इत्यवस्थायाम् "अष्टाभ्यः"—इत्यनेन जसः स्थाने औशादेशः। श् इत्। वृद्धिः। **अष्टौ**। आत्वाभावपक्षे तु षट्संज्ञां कृत्वा "षड्भ्यो"—इति जश्शसोः लुकि **अष्ट**। शस्यपि एवम्—**अष्टौ, अष्ट**। हलादौ विभक्तौ "अष्टन आविभक्तौ" इति वैकल्पिकमात्वम्, आत्वाभावे नलोपः। **अष्टाभिः। अष्टभिः। अष्टाभ्यः २**। अष्टभ्यः २। अष्टानाम्। **अष्टासु**। **अष्टसु**। आत्वाभावे पञ्चन्शब्दवदित्यर्थः। सप्तन्—नवन्-दशन्-एकादशन् इत्यादयोऽपि पञ्चवत्। इति नान्ताः। धकारान्तो हलन्तो बुध् शब्दः। ततः सुबाद्युत्पत्तिः। सौ विशेषः भष्भावः। जश्त्वचर्त्वे भुत्, भुद्। बुधौ बुधः। बुधम्। बुधौ। बुधः। बुधा। भुद्भ्याम्०। भुत्सु। अथ जकारान्ताः। तत्र ऋत्विज्शब्दं साधयति—"**ऋत्विग् दधृक्०**" इति। ऋत्विगादयः पञ्चशब्दाः किन्प्रत्ययान्ताः निपात्यन्ते। अपरे त्रयो धातवो निर्दिष्टाः। ऋतावुपपदे यजेः किन्।

---

स्रान् इ" इति स्थिते "ष्णान्ता षट्" इति नकारान्तसंख्यात्वप्रयुक्तायां षट् संज्ञायां शेर्लुक् स्यात् अतो भाष्यकारीयसमाधानमाह—**शतानीति**। **वार्त्तिक-कारस्तु** "षट्सञ्ज्ञायामुपदेशवचनम्" इत्याह।

ऋतौ यजति, ऋतुं वा यजति इति **ऋत्विक्**। रूढिरेषा। धृषेः (धृष्णोतेः) क्विन्, द्वित्वम्, अन्तोदात्तत्वञ्च धृष्णोतीति—**दधृक्**। सृजेः कर्मणि क्विन् अमागश्च। सृजन्ति तामिति **स्रक्**। दिशेः कर्मणि क्विन्। दिशन्ति तामिति **दिक्**। उत्पूर्वात् स्निहेः क्विन्, उपसर्गास्यान्तलोपः, षत्वञ्च। **उष्णिक्**। अञ्चु-युजि-क्रुञ्च इत्येतेषां धातूनामपि क्विन्। **कृदतिङ्**। "धातो" रित्याधिकृतम्। स्पष्टम्। **वेरपृक्तस्य**। "लोपोव्यो" रित्यतः लोप इत्यनुवर्त्तते। अपृक्तस्य वस्य लोप इत्यर्थः। कृत्तद्धितेति प्रातिपदिकत्वात् स्वादयः। **क्विन्०**। पदस्येत्यधिकृतम्। "झलां जशोन्ते" इत्यतः अन्त इति वर्त्तते तदाचष्टे—**क्विन्** इति "ऋत्विज् क्विन्" इति स्थापिते—ककारनकारौ इकार उच्चारणार्थः। अवशिष्टमात्रस्य अपृक्तसञ्ज्ञायां "वेरपृक्तस्य" इति लोपे "ऋत्विज्" इत्येव, तत्र क्विनः धात्वधिकारोक्तत्वात् "कृदतिङ्" इत्यनेन कृत्सञ्ज्ञकत्वात् तदन्तत्वाच्च "ऋत्विज्" शब्दस्य कृत्तद्धितेति प्रातिपदिकसञ्ज्ञायां प्रथमैकवचने—**ऋत्विज् सु** इति स्थितिर्जाता। ततः "क्विन्प्रत्ययस्य"—इति कवर्गोन्तादेशः। तत्र यथासङ्ख्यत्वात् चवर्गतृतीयस्य जस्य स्थाने कवर्गतृतीयो गकारः। "ऋत्विग् सु" इति स्थिते हल्ङ्यादिलोपे "वावसाने" इत्यनेन पक्षे चर्त्वम्। **ऋत्विक्, ऋत्विग्। ऋत्विजौ।** ऋत्विजः। ऋत्विजम्। ऋत्विजौ। ऋत्विजः। ऋत्विजा। ऋत्विग्भ्याम्०। सप्तमीबहुवचने "ऋत्विग् सु" इति, "खरि च" इति चर्त्वे, "आदेशप्र०"—इति षत्वे कष-संयोगे क्षः। ऋत्विक्षु। हे ऋत्विक्०। **युजेरसमासे**। "उगिदचाम्"—इत्यतः "सर्वनामस्थान"—इति "इदितो नुम्" इत्यतो नुम् इति चानुवर्त्तते। तदाचष्टे—**सर्वनामस्थाने** इति। "युज्" धातोः क्विनि, तस्य सर्वापहारिलोपे कृत्तद्धितेति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तौ प्रथमैकवचने—"युज् सु" स्थिते सर्वनामस्थानसञ्ज्ञायाम् "युजेः"—इति अन्त्यादचः परे नुमि, उमो लोपे "युन्ज् सु" इति स्थितम्, ततः प्रक्रियां दर्शयति—**सुलोप** इति। अर्थात् हल्ङ्यादिना सुलोपः, ततः "संयोगान्तस्य"—इति जलोपे "क्विन् प्रत्ययस्य" इति नस्य कुत्वेन अनुनासिको ङकारः—युङ्। "युञ्जौ" इत्यत्र "युन्ज् औ" इति जाते सति "नश्चापदान्तस्य"—इति नुमोऽनुस्वारे "अनुस्वारस्य ययि" (८।४।५८)—इति परसवर्णो ञकारः, तस्यासिद्धत्वात् "चो कुः" (८।२।३०) इति कुत्वं न। एवमेव—युञ्जः। युञ्जम्। युञ्जौ। शसादावचि—"अज्झीनम्"—युजः। युजा। भ्यामादौ हलादौ "स्वादिष्व"—इति पदत्वात् "झलां जशोन्ते"—इति जश्त्वेन गः। युग्भ्याम्। युग्भिः। युजे। युग्भ्याम्। युग्भ्यः इत्यादि। सप्तमी बहुवचने—"युज् सु" इति स्थिते जश्त्वेन गः, तस्य चर्त्वेन कः, ततः षत्वम्। द्वयोर्योगे क्षः। युक्षु। सम्बोधनं प्रथमावत्। **असमासे** किमिति। सूत्रे "असमासे" इति पदं किमर्थमिति प्रश्नः। उत्तरमाह—सुयुग्। अत्र उपपदसमासोऽस्ति अतो न "क्विन्प्रत्ययस्य" इत्यनेन कुत्वम् किन्तु—**चोकुः**। झलीत्यनुवर्त्तते अन्ते च। पदस्येत्यधिकारः। सुष्ठु युनक्तीति विग्रहे सत्सूद्विषेति सूत्रेण क्विप्। तदनेन पदान्तत्वात् जकारस्य कवर्गादेशो गकारः। "सुयुग् सु" इति जाते "वावसाने" इति

चर्त्वविकल्पे—सुयुक्, सुयुग्। सुयुजौ। सुयुजः। इत्यादि स्पष्टम्। सप्तमी बहुवचने—सुयुक्षु। अथ जकारान्ताः। "खञ्ज्" शब्दः। "खजि" गतिवैकल्ये। अस्मात् क्विप्। "इदितो०"—इति नुम्। "नश्चा"—इत्युनुस्वारः, परसवर्णो ञकारः। "खञ्ज् सु" इति स्थिते हल्ङ्यादिना सुलोपे जकारस्य संयोगान्तलोपः। ततो—"निमित्तापाये नैमित्तिकस्याप्यपायः" इति परिभाषया अनुस्वारपरसवर्णौ निवृत्तौ। "खन्" इति सिद्धम्। खञ्जम्। खञ्जौ। खञ्जः। खञ्जा। भ्यामादौ संयोगान्तलोपे पूर्ववत् नकारोऽवशिष्यते—खन्भ्याम्। खन्भिः। ० खन्सु।

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। ८। २। ३६।** झलि पदान्ते च। जश्त्वचर्त्वे। राट् राड्। राजौ। राजः। राड्भ्याम्। विभ्राट्। देवेट्। विश्वसृट्॥ परिमृट्। **परौ व्रजेः षः पदान्ते।** परावुपपदे व्रजेः क्विप् दीर्घश्च पदान्ते षत्वमपि। परित्यज्य सर्वं व्रजतीति-परिव्राट्। परिव्राजौ। **विश्वस्य वसुराटोः। ६।३।१२८।** विश्वस्य दीर्घः स्याद्वसौ राट्शब्दे च परे। राडिति पदान्तोपलक्षणार्थम्। विश्वाराट्। विश्वराजौ। विश्वाराड्भ्याम्॥ **स्कोः संयोगाद्योरन्ते च।८।२।२९।** पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः। भृट् २। सस्य चुत्वेन शः। झलां जश्झशीति शस्य जः। भृज्जौ। भृज्जः। भृड्भ्याम्। त्यदाद्यत्वं पररूपत्वम्। **तदोः सः सावनन्त्ययोः। ७। २। १०६।** त्यदादीनां तकारदकारयोः सः स्यात्सौ। स्यः। त्यौ। त्ये। सः। तौ। ते। यः। यौ। ये। एषः। एतौ। एते। एनम्। एनौ। एनान्। एनेन। एनयोः॥

व्रश्चभ्रस्ज०। "झलि" "अन्ते" च इत्यनुवर्त्तते पदस्येत्यधिकृतम्। तदाचष्टे—**झलि** इति। "व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्यात् झलि पदान्ते च" इत्यर्थः। तत्र व्रश्चादयः सप्त धातवः। छशौ वर्णौ इति विवेकः। राजृ दीप्तौ। अस्मात् क्विपि "राजते इति "राज्" शब्दः। ततः स्वाद्युत्पत्तौ "राज् सु" इति स्थिते हल्ङ्यादिना सुलोपे "व्रश्च"—इति षत्वे, जश्त्वेन डकारे, "वावसाने" इति चर्त्वेन पक्षे टकारः। **राट्, राड्**। राजौ। राजः। राजम्। राजौ। राजः। राजा। भ्यामादौ तु "स्वादिषु"—इति पदान्तत्वात् षत्वं, जश्त्वञ्च—राड्भ्याम्। राड्भिः इत्यादि। सप्तमीबहुवचने—"राड् सु" इति जाते सति "ङः सि धुट्" इति विकल्पेन धुटि, उटो लोपे "खरि च" इति चर्त्वम्। राट्सु। राट्त्सु। **विभ्राट्** इति "टुभ्राज्" दीप्तौ। अस्मात् व्युपसृष्टात् क्विपि विशेषेण भ्राजते इति–विभ्राट्। विभ्राड्। अत्रापि राज्शब्दवत् षत्वादिप्रक्रिया॥ एवम्—देवान् यजते इति विग्रहे क्विपि यजादित्वात् "वचिस्वपि"—इति सम्प्रसारणे आद्गुणे

"देवेज्" इति सिद्धौ—पुनः "देवेट्" इत्यादि ज्ञेयम् । एवम्—विश्वसृज् शब्दः साधुः । **विश्वसृट्,** विश्वसृड् । अत्रापि षत्वादि राज्वत् । मृजूष शुद्धौ । अस्मात् परिपूर्वात् क्विप् । "क्ङिति च" इति निषेधात् "मृजेर्वृद्धि" रिति न भवति । परिमार्ष्टीति—**परिमृट्**, परिमृड् । राज्वदेव । अथ जकारान्तं परिव्राज्शब्दं साधयति—**परौ व्रजेः०** । इति **षत्वमपीति** । "चोः कुः" इत्यस्यापवादोऽयमिति भावः । परिव्राट्, परिव्राड् । परिव्राजौ । परिव्राजः । परिव्राजम् । परिव्राजौ । परिव्राजः परिव्राजा । परिव्राड्भ्याम् इत्यादि । परिव्राट्सु, परिव्राट्त्सु । **विश्वस्य०** । "ढ्रलोपे"—इत्यतो दीर्घ इत्यनुवर्त्तते तदाचष्टे—**विश्वस्येति** । विश्वास्मिन् राजते इत्यर्थे "सत्सूद्विष"—इत्यादिना क्विपि उपपदसमासे विश्वराज्शब्दः । **राडिति** कृतचर्त्त्वस्य राट्शब्दस्य निर्देशात्, जश्त्वे सति दीर्घो न स्यात् अतः सूत्रे "राट्" शब्दनिर्देशः पदान्तमुपलक्षयतीति तेन जश्त्वपक्षेऽपि दीर्घ इति भावः । विश्वाराट्, विश्वाराड् । षत्वादिविधिः राज्वदेव । दीर्घमात्रं विशेषः । विश्वराजौ । विश्वराजः विश्वराजम् । विश्वराजौ । विश्वराजः । विश्वराजा । विश्वाराड्भ्याम् । इत्यादि । विश्वाराट्सु, विश्वाराट्त्सु । "भ्रस्ज" पाके । अस्मात् क्विपि, "ग्रहिज्या"—इति सम्प्रसारणे रेफस्य ऋकारः सम्प्रसारणम्—भृस्ज्शब्दः । ततः स्वाद्युत्पत्तौ विशेषं वक्ति—**स्कोः संयोगाद्योरन्ते च** इति । पदस्येत्यधिकृतम् । "झलो झलि" इत्यतो "झलि" इत्यनुवर्त्तते । संयोगेति लुप्तषष्ठीकं पदम् । झलन्ताभ्यां विशेष्यते । तदाचष्टे—**पदान्ते झलि०** इति । स् च क् च स्कौ तयोः स्कोः । स्कोरिति किम् । नर्नर्त्ति । वर्वर्त्ति । संयोगाद्योरिति किम् । पयःशक् । अन्तेष्विति किम् । तक्षकः । तक्षिता । "भृस्ज् स्" इत्यवस्थायाम् हल्ङ्यादिना सुलोपे "स्को"रिति—सकारलोपे "भृज्" इति जाते "व्रश्च"—इति जकारस्य षत्वे, जश्त्वचर्त्त्वे—**भृट्, भृड्** । "भृस्ज् औ" इति स्थिते सस्य श्चुत्वेन शः, तस्य तालुस्थानकस्य "झलां जश् झशि" जश्त्वेन तादृश एव जः । भृज्जौ । भृज्जः । एवमजादौ विभक्तौ पदान्तझल्परकसंयोगादित्वाभावान्न संयोगादिलोपः—भृज्जम् । भृज्जौ । भृज्जः ।

---

* **मौग्धास्तु—"स्यादेः सो लोपः कोऽपढन्यरक्षः"** इति सूत्रयित्वा "यथा तोष्टुमिच्छतीति तुतुक्षति इति क्विपि तुतुट्, तुतुड् । तुतुड्भ्याम्० । लेढुमिच्छतीति क्विपि लिलिट् लिलिड्भ्याम्० । पढन्यसम्बन्धिककारवर्जनात् मोक्तुमिच्छतीति—मुमुक्, मुमुग्भ्याम्० । दोग्धुमिच्छतीति क्विपि दुधुक्, दुधुग्भ्याम्० इत्यादौ न स्यात् । रक्षवर्जनात् गां रक्षतीति क्विपि गोरक् । गोरग्भ्याम्० । **जौमरास्तु**—रक्षधातोरपि ककारं लुप्त्वा गोरट्, गोरड्भ्यामित्याहुः । एवं रक्षवर्जनेन प्रकृतिककारस्यापि लोपप्राप्तौ काष्ठं तक्षतीति काष्ठतट्, । काष्ठतड्भ्याम् । उक्ष सेचने । समुट्, समुड्भ्यामित्यादौ स्यादेव । ततश्च जातककाराणां षढसम्बन्धी ककारो लुप्यते रक्षधातोः ककारं वर्जयित्वा, प्रकृतेः ककारश्च लुप्यते इति निष्कर्षः" इत्याहुः ।

भृज्जा। "भृस्ज् भ्याम्" इति स्थिते "स्वादिषु"—इति पदान्तत्वात् संयोगादिलोपे "व्रश्च"—इति षत्वे, जश्त्वे—भृड्भ्याम्। भृड्भिः। भृज्जे। भृड्भ्याम्। भृड्भ्यः भृज्जः। भृड्भ्याम्। भृड्भ्यः। भृज्जः। भृज्जोः। भृज्जाम्। भृज्जि। भृज्जोः। भृट्सु, भृट्त्सु। सं० प्रथमावत्। धानाभृस्ज्शब्दोऽप्येवम्। भिषज्–जन्मभाज्–सुकृतभुज् प्रभृतयोऽपि जान्ता यथायोगं ज्ञेयाः। इति * जान्ताः। वगडान्ता अप्रसिद्धाः। अथ दकारान्ता निरूप्यन्ते। तत्र आदौ तदर्थकः त्यद् शब्द। अस्य विशेषं सूचयति—त्यदाद्यत्वमिति। अर्थात् सर्वत्र उत्पन्नायां विभक्तौ "त्यदादीनामः" इत्यन्तस्य दकारस्य अकारः "अतो-गुणे" इति पररूपञ्च भवति। ततोऽदन्तसर्वशब्दवद्रूपाणि। अत्र ये विशेषस्तमाह—

**तदोः सः०**। सूत्रे तश्च द्चेति विग्रहः। तकाराद्कार उच्चारणार्थः इति भावः।

**सः स्यादिति**। स इत्यादेशेऽपि अकार उच्चारणार्थ एव। त्यद् शब्दात् सावानीते "त्यद् सु" इति स्थिते "त्यदादीनाम्"—इति दकारस्य अकारे "त्य अ सु" इति जाते अकारस्य पररूपे "त्य सु" इत्यत्र उकारस्येत्त्वेन लोपे "तदोः"—इति तकारस्य सकारे रुत्वविसर्गौ—**स्यः**। त्यौ। त्ये। त्यम्। त्यौ। त्यान्। त्येन। त्याभ्याम्। त्यैः। त्यस्मै इत्यादि। एवमेव तद्शब्दोऽपि। **सः**। तौ। ते। तम्। तौ। तान्। तेन। ताभ्याम्। तैः। तस्मै। ताभ्याम्। तेभ्यः। तस्मात्। ताभ्याम्। तेभ्यः। तस्य। तयोः। तेषाम्। तस्मिन्। तयोः। तेषु। एवं यद्। यः। यौ। ये। इति। एतदपि—**एषः** इति। अर्थात् त्यदाद्यत्त्वं, पररूपञ्चेति शिष्टं सर्वशब्दवदेव। सौ तु तकारस्य सत्वमिति विशेषः।

**एनम्** इति। "द्वितीयाटौस्स्वेनः" इत्यस्य एतद्शब्देऽपि प्रवृत्तिरिति भावः। संज्ञायां गौणत्वे च अत्वसत्वे न स्तः। त्यद्, त्यदौ, त्यदः। त्यमतिक्रान्त इति विग्रहे—अतित्यद्, अतित्यदौ, अतित्यदः। अत्वादीनामाङ्गत्वात्तदन्तेऽपि प्रवृत्तिः। परमसः। परमतौ। परमते। इत्यादि। थकारान्तोऽग्निमथ्शब्दः। अग्निं मथ्नातीति क्विप्। अग्निमत्। अग्निमद्। अग्निमथौ। अग्निमथः। अग्निमद्भ्याम् इत्यादि।

ङे प्रथमयोरम्। ७। १। २८। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः॥ त्वाहौ सौ। ७। २। ९४। अनयोर्मपर्यन्तस्य॥ शेषे लोपः। ७। २। ९०। अनयोष्टिलोपः। त्वम अहम्। युवावौ द्विवचने। ७। २। ९२। द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ। प्रथमायाश्च द्विवचने भाषायाम्। ७। २। ८८। औङ्येतयोरात्वं लोके। युवाम्। आवाम्। यूयवयौ जसि। ७। २। ९३। अनयोर्मपर्यन्तस्य। यूयम्। वयम्। त्वमावेकवचने। ७। २। ९७। एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ। द्वितीयायां च। ७। २। ८७। अनयोरात्स्यात्। त्वाम्।

माम् ॥ **शसो न** । ७ । १ । २९ । आभ्यां शसो नः । अमोऽपवादः । आदेः परस्य । संयोगान्तस्य लोपः । युष्मान् । अस्मान् ॥ **योऽचि** । ७ । २ । ८९ । अनयोर्यादेशोऽजादौ विभक्तौ । त्वया । मया ॥ **युष्मदस्मदोरनादेशे** । ७ । २ । ८६ । अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥ **तुभ्यमह्यौ ङयि** । ७ । २ । ९५ । अनयोर्मपर्यन्तस्य । टिलोपः । तुभ्यम् । मह्यम् ॥ **भ्यसोऽभ्यम्** । ७ । १ । ३० । आभ्यां परस्य । युष्मभ्यम् । अस्मभ्यम् ॥ **एकवचनस्य च** । ७ । १ । ३२ । आभ्यां ङसेरत् । त्वत् मत् ॥ **पञ्चम्या अत्** ।७।१।३१। आभ्यां भ्यसः । युष्मत् अस्मत् ॥ **तवममौ ङसि** । ७ । २ । ९६ । अनयोर्मपर्यन्तस्य ॥ **युष्मदस्मद्भ्यां ङसोऽश्** । ७ । १ । २७ । तव । मम । युवयोः २ । आवयोः ॥ **साम आकम्** । ७ । १ । ३३ । आभ्यां साम आकम् । युष्माकम् । अस्माकम् । त्वयि । मयि । युष्मासु अस्मासु ॥

अथ युष्मदस्मदोः स्वरूपं निरूप्यते । तयोश्च वाच्यलिङ्गत्वात् त्रिष्वपि लिङ्गेषु समानं रूपम् । "अलिङ्गे युष्मदस्मदी" इत्युक्तेः । **ङे प्रथमयोरम्** । "युष्मदस्मद्भ्यां ङसोऽश्" इत्यतो युष्मदस्मद्भ्याम् इत्यनुवर्त्तते । 'ङे' इति पृथक्पदं लुप्तषष्ठीकम् । प्रथमयोरिति द्विवचनबलेन प्रथमाशब्दः प्रथमाद्वितीयोभयार्थक इत्याशयेन व्याचष्ट— **युष्मदस्मद्भ्या**मिति । **त्वाहौ सौ** । त्वश्च अहश्च त्वाहौ । "मपर्यन्तस्य" (७ । २ । ९१) इत्याधिकृतम् । "युष्मदस्मदोर्मपर्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौ परत" इत्यर्थः । **शेषे लोपः** । "अष्टन आ" इत्यतो विभक्तौ इति वर्त्तते, तच्च शेष इत्यनेनान्वेति । यत्र अकारो यकारश्च न विहितः स शेषपदार्थः । तत्र युष्मदस्मदोरन्त्यस्य * लोपो भवतीत्याशयेनाह- **अनयो**रिति । "युष्मद् सु" "अस्मद् सु" इति स्थिते "ङे प्रथमयोरम्" इति सोरमादेशे "युष्मद् अम्" "अस्मद् अम्" इति जाते "त्वाहौ सौ" इत्यनेन मपर्यन्तस्य "त्व" "अह" इत्यादेशे "त्व अद् अम्" "अह अद् अम्" इत्यवस्थायाम् "अतोगुणे" इति पूर्वस्याकारस्य पररूपे "त्व अम्" "अह अम्" इति सति "अकः"—इति सवर्णदीर्घे प्राप्ते "अमि पूर्वः" इत्यनेन पूर्वरूपैकादेशः "त्वम्, अहम्" इति सिद्धम् । यदा तु "शेषे लोपः" इत्यनेन टिलोपश्चिकीर्षितः

---

* **पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।**
**यान्यद्विवचनान्यत्र शेषे लोपो विधीयते** ॥ इति **काशिका** ।

तदा " अद् " मात्रस्य लोपे पररूपैकादेशो न कर्त्तव्यो भवति । **युवावौ०** । उक्तिर्वचनम् । द्वयोर्वचनं द्विवचनम् । द्विवचन इत्यर्थग्रहणम् । द्विवचने ये युष्मदस्मदी अर्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने युव आव इत्येतावादेशौ भवतो विभक्ता वित्यर्थः । **प्रथमायाश्च०** । " अष्टन आ "—इत्यतो आग्रहणमनुवर्त्तते । " युष्मदस्मदोः "—इत्यतो युष्मदस्मदोरिति च तदाचष्ट-**औङ्यतयो**रिति । " औङि " इत्येव सुवचम् । भाषायां किम् । युवं वस्त्राणि पीवसा वसाथे । मपर्यन्तस्य किम् । साकच्कस्य माभूत्–युवकाम् । आवकाम् । " युष्मद् औ " " अस्मद् औ " इति स्थिते औकारस्य अमादेशे " युवावौ "—इति मपर्यन्तस्य " युव आव " इत्यादेशे " युव अद् अम् " " आव अद् अम् " इत्यवस्थायाम् " प्रथमायाश्च "—इति दकारस्य आकारादेशे विहिते " युव अ आ अम् " " आव अ आ अम् " इति जाते पूर्वपरयोः अकारयोः पररूपे, ततः सवर्णदीर्घे, अमिपूर्वः इति पूर्वरूपे " **युवाम्, आवाम्** " इति । **यूयवयौ०** । युष्मदस्मदोर्मपर्यन्तस्य यूय वय इत्यादेशौ भवत जसि इत्याशयेनाह—**अनयो**रिति । " युस्मद् जस् " " अस्मद् जस् " इति स्थिते " प्रथमयोः "—इति जसोऽमादेशे, अनेन सूत्रेण मपर्यन्तस्य " यूय वय " इत्यादेशे " यूय अद् अम् " " वय अद् अम् " इति जाते " अतो "—इति पररूपे " शेषे "—इति अन्त्यस्य दमात्रस्य लोपे " अमिपूर्वः "—इति पूर्वरूपे " **यूयम् वयम्** " इति । टिलोपे चिकीर्षिते तु पररूपं कर्त्तव्यं न भवतीत्युक्तं प्राक् इह " शेषलोपेऽन्त्यलोप इति पक्षे दकारमात्रस्य लोपे सति अदन्तसर्वनामपरत्वात् जसः शीभावः प्राप्तः * अङ्गवृत्तेः पुनर्वृत्तावविधिः " इति परिभाषाया न भवति । **अथ द्वितीया । त्वमावेकवचने** । एकवचन इत्यर्थनिर्देशः । यदा समासे एकार्थे युष्मदस्मदी भवतः, समासस्य त्वन्यसंख्यात्वात् द्विवचनं बहुवचनं वा भवति तदापि त्वमावादेशौ भवत इत्यर्थः । इदञ्च युष्मदस्मदोरेव विशेषणं न विभक्तिविशेषणमिति फलितम् । तथाच—त्वां मां वा अतिक्रान्तो—" अतित्वाम् अतिमाम् " इत्यादौ द्विवचनविभक्तावपि त्वमादेशोपपत्तिर्निर्बाधा । " युष्मदस्मदो " " मपर्यन्तस्य " इति वर्त्तते तदाचष्ट—एकस्योक्ताविति । **द्वितीयायां च** । " युष्मदस्मदोरनादेशे " इति वर्त्तते " अष्टन आ "—इत्यतः आकारश्च **अनयो**रिति । " युष्मद् अम् " " अस्मद् अम् " इति स्थिते " त्वमा "—इति मपर्यन्तस्य " त्व म " इत्यादेशे " त्व अद् अम् " " म अद् अम् " इति "द्वितीयायाञ्च" इत्यनेन अलोन्त्यपरिभाषैकवाक्यतया दकारमात्रस्य आकारे कृते " त्व अ आ अम् " " म अ आ अम् " इत्यवस्थायां पररूपम् , सवर्ण दीर्घः, " अमि "—इति पूर्वरूपम्—" **त्वाम् माम्** " इति परिनिष्ठितं रूपम् । **युवाम् आवाम्** इति पूर्ववत् । **शसो न** । युष्मदस्मद्-

---

* अङ्गाधिकारे वृत्तं निष्पन्नं कार्यम् , तस्मिन् सति पुनरन्यस्य अङ्गकार्यस्य प्रवृत्तौ प्राप्तायामविधिरित्यर्थः ।

भ्यामिति वर्त्तते अत आह—**आभ्यामिति** । अमोऽपवादः । " युष्मद् शस् " "अस्मद् शस्" इति स्थिते शस्येत्त्वे, लोपे च–"ङे प्रथमयोः"–इति अमादेशे प्राप्ते "द्वितीयायाञ्च" इति दस्य आत्वे सवर्णदीर्घे "युष्मा अस्" "अस्मा अस्" इति सति "शसो न" इत्यनेन शसो नकारः, स च भवन् अलोन्त्यपरिभाषाबलात् सकारस्य प्राप्तः । ततः— " आदेः परस्य " इति सूत्रेण अकारस्थाने " न् " इत्यादेशः । एवं सति " युष्मा न् स् " " अस्मा न् स् " इत्यवस्थायां सकारस्य संयोगान्तलोपः—" **युष्मान् अस्मान्** " । **अथ तृतीया । योऽचि** । " युष्मदस्मदोरनादेशे " इति वर्त्तते तदाचष्टे–**अनयो**रित्यादि । अनयोरन्त्यस्येत्यर्थः । अचि किम् । युवाभ्याम् । आवाभ्याम् । अनादेशे किम् । त्वत् । मत् । तृतीयैकवचने—" युष्मद् टा " " अस्मद् टा " इति स्थिते टस्येत्त्वेन लोपे " त्वमावेकवचने "—इति मपर्यन्तस्य " त्व " " म " इत्यादेशे " त्व अद् आ " " म अद् आ " इति भूते, पररूपे, " योऽचि " इत्यनेन अन्त्यदस्य " य् " इत्यादेशः । हल य् परस्मिन् आकारे निविष्टः–"**त्वया मया**" इति । तृतीयाद्विवचने–"युष्मद् भ्याम्" "अस्मद् भ्याम्" इति स्थिते "युवावौ"–इत्यनेन मपर्यन्तस्य " युव आव " इत्यादेशे—" युव अद् भ्याम् " " आव अद् भ्याम् " इति जाते, " अतो गुणे " इति पररूपे " युव द् भ्याम् " " आव द् भ्याम् " इति भूते सूत्रं प्राप्नोति—" **युस्मदस्मदो०** " इति । " अष्टन आ "—इत्यतः आ विभक्तौ इति, रायो हलि इत्यतो हलीति वर्त्तते, सप्तम्यन्तविशेषणे तदादिविधिरित्याह–**अनयोरादिति** । एवमनेन दस्य आत्वे सवर्णदीर्घे—"**युवाभ्याम् आवाभ्याम्** इति । तृ० बहु०—" युष्मद् भिस् " " अस्मद् भिस् इति स्थिते " युष्मदस्मदोः "– इति दस्य आत्वे, सवर्णदीर्घे, सस्य रुत्वविसर्गौ—" **युष्माभिः अस्माभिः** " इति । **अथ चतुर्थी** । तुभ्यमह्यौ । युष्मदस्मदोः, मपर्यन्तस्य इत्यनुवर्त्तते तदाचष्टे—**अनयो**रिति । युष्मद् ए " अस्मद् ए " इति स्थिते " त्वमा "—इति प्राप्ते अनेन मपर्यन्तस्य " तुभ्य " " मह्य " इत्यादेशे " ङेप्रथमयोः "—इत्यमादेशे " शेषे "—इति " अद् " इत्यस्य टेर्लोपे " अमि "—इति पूर्वरूपे—" **तुभ्यम् मह्यम्** " इति । " **युवाभ्याम् आवाभ्याम्** " इति तृतीयाद्विवचनवत् । **भ्यसोऽभ्यम्** । " युस्मदस्मद्भ्याम् " इति वर्त्तते तदाह—**आभ्यामिति** । भ्यम् अभ्यम् इति वा छेदः । " अभ्यम् " इत्येव न्याय्यमाभाति । " युष्मद् भ्यस् " " अस्मद् भ्यस् " इति स्थापिते अनेन सूत्रेण भ्यसः स्थाने अभ्यम् इत्यादेशे " युष्मद् अभ्यम् " " अस्मद् अभ्यम् " इति जाते, टिलोपे—"**युष्मभ्यम् अस्मभ्यम्**" इति । **अथ पञ्चमी** । **एकवचनस्य च** । " युष्मदस्मद्भ्याम् " " पञ्चम्या अत् " इति च वर्त्तते तत्फलितमाह—**आभ्या**मिति । " युष्मद् अस् " " अस्मद् अस् " इति स्थिते " त्वमावेकवचने " इति मपर्यन्तयोः " त्व, म " इत्यादेशे " एक "—इत्यनेन ङसेः—" अत् " सर्वादेशः " त्व अद् अत् " " म अद् अत् " इति जाते, " शेषे "—इति टिलोपे " अतो गुणे " इति पररूपे—" **त्वत् मत्** "

इति सिद्धम्। दलोपपक्षे—त्रयाणामकाराणां पररूपम्। " युवाभ्याम् आवाभ्याम् " इति पूर्ववत्। युष्मद् भ्यस् " " अस्मद् भ्यस् " इति स्थिते सूत्रं प्राप्नोति—"**पञ्चम्या अत्**" इति। अत्र ' युष्मदस्मद्भ्याम् " " भ्यस् " इति वर्त्ततेऽत आचष्टे—**आभ्या**मिति। तदनेन सूत्रेण भ्यस: स्थाने " अत् " इत्यादेशे टिलोपे, परयोगे " **युष्मत् अस्मत्** " इति। अन्त्यदलोपपक्षे तु पररूपम्। **अथ षष्ठी**। **तव मम**। मपर्यन्तस्येत्याधिकृतम्। " युष्मदस्मदो: " इति वर्त्तते तदाह—**अनयो**रिति। " त्वमावेकवचने " इत्यस्यापवाद:। " युष्मद् ङस् " " अस्मद् ङस् " अनेन मपर्यन्तयो: यथायोगं " तव मम " इत्यादेशे " तव अद् ङस् " " मम अद् ङस् " इत्यवस्थायां सूत्रं प्राप्नोति—" **युष्मदस्मद्भ्याम्** "—इति। युष्मदस्मद्भ्यां परस्य ङस: अश् स्यादित्यर्थ:। एवमनेन ङस: स्थाने शित्वात् सर्वादेशोऽश्। श् इत्। तत:—टिलोपे पररूपम्। दलोपे तु—" तव अ अ " " मम अ अ " इत्यवस्थायां त्रयाणामकाराणां पररूपम्। " **तव मम** " इति। " युष्मद् ओस् " " अस्मद् ओस् " इति स्थिते " युवावौ "—मपर्यन्तयो: यथाक्रमं " युव आव " इत्यादेशयो: कृतयो: " युव अद् ओस् " आव अद् ओस् " इति जाते, पररूपे, युवद् ओस् " " आवद् ओस् " इति सति " योऽचि " इत्यनेन दस्य यकारे परयोगे, सस्य रुत्वविसर्गौ। " **युवयो: आवयो:** " इति परिनिष्ठितं रूपम्। **साम आकम्**। " युष्मदस्मद्भ्याम् " इति वर्त्तते। " साम: " इति सकार: " गोतोणित् " इत्यत्र गकार इवाऽविवक्षित: इत्याशयेनाचष्टे—**आभ्यामिति**। " युष्मद् आम् " " अस्मद् आम् " इति स्थिते " साम "—इत्यनेन आम: स्थाने " आकम् " इत्यादेशे विहिते " शेषे "—इति अदो लोपे अन्भीनम् दलोपे तु " अक: "—इति सवर्णदीर्घ:। " **युस्माकम् अस्माकम्** " इति। **अथ सप्तमी** " युष्मद् इ " " अस्मद् इ " इत्यवस्थायाम् " त्वमावे "—इति मपर्यन्तयो: " त्व म " इत्यादेशे विहिते " त्व अद् इ " " म अद् इ " इति जाते " योऽचि " इत्यनेन दस्य यत्वे कृते, पररूपे हल् य् परस्मिन् इकारे निविष्ट: इति सिद्धम्—"**त्वयि मयि** इति। **युवयो: आवयो:**। षष्ठीद्विवचनवत्। " युष्मद् सु " " अस्मद् सु " स्थिते " युष्मदस्मदोरनादेशे " इत्यनेन दस्य आत्वे कृते, सवर्णदीर्घे—युष्मासु अस्मासु " इति रूपम्। इदन्तु बोध्यम्—**जैन**व्याकरणादौ आमन्त्रणेऽपि " हे त्वम्। हे युवाम्। हे यूयम्। इत्युदाहृतम्। तेषामयमाशय:—सर्वनाम्नामामन्त्रणं नास्तीति मन्यन्ते इति, परन्तु "रूपसिद्धौ" उक्तत्वादामन्त्रणविधिर्विकल्पनीय:।

**युष्मदस्मदो: षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ। ८। १। २०।** **पदात्परयोरपादादौ स्थितयो: षष्ठ्यादिविशिष्टयोर्वान्नावौ॥ बहुवचनस्य वस्नसौ। ८। १। २१।** उक्तविधयोरनयो: षष्ठ्यादिबहु-

वचनान्तयोर्वस्नसौ स्तः॥ **तेमयावेकवचनस्य। ८। १। २२।** उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्तेमे एतौ स्तः॥ **त्वामौ द्वितीयायाः। ८। १। २३।** उक्तविधयोर्द्वितीयैकवचनान्तयोस्त्वामौ स्तः॥

श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥ १॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः॥ २॥

**एकवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः।** एकतिङ् वाक्यम्। तेनेह न। ओदनं पच तव भविष्यति। इह तु स्यादेव शालीनां ते ओदनं दास्यामि॥ **एते वन्नावादय आदेशा अनन्वादेशे वा वक्तव्याः।** अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति। तव भक्तोऽस्तीति वा। तस्मै ते नम इत्येव॥ **न चवाहाहैवयुक्ते। ८। १। २४।** चादिपञ्चकयोगे नैते आदेशाः स्युः। हरिस्त्वां मां च रक्षतु। कथं त्वां मां वा न रक्षेदित्यादि॥ **पश्यार्थैश्चानालोचने। ८। १। २५।** अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते आदेशाः स्युः। चेतसा त्वां समीक्षते। आलोचने तु। भक्तस्त्वा पश्यति चक्षुषा। **सपूर्वायाः प्रथमाया विभाषा। ८। १। २६।** विद्यमानपूर्वात्प्रथमान्तादन्वादेशेऽप्येते आदेशाः स्युः। भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्। त्वामेति वा॥ **सामन्त्रितम्। २। ३। ४८।** संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्॥ **आमन्त्रितं पूर्वमविद्यमानवत्। ८। १। ७२।** अग्ने तव। देवास्मान्पाहि॥ **नामन्त्रिते समानाधिकरणे सामान्यवचनम्। ८। १। ७३।** विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत्। हरे दयालो नः पाहि॥

**युष्मदस्मदोः०।** "पदस्य" (८।१।१६) "पदात्" (८।१।१७) "अनुदात्तं सर्वमपादादौ" (८।१।१८) इत्यधिक्रियन्तेऽत आह—**पदादिति।** **बहुवचनस्य०।** "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः"—इति साधिकृतमनुवर्त्ततेऽत आह—**उक्तविधयो**रिति। षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोरित्यर्थः। **तेमया०** "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः" इति साधिकृतमनुवर्त्तते तत्र द्वितीयैकवचने

त्वामादेशाभ्यां " तेमयादेशबाधनात् परिशेषादाह—**उक्तविधयोरिति** । वान्नावोरपवाद इत्यर्थः । **त्वामौ०** । त्वाश्च माश्चेति विग्रहः । " युष्मदस्मदोः " " एकवचनस्ये " ति च वर्त्तते तदाह—**द्वितीयेति** । अथ विभक्तिक्रमानुसृतद्वितीया चतुर्थी–षष्ठी–क्रमेण एकद्विबहुवचनक्रमेण चोदाहरति—**श्रीश** इत्यादिश्लोकद्वयेन । अस्येयं व्याख्या—श्रियः ईशः पतिर्विष्णुः **त्वा मा** अपि पातु रक्षतु । अत्र—" त्वाम् माम् " इति द्वितीयैकवचनान्तयोः त्वा मा इति यथाक्रममादेशौ । सः श्रीशः **ते मे** अपि शर्म सुखं दत्तात् । अत्र "तुभ्यम मह्यम्" इति चतुर्थ्येकवचनान्तयोः—ते मे इत्यादेशौ । स्वामी०–अत्र "तव मम" इति षष्ठ्येकवचनान्तयोः **ते मे** इत्यादेशौ । विभुः सर्वव्यापकः **वां नौ** अपि पातु । अत्र " युवाम् आवाम् " इति द्वितीयाद्विवचनयोः " वां नौ " इत्यादेशौ । " सुखं **वां नौ** " इति अत्र युवाभ्याम् आवाभ्याम् इति चतुर्थीद्विवचनान्तयोः " वाम् नौ " इत्यादेशौ स्तः । पतिर्**वा**मपि **नौ** हरिरिति । अत्र " युवयोः आवयोः " इति षष्ठीद्विवचनान्तयोः " वां नौ " इत्यादेशौ । सोऽव्याद्वो नः=हरिः । **वः नः** अपि अव्यात् । अत्र " युष्मान् अस्मान् " इति द्वितीयाबहुवचनान्तयोः " वस् नस् " इत्यादेशौ यथाक्रमम् । शिवं **वो नो** दद्यात् = शिवं कल्याणम् अत्र चतुर्थीबहुवचनान्तयोः " युष्मभ्यम् अस्मभ्यम् " इत्यनयोः स्थाने यथायोगं "वस् नस् " इत्यादेशौ । सेव्योऽत्र **वः** स **नः** स हरिः=दुःखहर्त्ता विष्णुः वः = युष्माकं नः = अस्माकं सेव्यः । " कृत्यानां कर्त्तरि वा " ( २ । ३ । ७१ ) इति षष्ठी । अत्र युष्माकम् अस्माकम् " इति षष्ठीबहुवचनान्तयोः वस्नसौ । अत्र एवञ्जातीयकेषु अन्यत्राप्येवमेवलक्षणमनुसरणीयम् । तथाहि—

**दामोदरस्त्वावतु मापि मित्र ददातु ते मेऽपि मुदं मुकुन्दः ।**
**निहन्तु ते विष्णुरघानि मेऽपि रक्षत्वसौ वा मपि नौ मुरारिः ॥**
**ददातु वां ना वपि शर्म कृष्णः करोतु वां श्रीदयितो दयां नौ ।**
**पुष्णातु वो नोऽपि हरिर्धनं वा ददातु नो हन्त्वशुभानि वा नः ॥** इति

पदात्परयोः किम् । वाक्यादौ माभूत् त्वां पातु, मां पातु । अपादादौ किम् । " वेदैरशेषैः संवेद्योऽस्मान् कृष्णः सर्वदावतु " ॥ स्थग्रहणात् श्रूयमाणविभक्तिकयोरेव । नेह—इति युष्मत्पुत्रो ब्रवीति । इति असत्पुत्रो ब्रवीति । अत्र युवयोर्युष्माकं वा पुत्रः । आवयोरस्माकं वा पुत्र इति विग्रहः । अत्र विभक्तेर्लुप्तत्वात् श्रूयमाणविभक्तिर्नास्ति अतो नादेशः ।

**एकवाक्य** इति । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे सतीत्यर्थः । निघातशब्दोऽनुदात्तार्थकः " सर्वानुदात्तोनिघात " इत्युक्तेः । **एकतिङिति** । एकः तिङ् यस्येति विग्रहः । वाक्यलक्षणमिदमेतच्छास्त्रोपयोग्येव । तेन " पश्य मृगो धावति " इत्यादौ नाव्याप्तिः । केचित्तु—" आख्यातं सविशेषणं वाक्यम् " इति वार्त्तिककारवचनपर्यालोचनया " एकतिङ् " इत्यत्र तिङन्तं विशेष्यसमर्पकं विवक्षितम्, ततश्च " पश्य मृगोधावती " त्यत्र तिङन्तद्वये सत्यपि पश्येत्यस्यैव विशेष्यसमर्पकत्वान्नोक्त दोष इत्याहुः ।

परे तु "पश्य"—इत्यत्र "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" (पू० मी०) इति शास्त्रान्तरप्रसिद्धमेव तत् । **अयमभिसन्धिः**—अत्र तिङ्पदं तिङन्तार्थपरम् । तथाच—"एकतिङन्तार्थ मुख्यविशेष्यक बोधजनक पदससुदायो वाक्यम्" इति । एवञ्च—यत्र क्रियापदं न श्रूयते तत्र "अस्तिर्भवन्तीपरः प्रयुज्यमानोऽप्यस्ति" इति भाष्यवचसा तिङन्तपदमध्याहार्यमेव । "पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इति भाष्येण च "पचति भवति" इत्यादावपि न वाक्यत्वव्याघातः । **तेनेहेति** । दर्शितवाक्यलक्षणेन । * "ओदनं पच तव भविष्यति" इति अत्र पचान्तमेकं वाक्यम्, तवेत्याद्यपरम् ततश्च "तव" इति युष्मच्छब्दस्य भिन्नवाक्यस्थत्वात् पदात् परत्वाभावात् नादेश इति भावः । **शालीनामिति** । व्रीहीणामित्यर्थः । अस्य "शालिसम्बन्ध्योदनकर्मकं त्वत्सम्प्रदानकं मत्कर्तृकं दानम्" इति एकतिङन्तार्थमुख्य विशेष्यकबोधजनकपदसमुदायत्वादेकवाक्यत्वम् । अत इह "तव" इत्यस्य स्थाने "ते" इत्यादेशः स्यादेवेत्यर्थः । **एतेवान्नावादयः०** । "युष्मदस्मदोर्विभाषा अनन्वादेशे" इति वार्त्तिकमर्थतः पठितम् । उदाहरति—**धातेति** । अन्वादेशे तु नित्यम् इत्यस्योदाहरणम्—"**तस्मै ते नम**" इति । नात्रादेशविकल्प इति भावः । **न चवाहा०** । चादीनां द्वन्द्वः तदाह—**चादीति** । पञ्चानामन्यतमेन योगेनेत्यर्थः । उदाहरति—**हरिस्त्वामिति** । "हरिकर्त्तृकं समुच्चितत्वन्मत्कर्मकं रक्षणं प्रार्थनाविषय" इति वाक्यार्थबोधे चार्थसमुच्चययोगस्य युष्मदस्मदोरेव साक्षात्सत्त्वेन निषेधः सिद्ध इति भावः । **कथमिति** "किंकारणकः त्वन्मदन्यतरकर्मकहरिकर्त्तृ-करक्षणाभावः" इति बोधे अन्यतररूपवाशब्दार्थस्य युष्मदस्मदर्थेन साक्षादन्वयान्निषेधः सिद्ध इत्यर्थः । इदन्तु बोध्यम्—युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । परम्परासम्बन्धे तु आदेशः स्यादेव । "हरोहरिश्च मे स्वामी" इति "समुच्चितहरिहराभिन्नो मत्सम्बन्धी स्वामी" इति शाब्दबोधे चार्थसमुच्चयस्य हरिहरार्थ एवान्वयो नतु अस्मच्छब्दार्थ इति साक्षात्सम्बन्धाभावान्न निषेध इत्याशयः । **पश्यार्थैश्चा०** ।

दर्शनं पश्यः । अत एव निपातनाद्भावे "पाघ्राध्माधेट्" इति शः । इदञ्च ज्ञानमात्रम् । नतु चाक्षुषज्ञानमेव । "अनालोचने" इति निषेधात् । आलोचनं चाक्षुषज्ञानम् । तदाचष्ट—**अचाक्षुषेति** । उदाहरति—**चेतसेति** । मनसा त्वां चिन्तयतीत्यर्थः, नात्रादेशः । "अनालोचने" इत्यस्य फलितमाह-**आलोचनेत्विति** अत्रादेशःस्यादेवेत्यर्थः । **सपूर्वायाः०** । अन्वादेशेऽपि क्वचिद्विकल्पार्थमिदम् । सहशब्दोऽत्र सलोमक इत्यत्रेव विद्यमानवचनः । विद्यमानं पूर्वं यस्या इति विग्रहः । प्रथमेत्यनेन प्रथमान्तं गृह्यते तदाचष्ट—**विद्यमानेति** । उदाहरति-**भक्तस्त्वमिति** ।

---

* "त्वत्कर्त्तृकमोदनकर्मकं प्रेरणाविषयः पचनम्" इति "त्वत्स्वामिकमोदनकर्त्तृकं भवनम्" इति भिन्नो भिन्न एव वाक्यार्थ इति एकतिङन्तार्थमुख्यविशेष्यकबोधजनकत्वाभावात् नैकवाक्यत्वमिति कैयटादीनामाशयः ।

त्वं भक्तोऽहमपि तेन हरिस्त्वां मां च त्रायते इति सम्बन्धः। अत्र—तेनेति पूर्वविद्यमानपदं ततो हरिरिति प्रथमान्तम् ततः परस्य युष्मच्छब्दस्यादेशः। तथा त्रायते इत्यस्मात्परं स इति प्रथमान्तं पदं ततः परस्याऽस्मच्छब्दस्यादेशः। **सामन्त्रितम्**। "सम्बोधने च" इत्यतः सम्बोधने इति वर्त्तते सा इत्यनेन प्रथमानिर्देशः तदाचष्टे—**सम्बोधने** इति। **तदन्तामिति**। महासञ्ज्ञाकरणात् संज्ञाविधावपि तदन्तग्रहणमिति भावः। **आमन्त्रितम्०**। * स्पष्टम्। उदाहरति—**"अग्ने तव"** इति। इह यथायोगं युष्मदस्मदोः "तेनसौ" इत्यादेशौ न भवतः। तव अस्मान् इत्यनयोः पदात्परत्वाभावात् पादादौ स्थितत्वाच्चेति भावः। **नामन्त्रिते०**। आमन्त्रितम्, अविद्यमानवदित्यनुवर्त्तते। तदाचष्टे—**विशेष्यमिति**। उदाहरति—**"हरे"** इति। अत्र "दयालो" इति समानाधिकरणविशेषणे परे हरिशब्दो नाऽविद्यमानवत् ततश्च हरे इति पदात् परत्वात् "नस्" इत्यादेश इति भावः। प्रपञ्चस्तु **सिद्धान्त**कौमुद्यादौ।

**सुपात्। सुपाद्। सुपादौ॥ पादः पत्। ६। १३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः। सुपदः। सुपाद्भ्याम्। अग्निमत्। अग्निमद्। अग्निमथौ। अग्निमद्भ्याम्॥ अनिदितां हल उपधायाः क्ङिति। ६। ४। २४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति च। उगिदचामिति नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। प्राङ् प्राञ्चौ। प्राञ्चः॥ अचः। ६। ४। १३८। लुप्तनकारस्याञ्चतेर्भस्याऽकारस्य लोपः॥ चौ। ६। ३। १३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः। प्राचः प्राचा। प्राग्भ्याम्। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्। उदङ्। उदञ्चौ॥ उद ईत्। ६। ४। १३९। उच्छब्दात्परस्याञ्चतेर्भस्याकारस्य ईत्। उदीचः। उदीचा उदग्भ्याम्। समः समि। ६। ३। ९३। अप्रत्ययान्तेऽञ्चतौ परे। सम्यङ्। सम्यञ्चौ। समीचः। सम्यग्भ्याम्॥ सहस्य सध्रिः। ६। ३। ९५। तथा। सध्र्यङ्। सध्र्यञ्चौ। सध्रीचः। सध्र्यग्भ्याम्॥ तिरसस्तिर्यलोपे। ६। ३। ९४। अलुप्ताकारेऽञ्चतौ अप्रत्ययान्ते तिरसस्तिर्यादेशः। तिर्यङ्। तिर्यञ्चौ। तिरश्चः। तिरश्चा। तिर्यग्भ्याम्॥ नाञ्चेः पूजायाम्। ६। ४। ३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न। प्राङ्। प्राञ्चौ। नलोपाभावादल्लोपो न। प्राञ्चः। प्राङ्भ्याम्। प्राङ्क्षु। प्राङ्षु॥ एवं पूजार्थे प्रत्यङ्ङादयः। क्रुङ्। क्रुञ्चौ। क्रुञ्चः। क्रुङ्भ्याम्। पयोमुक्। पयोमुग्। पयोमुचौ। पयोमुचः। पयोमुग्भ्याम्**

* अनुवर्तनीयपदान्तराभावादित्यर्थः।

**सुपादिति**। शोभनौ पादौ यस्येति बहुव्रीहिः। "संख्यासुपूर्वस्य"—इति पादस्यान्त्यलोपः। अस्य सुटि रूपाण्याह—सुपादिति। सुपादः। सुपादम्। "सुपाद् शस्" इति स्थिते शस्येत्त्वेन लोपे "यचिभम्" इत्यनेन भसंज्ञायां सूत्रं प्राप्नोति "**पादःपत्**" इति। "अङ्गस्य" "भस्य" इत्यधिक्रियते, तदाचष्टे—**पाच्छब्दान्तमिति**। पाच्छब्दान्तस्य विधीयमानोऽपि पदादेशः "निर्दिश्यमानस्यादेशा भवन्ति" इति परिभाषालब्धमर्थमाचष्टे—**तदवयवस्येति**। एवं पदादेशे अज्झीनम्, सस्य रुत्वविसर्गौ। सुपदः। सुपदा। सुपाद्भ्याम्। सुपाद्भिः। सुपदे। सुपाद्भ्यः २ सुपदः २। सुपदोः २। सुपात्सु। एवं द्विपाद्—चतुष्पादादयः। इति दान्ताः। थकारान्तोऽग्निमथ् शब्दः। अग्निमत्। अग्निमद्। सौ जश्त्वचर्त्वे इति भावः। अजादौ अज्झीनम्०। अग्निमथौ। इत्यादि। भ्यामादौ पदसञ्ज्ञायां जश्त्वेन थस्य दः। अग्निमद्भ्यामित्यादि। अयं शब्दः "मन्थ हिंसासंक्लेशनयोः" इत्यस्य धातोः। "मथि" धातोस्तु इदित्वात् नलोपाभावात्–अग्निमन्। अग्निमन्थौ। अग्निमन्थः इत्यादि। भ्यामादौ संयोगान्तलोपे—अग्निमन्भ्याम्। सुपि–अग्निमन्सु। इति थान्ताः। एवं सूत्रग्रन्थ्शब्देऽपि। अथ **चकारान्ताः**। प्र अञ्चतीत्यर्थे गत्यर्थकात् "अञ्चु" धातोः ऋत्विगित्यादिसूत्रेण क्विन्। क्विनः पूर्वदर्शितरीत्या सर्वापहारी लोपः। "प्र अञ्च्" स्थिते प्राप्तियोग्यं सूत्रमाह—"**अनिदिताम्०**"। इत् ह्रस्वेकार इत्सञ्ज्ञको येषां तानि इदन्ति, न इदन्ति अनिदन्ति तेषामनिदिताम् एतच्च "अङ्गस्य" इत्यधिकृतस्य विशेषणम्। "श्नान्नलोप" इत्यतो 'न लोप' इति वर्तते विशेषणे तदन्तविधिरित्यत आह—"**हलन्तानाम्०**" इति। एवमनेन सूत्रेण उपधानस्य लोपे "प्र अच्" इति जातम्। ततः प्रातिपदिकसञ्ज्ञया सुबाद्युत्पत्तौ प्रथमैकवचने "प्र अच् सु" इति स्थिते प्रत्ययस्य उकारस्य इत्त्वेन लोपे "उगिदचाम्" इति अन्त्यादचः परे नुमि, उभयोर्लोपे "प्र अन्च् स्" इति जाते "हल्ङ्याब्भ्यः"—इति सुलोपे, "संयोगान्तस्य"—इति चलोपे, "प्रान" इत्यवस्थायां "क्विन्प्रत्ययस्य—इति नस्य कुत्वेन ङकारः "**प्राङ्**" इति सिद्धम्। एवम्—"प्राच् औ" इत्यवस्थायाम् नुमि, उभयोर्लोपे, "नश्चापदान्तस्य"—इति नस्यानुस्वारे "अनुस्वारस्य ययि"—इति परसवर्णे—**प्राञ्चौ। प्राञ्चः। प्राञ्चम्। प्राञ्चौ**। शसि तु—"प्र अन्च् अस्" इति स्थिते "अनिदिताम्" इति नस्य लोपे परां प्रक्रियां—दर्शयितुमाह—**अचः**। "अङ्गस्य" "भस्य" इत्यधिक्रियेते। अल्लोपोऽनः इत्यतः अल्लोप इति वर्त्तते। अच्शब्देन लुप्तनकाराञ्चतेरेव ग्रहणं व्याख्यानादित्यभिप्रेत्याह—"**लुप्तनकारस्ये**"ति। **चौ**। "ढ्रलोपे"—इत्यतः "पूर्वस्य दीर्घोऽणः" इत्यनुवर्त्तते। "चि" शब्देन लुप्ताकारनकारस्याञ्चतेरेव ग्रहणं व्याख्यानात्—इति व्याचष्टे—"**लुप्ताकारनकारे०**" इति। एवम्—"अचः" इति सूत्रेण भस्य अचोऽकारस्य लोपे "प्र च् अस्" इति भूते "चौ" इत्यनेन पूर्वस्य प्रवर्त्तिनोऽणः (अकारस्य) दीर्घे, चकारस्य परयोगे, सस्य रुत्वविसर्गौ। **प्राचः**। एवमेव अजादौ विभक्तौ प्रक्रिया। यद्यप्येतत् सवर्णदीर्घेणापि

सिध्यति तथापि "प्रतीच" इत्याद्यर्थं सूत्रं न्याय्यत्वादिहाप्युपन्यस्तम्। **प्राचा**। भ्यामादौ—"प्राच् भ्याम्" इत्यवस्थायां "चोकुः" इति कुत्वम्। प्राग्भ्याम्। प्राग्भ्यः। प्राचे। प्राग्भ्याम्२। प्राग्भ्यः२। प्राचः२। प्राचोः। प्राचाम्। प्राचि। प्राचोः। * प्राक्षु। "**प्रत्यङ्**" इति। प्रतिपूर्वादञ्चेः क्विन्, यण्। नलोपः, प्रातिपदिकसञ्ज्ञा, सुबाद्युत्पत्तिः। प्रथमैकवचने—"उगिदचाम्" नुमि, हल्ङ्यादिना सुलोपः, चस्य संयोगान्तलोपः, नुमो नस्य "क्विन्" इति कुत्वेन ङकारः—**प्रत्यङ्**। प्रत्यञ्चम्। प्रत्यञ्चौ। इति प्राञ्च्वत्। यण् विशेषः। शसि—"प्रति अच् अस्" इत्यवस्थायां जातायाम् "अचः" इत्यकारलोपे, "चौ" इति इकारस्य दीर्घे, सस्य रुत्वविसर्गौ। **प्रतीचः**। "चौ" इत्यारम्भसामर्थ्यादेवात्र यणेनेति भाष्यसमाधानम्। प्रतीचा। प्रत्यग्भ्याम्। प्रत्यग्भिः, इत्यादि। प्रत्यक्षु। "**उदङ्**" इति। उत् अञ्चतीति विग्रहे क्विनादिः पूर्ववदेवेति भावः। उदञ्चौ। उदञ्चः। उदञ्चम्। उदञ्चो। शसादौ—"उद् अच् अस्" इतिस्थिते "अचः" इति अकारलोपे प्राप्ते तन्निषेधकं सूत्रमाह—"**उद ईत्**" इति। "भस्य" इत्यधिक्रियते। "अचः" इति वर्त्तते तदाचष्टे—**उच्छब्दाद्** इति। अनेन अकारस्य ईत्वे, तकारस्येत्त्वेन लोपे, परयोगे, सस्य रुत्वविसर्गौ। उदीचः। उदीचः। उदग्भ्यामित्यादि। **समः समि**। "विश्वग्देवयोश्च टेः"—इत्यतः "अञ्चताव-प्रत्यये" इति वर्त्तते तदाचष्टे—"**अप्रत्ययान्ते**" इति। "सम् अन् च्" इत्यत्र "समः"—इति समः स्थाने "समि" इत्यादेशे विहिते यणि, क्विनः सर्वलोपे, "कृत्त०"—इति प्रातिपदिकसंज्ञायां प्रथमैकवचने सुप्रत्यये स्थापिते उकारलोपे, "सम्यन् च् स्" इति भूते "अनिदिताम्"—इति नलोपे "उगिदचाम्"—इति नुमि, उमो लोपे, "हल्ङ्याब्भ्य"—इति सुलोपे "संयोगान्तस्य"—इति चलोपे, "क्विन्प्रत्ययस्य—इति कवर्गान्तादेशेन ङकारः। सम्यङ्। सम्यञ्चौ। सम्यञ्चः। सम्यञ्चम्। सम्यञ्चो। शसि—पूर्वं विधिं कृत्वा "अचः" इत्यकारलोपे, "चौ" इति पूर्वस्याणो दीर्घे चस्य विभक्त्यकारयोगे सस्य रुत्वविसर्गौ—समीचः। समीचा। सम्यग्भ्याम् इत्यादि। **सहस्य सध्रिः**। "अञ्चतावप्रत्यये" इति वर्त्तते अत आह—**तथेति**। "**सध्र्यङ्**" इति सह अञ्चतीति विग्रहः। सर्वः पूर्वो विधिः सम्यञ्च्वत्, केवलं सहस्थाने "सध्रि" इत्यादेशे विशेषः। सध्र्यादेशे यण्। सध्र्यङ्। सध्र्यञ्चौ। सध्र्यञ्चः। सध्र्यञ्चम्। सध्र्यञ्चौ। सध्रीचः। "अच" इति लोपे "चौ" इति दीर्घः। सध्रीचा। सध्र्यग्भ्याम्। इत्यादि। **तिरसस्तिर्यलोपे** "तिरि" इति लुप्त-प्रथमान्तपदम्। "अञ्चतावप्रत्यये" इति वर्त्तते तदाचष्टे—**अलुप्ताकारेति**। "तिरस् अन्च्" इति स्थापिते ऋत्विगित्यादिना क्विनि तस्य सर्वलोपे प्राप्ते० प्रथमैकवचने सुप्रत्यये, उकारलोपे "तिरस्"—इति "तिरि इत्यादेशे कृते" हल्ङ्याब्भ्यः—"इति सुलोपे, यणि, "तिर्यन्च्" इति जाते संयोगान्तलोपे, "क्विन्"—कुत्वे ङकारः। **तिर्यङ्**। तिर्यञ्चौ। तिर्यञ्चः तिर्यञ्चम्। तिर्यञ्चौ। शसादावचि—"अच" इति अल्लोपसत्त्वान्न तिर्यादेशः। अर्थात् "तिरस् अन्च् अस्"

इति जाते, नलोपः, अकारलोपः ततः " तिरस् च् अस् " इति भूतम्। ततः " स्तोश्चुना "—इति चवर्गयोगे सस्य शः, परयोगे प्रत्ययसस्य रुत्व-विसर्गौ—तिरश्चः। तिरश्चा। तिर्यग्भ्याम्। इत्यादि। तिर्यक्षु। पूजार्थकात् " अञ्चु " धातोः क्विनि प्रत्यये " अनिदिताम् "—इति नलोपे प्राप्ते सूत्रमारभ्यते—"नाञ्चेः"—इति। " अनिदितां हल उपधायाः "—इति सूत्रम् " श्नान्नलोप "—इत्यतो " न लोप " इति च वर्त्तते तदाचष्टे—**पूजार्थस्येति**। " प्राङ् " इति। प्रकर्षेण अञ्चति पूजयति इति पूजार्थादञ्चेः क्विन्। पूजार्थकत्वात् नलोपे न, " प्राञ्च् " इति शब्दः। प्रातिपदिकसञ्ज्ञायां सुबाद्युत्पत्तौ प्रथमैकवचने " प्राञ्च् सु इति भूते सति हल्ङ्यादिलोपः, संयोगान्तलोपः, "निमित्तापाये" इति न्यायेन अनुस्वारपरसवर्णनिवृत्तौ "क्विन्"—इति कुत्वेन ङकारः। **प्राङ्**। प्राञ्चौ। प्राञ्चः। प्राञ्चम्। प्राञ्चौ। शसादावचि " अचः " इति लोपो नास्ति " प्र अञ्च् अस् " इति स्थिते सवर्णदीर्घे हलोः परयोगे सस्य रुत्वविसर्गौ। **प्राञ्चः**। प्राञ्चा। भ्यामादौ " स्वादिषु "—इति पदत्वात् चस्य संयोगान्तलोपे अनुस्वारपरसवर्णनिवृत्तौ नस्य कुत्वेन ङः। प्राङ्भ्याम्। प्राङ्भिः। प्राञ्चे। प्राङ्भ्याम्। प्राङ्भ्यः। प्राञ्चः। प्राङ्भ्याम्। प्राङ्भ्यः। प्राञ्चः। प्राञ्चोः। प्राञ्चाम्। प्राञ्चि। प्राञ्चोः। प्राङ्खषु। प्राङ्क्षु। प्राङ्षु। " प्राङ् सु " इत्यवस्थायां जातायां " ङ्णोः "—इति वा कुक्। " चयो द्वितीया-" इति पक्षे खकारश्चेति ज्ञेयम्। **एवम्** इति। सुटि पूर्ववद्रूपाणि। शसादावचि—प्रत्यञ्चः। प्रत्यञ्चौ। प्रत्यङ्भ्याम् इत्यादि। एवम्—उदञ्चः। उदङ्भ्याम् इत्यादि बोध्यम्। कुञ्च कौटिल्याल्पीभावयोः। अस्य " ऋत्विग् "—इत्यादिना नलोपाभावोऽपि निपात्यते। क्रुन्च् स् " इति स्थिते हल्ङ्यादिना सुलोपे, चस्य संयोगान्तलोपे अनुस्वारपरसवर्णनिवृत्तौ " क्विन् "—इति कुत्वेन नस्य ङः। **क्रुङ्**। क्रुञ्चौ। क्रुञ्चः। क्रुञ्चम्। क्रुञ्चौ। क्रुञ्चः। क्रुङ्भ्याम्। इत्यादि। " **पयोमुक्** " इति। पयोमुञ्चतीति क्विप्। " पयोमुच् स् " इति स्थिते हल्ङ्यादिलोपे, " चोः कुः "—इति चस्य कुत्वे, "झलाम्—" इति कस्य गत्वे," वावसाने "—इति पक्षे चर्त्वम्। पयोमुग्। इत्यादि। पयोमुक्षु। एवं सुवाच्—वारिमुच्—बहुसच् प्रभृतयश्चान्ताः। **इति चान्ताः**।

**मह पूजायां॥ वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च। एते निपात्यन्ते। शतृवच्चैषां कार्यं स्यात्। उगित्वान्नुम्॥ सान्तमहतः संयोगस्य। ६। ४। १०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। महान्। महान्तौ। महान्तः। हे महन्। महतः। महद्भ्याम्। अत्वसन्तस्यचाऽधातोः। ६। ४ १४। अत्वन्तस्योपधाया दीर्घो धातुभिन्नाऽसन्तस्य चाऽसंबुद्धौ सौ। धीमान्। धीमन्तौ। धीमन्तः। हे धीमन्। शसादौ महद्वत्। भातेर्डवतुः। डित्वसामर्थ्यादभस्यापि टेर्लोपः।**

भवान्। भवन्तौ। शत्रन्तस्य तु भवन्॥ **उभे अभ्यस्तम्।६।१।५।** षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः। **नाभ्यस्ताच्छतुः ७।१।७८।** नुम्न। ददत्। ददतौ॥ **जक्षित्यादयः षट् ६।१।६।** षड्धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः। जक्षत्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्॥ दीधीङ् दीप्तिदेवनयोः। वेवीङ् वेतिना तुल्ये। एतौ छान्दसौ। दीध्यत्। वेव्यत्।

जक्षिजागृदरिद्राशास्दीधीङ्वेवीङ्चकास्तथा।
अभ्यस्तसंज्ञा विज्ञेया धातवो मुनिभाषिता॥१॥

**अथ तकारान्ताः॥** तत्र महच्छब्दे विशेषं वक्तुं भूमिकां रचयति—"**मह**" इति। "**वर्त्तमाना**"—इत्युणादिसूत्रमिदम् महेः कर्मणि अतिप्रत्ययः। मह्यते पूज्यते इति। **शतृवदिति**। शतृप्रत्ययान्तवदित्यर्थः। **उगित्वादिति**। शतृवद्भावेन पञ्चवचनेषु उगित्वात् नुम् इत्यर्थः। **सान्तमहतः**। "ढ्रलोपे"—इत्यतो दीर्घः इति "नोपधायाः" इति "सर्वनामस्थाने" इति च वर्त्तन्ते। 'सान्त' इति लुप्तषष्ठ्यन्तं संयोगस्य विशेषणम् इत्यादि मत्वा व्याचष्टे—**सान्तेति**। "महत् स्" इति स्थिते शतृवदतिदेशेन उगित्त्वं मत्वा—"उगिदचाम्" इति नुमि, उमो लोपे "महन्त् स्" इति भूते "सान्तमहतः"—नस्योपधाभूतस्य हकारोत्तरवर्तिन अकारस्य दीर्घत्वे, हल्ङ्याादिना सुलोपे, संयोगान्तलोपे—**महान्**। "महान्तौ"। अत्र—नुमि, दीर्घे, अनुस्वारपरसवर्णौ। "हे महन्" इति। असम्बुद्धावित्यनुवृत्तः "सान्तमहः"—इति दीर्घो न। महान्तः। महान्तम्। महान्तौ। महतः। महता। महद्भ्याम्। पदत्वात् तस्य जश्त्वेन दः इत्यादि स्पष्टम् §। **अत्वसन्तस्य०**। अतु इति लुप्तषष्ठीकं पृथक् पदम्। "सौ च" इत्यतः सौ इति, "सर्वनास्थाने०" इत्यतः असम्बुद्धौ इति, "नोपधायाः" इत्यतः उपधाया इति, "ढ्रलोपे"—इत्यतः दीर्घे इति च वर्त्तन्ते अत आह—**अत्वन्तस्येत्यादि**। धीः अस्य अस्तीत्यर्थे धीशब्दात् मतुप्। "धीमत्" शब्दस्य प्रातिपदिकसञ्ज्ञायां प्रथमैकवचने "अत्वसन्तस्य"—इति सूत्रेण सौ परे उपधाभूताकारस्य दीर्घत्वे "उगिदचाम्"—इति नुमि, उमो लोपे, हल्ङ्यादिलोपे "संयोगान्तस्य"—इति तलोपः। **धीमान्। धीमन्तौ**। अत्र नोपधादीर्घः **धीमन्तः**। हे धीमन्। असम्बुद्धावित्युक्ते न दीर्घः। **शसादाविति**। महच्छब्दवत् स्पष्टा प्रक्रियेत्यर्थः। भवच्छब्दे विशेषं वक्ति—**भातेरिति**। उणादिसूत्रमिदम्। भाधातोर्डवतुः प्रत्ययः स्यादित्यर्थः। **डित्वसामर्थ्यादिति**। टिसञ्ज्ञस्य भाधातोरा-

---

§महद्भिः। महते। महद्भ्याम्। महद्भ्यः। महतः। महद्भ्याम्। महद्भ्यः। महतः। महतोः। महताम्। महति। महतोः। महत्सु। इति।

कारस्य लोप इत्यर्थः । "भवतु" इति रूपम् उकारलोपे "अत्वसन्तस्य"—इति दीर्घे, "उगिदचाम्"—इति नुमि, हल्ङ्यादिलोपे, "भवान् त्" इत्यवस्थायां संयोगान्तलोपे—भवान् । भवन्तौ । भवन्तः । भवन्तम् । भवन्तौ । शेषं धीमच्छब्दवत् । शत्रन्तस्यत्विति । "लटः सतृशानचा–" इति सूत्रेण भूधातोर्लटः स्थाने शतृप्रत्यये "भवत्" शब्दो भवति । ऋकार इत् । अस्य तु सौ न दीर्घः अत्वन्तत्वाभावात् । "उगिदचाम्"—इति नुमि भवन् । शेषं भवतुशब्दवत् । उभे अभ्यस्तम् । द्वेरित्यनुवृत्त्यैव सिद्धे उभेग्रहणं समुदायप्रतिपत्त्यर्थमिति व्याचष्ट—षाष्ठेति । नाभ्यस्ता० । "इदितो नुम्"—इत्यतो "नुम्" इति वर्त्ततेऽत आह नुमनेति । "ददत् स्" इति स्थापिते "उगिदचाम्" इति नुमि प्राप्ते "नाभ्यस्तात्"—इति तन्निषेधे हल्ङ्यादिना सुलोपे ददत् । अत्वन्तत्वाभावाद्दीर्घोऽपि नेति ध्येयम् । ददतः । ददतम् । ददतौ । ददतः इत्यादि सुगमम् । भ्यामादौ पदत्वेन जश्त्वम्—ददद्भ्याम् । जक्षित्याद० । जक्ष, जागृ, दरिद्रा, चकास्, शासु, दीधीङ्, वेवीङ् इति सप्त धातवः इत्यर्थः । एते अभ्यस्तसंज्ञा भवन्तीत्यर्थः इत्याशयेनाह—षडिति । जक्षत् इति । अभ्यस्तसंज्ञाकरणात् "उगिदचाम्"—इति प्राप्तो नुम् निषिद्धः । रूपाणि तु ददत्—शब्दवज्ज्ञेयानि । बालबोधसौकर्याय जक्षादीन् श्लोकेन सङ्गृह्णाति—जक्षि० इति ।

गुप् गुब् । गुपौ । गुपः । गुब्भ्याम् ॥ त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६० । त्यदादिषूपपदेषु अज्ञानार्थाद्दृशेर्धातोः कञ्स्यात् चात् क्विन् ॥ आ सर्वनाम्नः । ६ । ३ । ९१ । दृग्दृशवतुषु । तादृक् २ । तादृशौ । तादृशः । तादृग्भ्याम् ॥ व्रश्चेति षः जश्त्वचर्त्वे । विट् २ । विशौ । विशः । विड्भ्याम ॥ नशेर्वा । ८ । २ । ६३ । नशेः कवर्गोन्तादेशोऽपदान्ते । नक् २ । नशौ नशः । नड्भ्याम् ॥ स्पृशोऽनुदके क्विन् । ३ । २ । ५८ । अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक् २ । घृतस्पृशौ । घृतस्पृशः । दधृक् २ दधृषौ दधृषः । दधृग्भ्याम् । रत्नमुट् २ । रत्नमुषौ । रत्नमुषः । रत्नमुड्भ्याम् । षट् २ । षड्भिः षड्भ्यः । षण्णाम । षट्त्सु षट्सु ॥ यत्तु प्राचा षण्णां षड्णामित्युदाहृतं तत्प्रामादिकमेव । प्रत्यये नित्यवचनात् ॥ र्वोरुपधाया दीर्घ इकः । ८ । २ । ७६ । रेफवान्तस्य धातोरुपधाया इको दीर्घः पदान्ते । पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् ॥ नुम्विसर्जनीयशर्व्यवायेऽपि । ८ । ३ । ५८ । एतैः प्रत्येकं व्यवधानेपिण्कुभ्यां परस्य मूर्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु । पिपठीःषु । चिकीः चिकीर्षौ । चिकीर्षु ।

अथ पान्ताः। गुपू रक्षणे। अस्माद्धातोः क्विप्। गोपायतीति गुप्। "आयादयः"—इति वैकल्पिकत्वादिह आयप्रत्ययाभावः। आयप्रत्ययपक्षे तु अतोलोपे यलोपे च "गोपा" इति रूपम्। गुप्। गुब्। गुपौ। गुपः। "स्वादिष्वि" ति पदत्वात् भ्यामादौ जश्त्वम्—"गुब्भ्याम्" इत्यादि स्पष्टम्। इति **पान्ताः**॥ अथ शान्ता निरूप्यन्ते। **त्यदादिषु**—इति। "स्पृशोऽनुदके क्विन्" इत्यतः चेन क्विन्। अनुकृष्यते तदाचष्टे—**त्यदादिष्विति**। कञन्तस्य तूदाहरणम्—तादृशः। यादृशः। तच्चेह हलन्तेषूपयोगाभावान्नोक्तम्। अनालोचने किम्। तं पश्यतीति **तद्दर्शः**। कर्मण्यण्। तद्शब्द उपपदे अनेन सूत्रेण क्विनि, उपपदसमासे, सुब्लुकि "तत् दृश्" इत्यवस्थायां सूत्रमाह—**आसर्वनाम्नः**। "दृग्दृशवतुपु" इति वर्त्तते। आ इत्यविभक्तिको निर्देशः। सर्वनाम्न आकारोन्तादेशः स्यात् दृग्दृशवतुष्वित्यर्थः। अन्तादेश इति अलोन्त्यपरिभाषैकवाक्यात्। अनेन दस्य आत्वे सवर्णदीर्घे "तादृश्" इति रूपे जाते प्रातिपदिकसञ्ज्ञायां सुबाद्युत्पत्तौ प्रथमैकवचने "तादृश् स्" इति स्थिते हल्ङ्यादिना सुलोपे "क्विन् प्रत्ययस्य"—(८।२।६२) इति कुत्वस्य असिद्धत्वात् "व्रश्च भ्रस्ज"—(८।२।३६) इति शस्य षः। तस्य जश्त्वेन डः। तस्य "क्विन्"—इति कुत्वेन गः। तस्य चर्त्त्वेन पक्षे कः—**तादृक् तादृग्**। अजादौ सर्वत्र अज्झलिम तादृशौ। तादृशः। भ्यामादौ षडगाः प्राग्वत्;। तादृग्भ्याम्। तादृक्षु। शकारान्तो "विश्" शब्दः। "विश् स्" इति स्थिते हल्ङ्यादिलोपे "व्रश्च"—इति षत्वे, जश्त्वचर्त्त्वे—**विट्, विड्**। विशौ। विशः। विड्भ्याम्। अत्र षत्वजश्त्वे। विट्सु। विट्त्सु। षत्वे जश्त्वेन डे सति "डः सि धुट्"। तत उभयत्र चर्त्त्वम्। "नश्" शब्दे विशेषमाह—**नशेर्वा**। "क्विन्प्रत्ययस्य"— इत्यतः "कु" इति वर्त्तते तदाचष्टे **नशेरिति**। पक्षे व्रश्चेति षत्वमिति भावः। "नश् स्" इति स्थिते अनेन कुत्वपक्षे-जश्वे चर्त्त्वे च **नक् नग्** इति। षत्वपक्षे—जश्त्वचर्त्त्वयोः सतोः **नट् नड्** इति। अजादौ सर्वत्र अज्झलिम्। भ्यामादौ तु कुत्वपक्षे—जश्त्वेन गकारे कृते **नग्भ्याम्**। षत्वपक्षे—जश्त्वेन डकारे कृते **नड्भ्याम्** इत्यादि। सप्तमीबहुवचने—**नक्षु, नट्सु, नट्त्सु** इति। **स्पृशोऽनुदके०**। "सुपिस्थः" इत्यतः सुपीत्यनुवर्त्तते तदाह **अनुदके** इति। उदकशब्दभिन्ने सुवन्त इत्यर्थः। घृतं स्पृशति इति विग्रहः। अनेन क्विन् प्रत्यये उपपदसमासे सुपो लुकि "घृतस्पृश्" शब्दसिद्धिः। ततः प्रथमैकवचने "घृतस्पृश् स्" इति स्थिते हल्ङ्यादिना सोर्लोपे, "क्विन्"—इति कुत्वस्य असिद्धत्वात् पूर्वं "व्रश्च"—इति षः, तस्य जश्त्वेन डः, तस्य कुत्वेन गः, तस्य चर्त्त्वविकल्पे—**घृतस्पृक् घृतस्पृग्** इति रूपे। अजादौ सर्वत्र अज्झलिम्। घृतस्पृशौ इत्यादि। भ्यामादौ पूर्ववत् षत्वडत्वकुत्वानि। **घृतस्पृग्भ्याम्** इत्यादि। सुपि—षत्वे, डत्वे, कुत्वेन गत्वे, "खरि च" इति गस्य चर्त्त्वे कषयोगे क्षः—**घृतस्पृक्षु**। क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम्—**स्पृक्**। षडगकाः प्राग्वत्। इति **शान्ताः**। अथ षान्ताः। तत्र "ञिधृषा प्रागल्भ्ये" अस्मात् "ऋत्विग्"—

इत्यादिना क्विन्। द्वित्वमन्तोदात्तत्वञ्च निपात्यते। "दधृष् स्" इति स्थिते हल्ङ्यादि-लोपे जश्त्वं प्रति कुत्वस्यासिद्धत्वात्प्रथमं जश्त्वेन षस्य डः। ततः "क्विन्"—इति डस्य कुत्वेन गः। तस्य चर्त्वविकल्पे—"**दधृक् दधृग्**" इति अजादौ सर्वत्र षस्य परयोगः—दधृषौ। दधृषः इत्यादि। भ्यामादौ पूर्ववत् डगौ। दधृग्भ्याम् इत्यादि। चर्त्वन्तु नास्ति विषयाभावात्। रत्नानि मुष्णातीति "मुष् स्तेये" अस्मात् क्विप्। उपपदसमासः। "रत्नमुष् स्" इति स्थिते सोर्लोपे, जश्त्वचर्त्वे—**रत्नमुट् रत्नमुड्** रत्नमुषौ। रत्नमुषः। इति। भ्यामादौ स्वादिष्विति पदत्वेन जश्त्वम्—रत्नमुड्भ्याम् इत्यादि। रत्नमुट्सु, रत्नमुट्त्सु इति। **षट्** इति। "षष् जस्" इति स्थापिते "षड्भ्यो लुक्" इति जसो लुकि जश्त्वचर्त्वे—षट् षड्। एवं शस्यपि। "**षण्णाम्**" इति। "षट्चतुर्भ्यश्च" इति नुट्। "अनाम्" इति विकल्पं बाधित्वा "प्रत्यये भाषायां नित्यम्" इति वचनान्नित्यमनुनासिक इत्याशयेनाह—**यस्त्विति**। तदन्तविधिः परमषट्। परमषण्णाम्। आङ्गत्वादिति भावः। प्रियाः षट् यस्य इति बहुव्रीहौ तु—प्रियषट्, प्रियषड्, प्रियषषौ प्रियषषः इत्यादि रत्नमुष्शब्दवत्। प्रियषषाम्। तदर्थप्राधान्याभावान्नात्र आङ्गकार्यप्रवृत्तिरिति भावः। पठितुमिच्छति इति विग्रहे "पिपठिष्" धातोः क्विप्। अतोलोपः। पिपठिष् शब्दः। कृदन्तत्वात् प्रातिपदिकसञ्ज्ञा। ततः प्रथमैकवचने "पिपठिष् स्" इति स्थिते हल्ङ्यादिलोपे "आदेशप्रत्यययोः" (८। ३। ५९) इतिसूत्रेण सन्प्रत्ययस्य स्थाने कृतस्य षत्वस्य "ससजुषोरुः" (८। २। ६६) इति सूत्रकृतं रुत्वं प्रति षत्वस्याऽसिद्धत्वात् अर्थात् रुत्वविधायकशास्त्रदृष्ट्या सत्वस्यैव सत्त्वात् रुत्वम्। उकारस्येत्त्वेन लोपे पिपठिर्" इत्यवस्थायां प्राप्तियोग्यं सूत्रमाह—**र्वोरुपधायाः**"—इति। र् च व् च र्वौ तयोः र्वोः। "पदस्य" इत्यधिकृतम्। "स्कोः संयोगा"—इत्यतः अन्ते, "सिपि धातोरुर्वा" इत्यतो धातोरिति च वर्त्तते, तद्विशेषणत्वेन तदन्तविधिरित्याचष्टे—**रेफवान्तयोरिति**। अनेन उपधाभूतस्य इकारस्य दीर्घे, रेफस्य विसर्गे—"**पिपठीः**" इति रूपम्। पिपठिषौ। पिपठिषः। पिपठिषम्। पिपठिषौ। पिपठिषः। पिपठिषा। भ्यामादौ तु "स्वादिषु"—इति पदत्वात् "र्वोरुपधायाः"—इति पदान्तलक्षणे दीर्घे—**पिपठीर्भ्याम्**। पिपठीर्भिः। पिपठिषे पिपठीर्भ्याम्। पिपठीर्भ्यः। पिपठिषः। पिपठीर्भ्याम्। पिपठीर्भ्यः। पिपठिषः पिपठिषोः। पिपठिषाम्। पिपठिषि। पिपठिषोः। सुपि—"पिपठिष् सु" इति स्थिते अत्र "ससजुषो"—रिति सूत्रदृष्ट्या षत्वं तु नास्ति, किन्तु सकारः। एवं "पिपठिस् सु" इति स्थितिर्मन्तव्या। ततः सस्य रुत्वे, "र्वो"—रिति उपधादीर्घे रेफस्य विसर्गे, तस्य सत्वं बाधित्वा "वा शरि" इति विकल्पेन विसर्जनीयः। "पिपठीःसु" इति जातम्। तदभावपक्षे—विसर्जनीयस्य सत्वम्—"पिपठीस् सु" इति, विसर्जनीयपक्षे तु—"आदेश"—इति षत्वाऽप्राप्तौ सूत्रमाह—"**नुम्विसर्जनीय॰**" इति। "अपदान्तस्य मूर्धन्यः" "इणकोः"—

इति, "सेहः साडः सः" इत्यतः स इति च वर्त्तते तदाह—"**एतैः प्रत्येकम्**" इति। तदनेन सुपः सस्य षत्वे,* ष्टुत्वेन पूर्वस्य षत्वम्—**पिपठीष्षु**। विसर्गपक्षे—सुपः षत्वे—**पिपठीः षु**। इति। "**चिकीः**" इति। कर्त्तुमिच्छतीति चिकीर्षति। कृधातोः सनि "एकाच उपदेशे"—इति "सनि ग्रहगुहोश्च" इति वा सन इडभावे "इको झल्" इति कित्वात् गुणाभावे "अज्झनगमां सनि" इति दीर्घे "ऋत इद्धातोः" इति इत्त्वे रपरत्वे, "हलि च" इति दीर्घे, "सन्यङोः" इति द्वित्वे, हलादिशेषे ह्रस्वे "कुहोश्चुः" इत्यभ्यासककारस्य चुत्वे, सस्य षत्वे, "चिकीर्ष" इति रूपे जाते, "सनाद्यन्ताः"—इति धातुत्वे, ततः क्विपि, तस्य सर्वापहारिणि लोपे "अतो लोपः" (६। ४। ४८) इत्यकारलोपे, "चिकीर्ष्" शब्दे सिद्धे कृदन्तत्वात प्रातिपदिकसंज्ञायां प्रथमैकवचने "चिकीर्ष् स्" इति स्थिते हल्ङ्यादिना सोर्लोपे, षत्वस्याऽसिद्धत्वात् "रात्सस्य" (८। २। २४) इति नियमात् सलोपे, "खरवसानयो"-रिति रेफस्य विसर्गे रूपम्—"**चिकीः**" इति। अजादौ सर्वत्र अश्मानम० इत्याह—**चिकीर्षौ** इति। "**चिकीर्भ्याम्**" इति भ्यामादौ पूर्ववत् सलोपनियमे सति ज्ञेयम्। "**चिकीर्षु**" इत्यत्र "रोः सुपि" इति नियमान्न विसर्गः।

**विद्वान्। विद्वांसौ। हे विद्वन्। वसोः सम्प्रसारणम् (६। ४। १३१) वस्वन्तस्य भस्य सम्प्रसारणम्। विदुषः। वसुस्रंस्विति दत्वम्। विद्वद्भ्याम्॥ पुंसोऽसुङ् ७। १। ८९ सर्वनामस्थाने। पुमान्। हे पुमन्। पुमांसौ। पुंसः। पुंभ्याम्। पुंसु। ऋदुशनेत्यनङ्। उशना। उशनसौ। अस्य संबुद्धौ वाऽनङ्नलोपश्च वा वाच्यः। हे उशन। हे उशनन्। हे उशनः। उशनोभ्याम्। अनेहा। अनेहसौ। अनेहसः। हे अनेहः। वेधाः। वेधसौ। वेधसः। वेधोभ्याम्। अदस औ सुलोपश्च ७। २। १०७॥ सौ परे। तदोरिति सः। असौ॥ औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च। असकौ। असुकः। त्यदाद्यत्वं पररूपत्वम्। वृद्धिः॥ अदसोसेर्दादु दो मः। ८। २। ८०॥ अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च। आन्तरतम्याद्ध्रस्वस्य उः। दीर्घस्य ऊः। अमू। जसः शी॥ एत ईद्बहुवचने। ८। २। ८१। अदसो दात् परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ। अमी। पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे। अमुम्। अमून्। मुत्वे कृते च घिसंज्ञायां नाभावः। न मु ने ८। २। ३॥ नाभावे कर्तव्ये कृते च मुभावो नासिद्धः। अमुना।**

---

* सनोऽकारलोपं प्रति षत्वस्याऽसिद्धत्वात् अकारलोपे सस्य पदान्तत्वेन—"अपदान्तस्य"-इति निषेधात् षत्वाऽप्रवृत्त्या "ष्टुत्वेन" इत्यावश्यकमिति भावः।

**अमूभ्याम्**। **अमीभिः**। **अमुष्मै**। **अमीभ्यः**। **अमुष्मात्**। **अमुष्य**। **अमुयोः**। **अमीषां**। **अमुष्मिन्**। **अमुयोः**। **अमीषु**। **हलन्ताः पुल्लिङ्गाः**।

अथ सान्ताः। तत्र विद्वस् शब्दः। वेत्तीति **विद्वान्**। "विदेः शतुर्वसुः"। अदादित्वात् शपो लुक्। "सार्वधातुकमपित्"—इति ङित्वान्नोपधागुणः। कृदन्तत्वात्प्रातिपदिकत्वम्। प्रथमैकवचने—"विद्वस् स्" इति स्थिते उगित्वान्नुम्। "सान्तमहतः"—इति दीर्घः। सुलोपः। "विद्वान् स्" इति जाते सस्य संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न—"**विद्वान्**" इति रूपम्। "हे विद्वन्" इति। असम्बुद्धाविति पर्युदासात् न दीर्घः। **विद्वांसौ**। **विद्वांसः**। **विद्वांसम्**। **विद्वांसौ**। सुटि नुमि कृते "सान्तमहत"—इति दीर्घे "नश्चा"—नस्यानुस्वार इति ज्ञेयम्। "विद्वस् शस्" इति स्थिते शस्येत्त्वेन लोपे विशेषमाह—**वसोः**० इति। "भस्य" इत्यधिकृतम्। प्रत्ययग्रहणपरिभाषया वसोरिति वस्वन्तस्य ग्रहणम् तदाचष्टे—**वस्वन्तस्येति**। एवमनेन वस्य उत्वे "विदु अस् अस्" इति स्थिते "सम्प्रसारणाच्च" इति पूर्वरूपे "विदुस् अस्" इति जाते, "आदेशप्रत्यययोः" इति सस्य षत्वे, परयोगे शसः सस्य रुत्वविसर्गौ—"**विदुषः**" इति। **विदुषा**। एवं सर्वत्राजादौ विभक्तौ ज्ञेयम्। भ्यामादौ हलादौ तु—"वसुस्रंसु"—इति सस्य दत्वम्। **विद्वद्भ्याम्**। **विद्वद्भिः**। इत्यादि। सुपि तु दत्वे चर्त्वम्—**विद्वत्सु**।

अथ सकारान्तः पुंस् शब्दः तत्र सुट्पर्यन्तं विशेषमाह—"पुंसोऽसुङ्" इति। "इतोऽत्"—इत्यतः "सर्वनामस्थाने" इति वर्त्तते, तच्च—विवक्षितमेव ग्राह्यम्, नतु परत्वविशिष्टम् व्याख्यानादितिसंक्षिप्याह—**सर्वनामस्थान** इति। ङित्वादन्त्यादेशोऽसुङ्। उकार उच्चारणार्थः ङ् इत्। "पुंस्" इति स्थिते अनेन सूत्रेण असुङादेशे "पुमस्" इति जाते, ततः—प्रथमैकवचने सौ स्थापिते "पुमस् स्" इति भूते "उगिदचाम्"—नुमि, उमो लोपे "पुम न् स् स्" इति जाते "सान्तमहतः"—इति दीर्घे, सोर्लोपे, सस्य संयोगान्तलोपः—**पुमान्**। **हे पुमन्**। असम्बुद्धावित्युक्तेर्न दीर्घः। असुङि—"पुमस् औ" इति जाते नुमि, उमो लोपे "सान्त"—इति दीर्घे "नश्चा"—इति नुमो नस्याऽनुस्वारे सस्य परनिविष्टत्वे—पुमांसौ। एवम्—पुमांसम्। पुमांसौ। शसादावचि सर्वनामस्थानत्वाभावात् नाऽसुङ्। पुंसः। पुंसा। भ्यामादौ—सस्य संयोगान्तलोपः। निमित्तापायादनुस्वारनिवृत्तिः। भकारमाश्रित्य पुनरनुस्वारः। तस्य पुनः परसवर्णे—पुम्भ्याम् ३। पुम्भिः। पुंसे। पुंसः २। पुंसोः २। पुंसाम्। पुंसि। पुंसु।

सेदिवस् शब्दोऽपि सान्तः। "सेदिवस् स्" इति स्थिते उगित्वान्नुमि, उमो लोपे, "सान्तमहतः"—इति दीर्घे, सुलोपे, संयोगान्तलोपे, तस्यासिद्धत्वान्नलोपो न—**सेदिवान्**। सेदिवांसौ। सेदिवांसः। सेदिवांसम्। सेदिवांसौ। "सेदिवस् शस्" इति स्थिते शस्येत्त्वेन लोपे,—"वसोः"—इति वस्य उत्वे सम्प्रसारणे च भाविनि, अकृतव्यूहपरिभाषया इटो निवृत्तिः—"से द् उ अ स् अस्" इति स्थितिर्जाता। ततः

" सम्प्रसारणाच्च " इति पूर्वरूपम् , अज्झीनम्०, सस्य षत्वम् , शसः सस्य रुत्व-विसर्गौ—**सेदुषः** । एवं सर्वत्राजादौ विभक्तौ प्रक्रिया ज्ञेया। भ्यामादौ तु "वसुस्रंसु"—इति सस्य दकारः। **सेदिवद्भ्याम्** इति। सुपि—सस्य दत्वे चर्त्वे च—**सेदिवत्सु** इति। अथ **उशनस्**। वश कान्तौ। अस्मात् " वशे कनसिः " इति कनसि प्रत्ययः। क इत्। इः उच्चारणार्थः " ग्रहिज्या "—इति सम्प्रसारणे " उशनस् " इति सिद्धम्। कृदन्तत्वात्प्रातिपदिकत्वम्। सुबाद्युत्पत्तिः। " उशनस् सु " इति स्थिते " ऋदुशन " इति ङित्वादन्त्यादेशेऽनङि, अङो लोपे, "ऋदुशनन् स् " इति जाते, " सर्वनामस्थाने "—इत्युपधादीर्घे, सोर्हल्ङ्यादिलोपे, " नलोपः "—इति नलोपे—" **उशना** " इति रूपम्। " उशना भार्गवः कविः इत्यमरः। अजादौ सर्वत्र सस्य परनिवेशः—उशनसौ। उशनसः। सम्बुद्धौ विशेषं वक्ति—" **अस्य** " इति। तत्र अनङि नलोपाभावे—**हे उशनन्**। नलोपे—हे उशन। अनङभावे सोर्लोपे सस्य रुत्वे विसर्गे च—**हे उशनः**। उक्तञ्च—

**सम्बोधने तूशनसस्त्रिरूपं**
**सान्तं तथा नान्तमथाप्यदन्तम्।**
**माध्यन्दिनिर्वष्टि गुणं त्विगन्ते**
**नपुंसके व्याघ्रपदां वरिष्ठः॥** इति।

" उशनस् भ्याम् " इति स्थिते " ससजुषो "—रिति रुत्वे, " हशि च " इत्युत्वे, " आद्गुणः " इति गुणे सति—**उशनोभ्याम्**। एवं भिसादौ हलादौ। सुपि " वाशरि "—इति विकल्पे—**उशन सु, उशनस्सु** इति द्वे रूपे। सकारान्तः * अनेहस् शब्दः। प्रथमैकवचने—" अनेहस् स् इति स्थिते " ऋदुशन "—इत्यनङ्। उपधादीर्घः। हल्ङ्यादिना सुलोपः। नलोपः। **अनेहा**। अनेहसौ। असम्बुद्धावित्युक्तेः—" हे अनेहः " इत्यत्राऽनङ् न। सुलोपे सस्य रुत्वविसर्गौ स्पष्टमन्यत्। **वेधाः** इति। " वेधस् सु " इति स्थिते " अत्वसन्तस्य "—इत्युपधादीर्घे सुलोपे, सस्य रुत्वविसर्गौ इति भावः। " **वेधोभ्याम्** " इति स्वादिषु "—इति पदत्वेन सस्य रुत्वे, " हशि च " इत्युत्वे, आद्गुणे रूपमित्यर्थः। शेषं स्पष्टम्। एवं चन्द्रमस्–सुवचस् प्रभृतयोऽपि यथालक्षणं वेदितव्याः। अदस् शब्दात् सावानीते त्यदाद्यत्वे प्राप्ते सूत्रमारभ्यते—**अदस औ०**। अदस इति षष्ठी। " औ " इत्यविभक्तिको निर्देशः। " तदो सः सौ "—इत्यत सौ इति वर्त्तते तत्संक्षिप्याचष्टे—" **सौ परे** " इति। अदस औकारान्तादेशः स्यात् सौ परे सुलोपश्चेत्यर्थः। एवमनेन सूत्रेण सस्य औत्वे कृते सुलोपे च, " अद औ " इति स्थिते " तदो सः "

---

* " नञि हन् एह च " इति नञ्युपपदे " हन् " धातोरसुन्। प्रकृते रेहादेशश्च। उपपदसमासः। " नलोपो नञः "। " तस्मान्नुडचि "—इति अनेहस् शब्दसिद्धिः। अनेहा। कालः।

इति दस्य सत्वे, वृद्धिः—“ **असौ** ” इति रूपम्। “ अव्ययसर्वनाम्नाम् ”—इति अकचि “ अदकस् सौ ” इत्यवस्थायां विशेषमाह—“ **औत्वप्रतिषेध** ” इति। **अयमाशयः**—“ अदस औ ” इत्यत्र तन्मध्यपतितन्यायेन अदकस् शब्दस्यापि ग्रहणात् औत्वे प्राप्ते विकल्पेन तत्प्रतिषेध इष्टः सादुत्वञ्च। प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे न प्रवर्त्तते इति। एवम्—“ अदकस् स् ” इति स्थिते सस्य औत्वे, सुलोपे दस्य सत्वे, “ **असकौ** ” इति। अत्र—“ सन्नियोगशिष्टानाम् ” इति न्यायेन उत्वं न। औत्वाभावपक्षे—दस्य सत्वे, सादुत्वे, सोर्लोपे, सस्य रुत्वविसर्गौ—**असुकः**। अमुकः इत्यादि त्वसाध्वेवेति भावः। “ अदस् औ ” इति स्थिते त्यदाद्यत्वम्, पररूपम्, वृद्धिः। “ अदौ ” इति जाते सूत्रमाह—**अदसोसे०**। अदसः, असेः, दात्, उ, दः, मः इति छेदः। तदाचष्टे—**अदसो०** इति। “ भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ” इति परिभाषालभ्यमर्थमाह—“**ऊदूतौ** ” इति। अनेन “ अदौ ” इत्यत्र दात्परस्य औकारस्य दीर्घः ऊकारः मत्वञ्च—**अमू**। जसि त्यदाद्यत्वे, पररूपे सिद्धवत्कृत्याह—“ जसः शी ” इति। अनेन जसः शीभावे, शस्येत्वेन लोपे, आद्गुणे—“ अदे ” इति जाते, दकारादेकारस्य उत्वे प्राप्ते सूत्रान्तरमाह—“ **एत ईत** ” इति। “ अदसोऽसेर्दादुदोमः ” इति—सर्वमनुवर्त्तते तदाह—“**अदस**” इति। तदनेन “ अदे ” इत्यत्र एकारस्य बहुवचनतया एत ईत् दस्य च मः—**अमी**। ननु—औजसादिषु त्यदाद्यत्वे, पररूपे च कृते, ततः उत्वमत्वयोः कृतयोः “ अमु औ ” “ अमु अः ” इत्याद्यनिष्टं रूपं स्यादित्याशङ्कापरिहारिणीं फक्किकामाह—**पूर्वत्रासिद्धमिति**। विभक्तिकार्यम्=त्यदाद्यत्वादिकम्। अत्र बहु वक्तव्यं ग्रन्थगौरवभयाभयान्नोक्तम्। एवम्—“ अदस् अम् ” इति स्थिते त्यदाद्यत्वे, पररूपे अमि पूर्वरूपे, उत्वमत्वयोः सतोः—अमूम्। अमू। “ अदस् शस् ” इति स्थिते त्यदाद्यत्वे, पररूपे, पूर्वसवर्णदीर्घे, शसः सस्य नत्वे, ततः उत्वमत्वयोः—**अमून्**। तृतीयैकवचने “ अदस् आ इति स्थिते त्यदाद्यत्वे, पररूपे, उत्वमत्वे च सिद्धवत्कृत्याह—“ मुत्वे कृते इति। “शेषोघ्यसखि” इति घिसञ्ज्ञा। “ आङो नाऽस्त्रियाम् ” इत्यनेन नाभाव इत्यर्थः। नच—विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे इत्युक्त्वा सम्प्रति मुत्वे कृते घिसञ्ज्ञायां नाभाव इति तद्विरुद्धमिदमुच्यत इति वाच्यम्। यद्विभक्तिकार्यं प्रति मुत्वं निमित्तं तस्यैव प्राक्त्वम् नान्यस्ये विवक्षितत्वात्। टायां तु नाभावं प्रति मुत्वं निमित्तमिति प्रथममेव मुत्व प्रवृत्तेरविरोधात्।

ननु—कृतेऽपि प्रथमं मुत्वे नाभावो न स्यात् तस्मिन् ( ३। ७। १२० ) कर्त्तव्ये मुत्वस्य ( ८। २। ८० ) असिद्धत्वात् घेः परत्वं नास्ति इत्यत आह—**नमुने**। “ असिद्धम् ” इत्यनुवर्त्तते। म् च उ श्चेति समाहारः। “ ने ” इति विषयसप्तमी, सति सप्तमी च। अतः नाभावे कर्त्तव्ये कृते चेत्यर्थो लभ्यते तदाचष्टे—**नाभावे०** इति। एवं प्रकृते नाभावे कर्त्तव्ये मुत्वस्य असिद्धत्वं नास्ति, अतो घेः परत्वात् नाभावो निर्बाधः। अथ कृतेऽपि नाभावे “ सुपि च ” ( ७। ३। १०२ ) इति

दीर्घः स्यात् दीर्घविधिं प्रति मुत्वस्य ( ८ । २ । ८० ) असिद्धत्वात् इति, अत उच्यते—कृतेऽपि नाभावे ("ने" इतिसत्तसप्तमीबलात्) मुत्वस्य असिद्धत्वं नास्ति, किन्तु सिद्धत्वमेव, अकाराभावात् "सुपि च" इति दीर्घो न प्रवर्त्तते । **अमुना**। अदस् भ्याम्" इति त्यदाद्यत्वे, पररूपे, "सुपि च" इति दीर्घे "अदाभ्याम्" इति जाते दस्य मत्वे, आकारस्य ऊत्वे रूपम्—**अमूभ्याम्**। "अदस् भिस्" त्यदाद्यत्वम्, पररूपम्, "नेदमदसोरकोः" इत्यैस्निषेधे "बहुवचने"—इत्येत्वे सस्य रुत्वे विसर्गे च "अदेभिः" इति जाते "एत ईद्बहुवचने" इति ईत्वमत्वयोः सतोः—**अमीभिः**। "अदस् ङे" इति स्थिते त्यदाद्यत्वे, पररूपे, ङेस्थाने स्मैभावे कृते "अदसोऽसे"–रिति उत्वमत्वयोः, षत्वे च–**अमुष्मै**। **अमूभ्याम्**।"अदस् भ्यस्"इति त्यदाद्यत्वे, पररूपे "बहुवचन"–एत्वे सस्य रुत्वे, विसर्गे च "अदेभ्यस्" इति जाते "एत ईत्"–ईत्वमत्वे—**अमीभ्यः**। "अदस् ङसि" इत्यत्र त्यदाद्यत्वे, पररूपे, ङसेः स्थाने स्मादादेशे, "अदस्मात्" इति उत्वे, षत्वे च रूपम्—**अमुष्मात्**। **अमूभ्याम्**। **अमीभ्यः**। अदस् ङस्" इति त्यदाद्यत्वे, पररूपे, ङसः स्थाने स्यादेशे "अदस्य" इति जाते, उत्वे, मत्वे, षत्वे च सति—**अमुष्य**। "अदस् ओस्" इति त्यदाद्यत्वे, पररूपे, "ओसि च" इति एत्वे, अयादेशे सस्य रुत्वविसर्गयोः "अदयोः" इति सति उत्वं, मत्वञ्च—**अमुयोः**। "अदस् आम्" इति त्यदाद्यत्वे, पररूपे, "आमि-सर्वनाम्नः"—इति सुटि लोपे "बहुवचने"—इति एत्वे, "अदेसाम्" इति सति उत्वं, मत्वं, षत्वञ्चेति—**अमीषाम्**। "अदस् ङि" इत्यत्र त्यदाद्यत्वे, पररूपे ङिस्थाने स्मिन् इत्यादेशे, "अदस्मिन्" इति सति, उत्वं, मत्वं, षत्वञ्चेति सिद्धम्—**अमुष्मिन्**। **अमुयोः** "अदस् सु" त्यदाद्यत्वे, पररूपे, "बहुवचने"—इति एत्वं, "एत ईत्"—ईत्वमत्वयोः, षत्वे च—**अमीषु**। इति सान्ताः।

**इति प्राज्ञचित्तप्रसादिन्यां हलन्तपुंलिङ्गप्रकरणम्।**

---

# अथ हलन्ताः स्त्रीलिङ्गाः।

**नहो धः। ८। २। ३४। झलि पदान्ते च॥ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ। ६। ३। ११६। क्विबन्तेष्वेषु पूर्वस्याणो दीर्घः। उपानत् उपानहौ। उपानहः। उपानद्भ्याम्। उपानत्सु। क्विन्नन्तत्वात्कुत्वेन हस्य घः। उष्णिक् २। उष्णिहौ। उष्णिग्भ्याम्। द्यौः। दिवौ। दिवः। द्युभ्याम्। गीः। गिरौ। गिरः। एवं पूः। चतस्रः। चतसृभिः। चतसृभ्यः। चतसृणाम्। चतसृषु। का। के। काः। सर्वावत्। यः सौ। ७। २। ११०। इदमो**

दस्य। इदमो मः। इयम्। त्यदाद्यत्वं। टाप्। दश्चेति मः। इमे। इमाः। इमां। इमे। इमाः। अनया। हलि लोपः। आभ्याम्। आभिः। अस्यै। अस्याः २ अनयोः २। आसाम्। अस्याम्। आसु। स्रक् २। स्रजौ स्रजः। स्रग्भ्यां। त्यदाद्यत्वे। टाप्। त्या। त्ये। त्याः। एवं तद्। यद्। एतद्। वाक् २। वाचौ। वाचः। वाग्भ्यां ३। अप्शब्दो नित्यं बहुवचनान्तः। अप्तृन्निति दीर्घः। आपः। अपः। अपोभिः। ७। ४। ४८। अपस्तकारो भादौ प्रत्यये। अद्भिः। अद्भ्यः। अपाम्। अप्सु। दिक्। दिशौ। दिशः। दिग्भ्याम्। त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्। दृशौ। दृशः। दृग्भ्याम्। त्विट्। त्विषौ। त्विषः। त्विड्भ्याम्। ससजुषोरिति रुत्वम्। सजूः सजुषौ। सजूर्भ्याम्। आशीः। आशिषौ। आशीर्भ्याम्। असौ। उत्वमत्वे। अमू। अमूः। अमुया। अमूभ्याम्। अमूभिः। अमुष्यै। अमूभ्यः। अमुष्याः २। अमुयोः २। अमूषाम्। अमुष्याम्। अमूषु। इति हलन्ताः स्त्रीलिङ्गाः॥

अथ हलन्तस्त्रीलिङ्गे हान्तान् निरूपयामः। तत्र णह बधने। अस्मात् उपपूर्वात् "सम्पदादिभ्यः"—इति कर्मणि क्विप्। **नहिवृति**—इति पूर्वपदस्य दीर्घः। उपनह्यते इति उपानह् शब्दसिद्धिः। कृदन्तत्वात् प्रातिपदिकसंज्ञा। "उपानह् सु" इति स्थिते सोर्हल्ङ्यादिलोपे प्राप्तियोग्यं सूत्रमाह—**नहोध**। "झलो झलि" इत्यतः झलि इति वर्त्तते "स्कोः संयोगाद्योः"—इत्यतः "अन्ते" इति च। "पदस्य" इत्यधिकृतम् तदाचष्टे—**झलि**—इति। अनेन हस्य धः, जश्त्वचर्त्त्वे—**उपानत्, उपानद्**। उपानहौ। उपानहः। उपानहम्। उपानहौ। उपानहः। उपानहा। भ्यामादौ—"उपानह् भ्याम्" इत्यादि स्थिते हस्य धत्वे, धस्य जश्त्वम्—**उपानद्भ्याम्। ३**। उपानहे। उपानद्भ्यः २। उपानहः २। उपानहोः २। उपानहाम्। उपानहि। सुपि—हस्य धत्वे "खरि च" इति चर्त्वम्। उपानत्सु। सम्बोधनं प्रथमावत्। उत्पूर्वात् "ष्णिह" प्रीतौ, इत्यस्मात् "ऋत्विग्" इत्यादिना क्विन् निपातनात् उदोदकारलोपः, सस्य षत्वञ्च। "उष्णिह् सु" इति स्थापिते क्विन्नन्तत्वात् कुत्वेन हस्य घोषनादसंवारमहाप्राणप्रयत्नसाम्यात् घः। तस्य जश्त्वचर्त्त्वे—**उष्णिक्, उष्णिग्**। उष्णिहौ—इत्यादि स्पष्टम्। सुपि—**उष्णिक्षु**। हस्य कुत्वेन घत्वे, तस्य चर्त्वेन कत्वे सस्य षत्वे, कषयोगे "क्ष" भावः। इति **हान्ताः**। अथ वान्ताः। "द्यौ दिवौ द्वे स्त्रियाम्" इत्यमरप्रामाण्यात् "दिव्" शब्दः स्त्रीलिङ्गः। "दिव् सु" इति स्थिते "दिव औत्" इति वस्य औकारः। दकारोत्तरवर्त्तिन इकारस्य यण् सस्य रुत्वविसर्गौ—**द्यौः**। दिवौ। दिवः इत्यादि स्पष्टतरम्। भ्यामादौ हलि—"दिव् भ्याम्" इति धृते "दिव उत्" इति उत्वे, यणि—**द्युभ्याम्**। एवमादि ज्ञेयम्। अथ

रेफान्ताः तत्र † " गिर् सु " इति धृते सोर्लोपे " र्वोरुपधायाः "—इति दीर्घे रेफस्य विसर्गे—**गीः** । अजादौ सर्वत्र रेफस्य परयोगे:—गिरौ । गिरः । गिरम् । गिरौ । गिरः । गिरा । " गिर् भ्याम् " इति भ्यामादौ हलि " र्वो "—इति उपधादीर्घे—**गीर्भ्याम्** ३ । गिरे । गिरः २ । गीर्भ्यः २ । गिरोः २ । गिराम् । गिरि । गीर्षु । एवं **पूः** इति । गिर्शब्दवत् पुर्शब्दस्यापि सर्वा प्रक्रिया इत्यर्थः । एवं धूरपि । अथ स्त्रियां चतुर्शब्दः । चतुर्शब्दात् जश्शसोः स्थापितयोः "त्रिचतुरोः स्त्रियाम्"—इति " चतसृ " इत्यादेशः । परत्वात् "चतुरनडुहोः" इत्यामं बाधित्वा चतसृभावे कृते यण् । जाते चतुसृभावे तु आम् न प्रवर्त्तते । " विप्रतिषेधे यद्बाधितम् "—इति न्यायात् । सस्य रुत्वे विसर्गे—**चतस्रः** २ । **चतसृणाम्** इति । " न तिसृचतसृ " इति दीर्घनिषेध इति भावः । स्पष्टमन्यत् । इति रेफान्ताः । अथ मान्ताः । किम् शब्दात् स्त्रीलिङ्गात् विभक्तौ " किमः कः " इति कादेशे अदन्तत्वात् टापि—" का " इति जाते स्वादुत्पत्तौ सर्वापि प्रक्रिया स्त्रीलिङ्ग* " सर्वा " शब्दवदित्यर्थः । का । के काः । काम् । के । काः । कया । काभ्याम् । काभिः । कस्यै । काभ्याम् । काभ्यः । कस्याः । काभ्याम् । काभ्यः । कस्याः । कयोः । कासाम् । कस्याम् । कयोः । कासु । इदम् शब्दस्य विशेषमाह—**यः सौ** । " इदमो मः " इत्यतः इदम् इति " दश्च " इत्यतः द इति च वर्त्ततेऽत आचष्टे—**इदम्** इति । इदमो दस्य यः स्यात्सावित्यर्थः । " इदम् स् " इति स्थिते अनेन दस्य यत्वे कृते " इयम् स् " इति त्यदाद्यत्वं बाधित्वा "इदमो मः " इति मस्य मे कृते हल्ङ्यादिलोपे—**इयम्** । "इदम् औ" इति स्थिते त्यदाद्यत्वे, पररूपे, टापि टस्येत्त्वेन लोपे, सवर्णदीर्घे " इदा औ " इति भूते " दश्च " इति दस्य मत्वे " इमा औ " इति सति " औङ आपः " इति शीभावे, शस्येत्त्वेन लोपे, आद्गुणे—**इमे** । जसि—त्यदाद्यत्वे, पररूपे, टापि, " दश्च " इति मत्वे, पूर्वसवर्णदीर्घे सस्य रुत्वविसर्गयोः—**इमाः** । नात्र जशः शी । टापि कृते अदन्तत्वाभावात् । अमि—अत्व–पररूप–टाप्–मत्वेषु सत्सु " अमि पूर्वः " इति पूर्वरूपैकादेशः । **इमाम्** । औटि औवत्—**इमे** । शसि—अत्व–पररूप–टाप्–मत्व–पूर्वसवर्णदीर्घाः । स्त्रीत्वात् शसः सस्य नो न । **इमाः** । तृतीयैकवचने—"इदम् आ" इति स्थिते, "अनाप्यकः" इति " इद् " भागस्य " अन् " इत्यादेशे कृते, त्यदाद्यत्वे, पररूपे, टापि, "अक"—इति सवर्णदीर्घे ' अना आ ' इति जाते ' आङि चापः '—इति एत्वे, ' एचो '—इत्ययादेशे— **अनया** । एवं सर्वत्राजादौ अनादेशान्तो विधिर्ज्ञेयः । "इदम् भ्याम्"

---

† गृ निगरणे । अस्मात् क्विप् ऋत इद्धातोः " इति इत्वे, रपरत्वे " गिर् " शब्दसिद्धिः ।

* " सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः " इति शब्दस्वरूपपरस्य गौणतया कदापि सर्वनामत्वाभावादिति भाव इति **मनोरमा** । **ज्ञानेन्द्रस्वामी** तु—सर्ववत् इति पाठं मत्वा " तेन तुल्यम् " इति वतिः । " सर्वनाम्नो वृत्तिमात्रे "—इति पुंवद्भाव इत्याह ।

इति स्थिते त्यदाद्यत्वे, पररूपे, टापि, सवर्णदीर्घे—“ इदाभ्याम् ” इति भूते “ हलि लोपः” इति इद्भागस्य लोपे—**आभ्याम्** । हलादावेवैव प्रक्रिया । चतुर्थ्येकवचने—“ इदम् ए ” इति स्थिते त्यदाद्यत्वे, पररूपे, टापि, “ सर्वनाम्नः स्याट् ”—इति स्याटि, ह्रस्वत्वे च इदो लोपे—**अस्यै** । **आभ्याम्** । **आभ्यः** । अस्याः । आभ्याम् । आभ्यः । अस्याः । “ इदम् ओस् ” इति स्थापिते अत्व–परसवर्ण–टाप्–सवर्णदीर्घेषु “ इदा ओस् ” इति भूते “ अनाप्यकः ” इति इद्भागस्य अनादेशे “ अना ओस् ” इति सति “ आङि”—इत्येत्वे, अयादेशे—**अनयोः** । “ इदम् आम्” इत्यत्र अत्वपररूप—टाप्सु—“ इदा आम् ” इति सति “ आमि सर्वनाम्नः ”–इति सुटि, उटो लोपे इदो लोपे च–**आसाम्** । सप्तम्येकवचने अत्व-पररूप–टाप्–सवर्णदीर्घेषु “ इदा सु ” इति स्थितौ सत्याम् ङेरामि, स्याटि, ह्रस्वत्वे, इदो लोपे—**अस्याम्** । **अनयोः** । सुपि—अत्व–पररूप–टाप्–सवर्णदीर्घेषु—“ इदा सु ” इति जाते, इदो लोपे—**आसु** ।

अथ **जान्ताः** । “ ऋत्विग् ”—इत्यादिना स्रजेः क्विन् अमागमश्च निपातितः । “माल्यं माला स्रजो मूर्ध्नि” इत्यमरः । **स्रक्, स्रग्** । “क्विन् प्रत्ययस्य”–इति कुत्वे, जश्त्वं चर्त्वञ्च । **स्रजम्, स्रजौ** इत्यादि स्पष्टमिति भावः । अथ **दान्ताः** । तत्र “ त्यद् ” शब्दस्य प्रक्रियां दर्शयति—**त्यदाद्यत्वे** इति विभक्तौ—अत्वे, पररूपे, टापि सवर्णदीर्घे “त्या” इति जाते सर्वत्र ‘सर्वा शब्दवद्रूपाणि’ किन्तु सौ परतः ‘तदोः’–इति तकारस्य सकारो विशेषः ‘स्या’ इति । **एव**मिति । तदादीनामपि अत्व–पररूप–टाप्–सवर्णदीर्घेषु सर्वावत्प्रक्रिया । तदः तस्य सः, एतदः तस्य सत्वे “आदेश”–इति षत्वमिति विशेषः । एषा । एते । एताः । एताम् । एते । एताः । एतया । एताभ्याम् । एताभिः । एतस्यै । एताभ्याम् । एताभ्यः । एतस्याः । एताभ्याम् । एताभ्यः । एतस्याः । एतयोः । एतासाम् । एतस्याम् । एतयोः । एतासु । अथ चान्ताः । **वाक्** इति । सुलोपे–“चोकुः”–इति कुत्वे, जश्त्वचर्त्वयोः–वाक्, वाग् इति रूपे । स्पष्टमन्यत् । अथ पान्ताः । **अप्शब्द** इति नित्यं बहुवचनान्त इति लिङ्गानुशासनबलात् । “अप् जस्” इति स्थिते जस्येत्त्वेन लोपे “अप्तृन् ”–इति दीर्घे सस्य रुत्वविसर्गौ–**आपः** । शसि–**अपः** । सर्वनामस्थानाभावान्न दीर्घ इतिभावः । ‘अप् भिस्’ इति स्थापिते सूत्रमाह–**अपोभिः** । ‘अच उपसर्गात्’–इत्यतः त इति वर्त्तते, अङ्गाधिकारलब्धप्रत्ययविशेषणात्तदादिविधिरित्याह—**अपस्तकार** । इत्यादि । एवमनेन पस्य ते, जश्त्वे—**अद्भिः** । स्पष्टमन्यत् । प्रत्यये किम् । अब्भक्षः । अथ **शान्ताः** । “ **दिक्** ” इति । “ ऋत्विग् ”—इत्यादिना दिश् धातोः क्विन्, तस्य सर्वापहारी लोपः, दिश् इत्यस्य प्रातिपदिकत्वे सावानीते, हल्ङ्यादिना सोर्लोपे, “ व्रश्च ”—इति षत्वे, तस्य जश्त्वेन डे, तस्य “ क्विन् ”—इति कुत्वेन गः, तस्य चर्त्वविकल्पेन–‘ **दिक् दिग्** ’ इति रूपे । **त्यदादिष्विति** । व्याख्यातप्रायम् । “ **दृक्** ” इति । दृश्यन्ते अर्था अनयेति सम्पदादित्वात् दृशेः क्विप् । षडगकाः प्राग्वत् । स्पष्टम् । अथं **षान्ताः** । “त्विट्” इति । त्विष्शब्दात् सुलोपः, जश्त्वचर्त्वे–

त्विड् " इत्यपीत्यर्थः । त्विषौ । त्विषः । इत्यादि स्पष्टम् । सजुष् शब्दात् सुप्रत्यये तस्य लोपे, "ससजुषो"—रिति रुत्वम् । " सजुर् " इति जाते " र्वोरुपधाया: "—इति दीर्घे, रस्य विसर्गे—**सजूः** । एवमेव **सजूर्भ्याम्** इत्यादि । आशिष् शब्दादपि षस्यासिद्धत्वात् रुत्वे, उकारलोपे, " र्वो "—रिति इको दीर्घे रस्य विसर्गः । **आशीः** । अन्यत् स्पष्टम् । अथ सान्ताः । " अदस् सु " इति स्थापिते " अदस् औ सुलोपश्च " इति सस्यौत्वे सुलोपे च " अद औ " इति जाते "तदोः सः"—इति दस्य सत्वे, वृद्धौ—" **असौ** " इति पुंवदेव । " अदस् औ " इति स्थिते त्यदाद्यत्वे, पररूपे, टापि, सवर्णदीर्घे " अदा औ " इति जाते " औङ आपः " इति औङः शीभावे, आद्गुणे " अदे " इति भूते " अदसोऽसेः "—इति एकारस्य दीर्घत्वात्, ऊत्वे, मत्वे च—**अमू** । एवं जसि—अत्व—पररूप—टाप्—सवर्णदीर्घेषु "अदा अस्" इत्यवस्थायां पुनः सवर्णदीर्घे "अदास्" इति सति उत्वमत्वे, रुत्वविसर्गौ—**अमूः** । जसः शीभावस्तु न अदन्तत्वाभावात् । अमि तु—पुंवत्, ऊत्वं विशेषः **अमूम्** । औटि औवत्—**अमू** । शसि जसीव रूपम्—**अमूः** । स्त्रीत्वान्नत्वाभावः । टायाम्—" अदस् आ " इति स्थिते अत्व—पररूप—टाप्—सवर्णदीर्घेषु " आङि चाप " इति एत्वे, अयादेशे " अदया " इति जाते उत्वमत्वयोः सतोः—अमुया । भ्यामि—आत्व—पररूप—टाप्—सवर्णदीर्घेषु " अदाभ्याम् " इति सति ऊत्वमत्वे—**अमूभ्याम्** । एवम्—**अमूभिः** । चतुर्थ्येकवचने—आत्व—पररूप—टाप्—सवर्णदीर्घेषु " अदा ए " इति जाते, स्याटि, ह्रस्वे, " अदस्यै " इति जाते ततः उत्वे, मत्वे, षत्वे च—**अमुष्यै** । **अमूभ्याम्** । **अमूभ्यः** । " अदस् ङसि" इति स्थापिते अत्व—पररूप—सवर्णदीर्घेषु "अदा अस्" इति सति स्याटि, ह्रस्वे, सवर्णदीर्घे, " अद स्यास् " इति सति उत्वे, मत्वे, षत्वे रुत्वविसर्गौ—**अमुष्याः** **अमूभ्याम्** । **अमूभ्यः** । ङसः ङसिवत्—**अमुष्याः** । ओसि—अत्व—पररूप—टाप्—सवर्णदीर्घेषु " आङि चापः " इत्येत्वे, अयादेशे " अदयोस् " इति जाते उत्वमत्वयोः—रुत्वविसर्गौ—**अमुयोः** । आमि—अत्व—पररूप—टाप्—सवर्णदीर्घेषु " अदा आम् " इति सति " आमि सर्वनाम्नः "—इति सुटि, उटो लोपे " अदासाम् " इति जाते उत्वमत्वयोः सतोः सस्य षत्वे च—**अमूषाम्** । सप्तम्येकवचने " अदस् इ " इति स्थितौ अत्व—पररूप—टाप्—सवर्णदीर्घेषु " अदा इ " इति भूते " ङेराम् "—इति ङेरामि, स्याड्ढ्रस्वौ, " अदस्याम् " इति जातम् । ततः—उत्वे, मत्वे, षत्वे च—**अमुष्याम्** । **अमुयोः** । सुपि—अत्व—पररूप—टाप्—सवर्णदीर्घेषु ऊत्वमत्वयोः षत्वे च—**अमूषु** । इति शिवम् ।

**इति प्राज्ञचित्तप्रसादिन्यां हलन्तस्त्रीलिङ्गम् ।**

———

# अथ हलन्ता नपुंसकलिङ्गाः ।

स्वमोर्लुक् । दत्वम् । स्वनडुत् । स्वनडुही । चतुरनडुहो रित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः । वारी । वारि । वारा । वार्भ्याम् । चत्वारि । किम् । के कानि । इदम् । इमे । इमानि । अन्वादेशे नपुंसके एनद्वक्तव्यः ॥ एनत् । एने । एनानि । एनेन । एनयोः २ । व्योम । व्योम्नी । व्योमनी । व्योमानि । ब्रह्म । सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः । हे ब्रह्म । हे ब्रह्मन् । हे ब्रह्मणी । हे ब्रह्माणि । रोऽसुपि । अहः । विभाषा ङिश्योः । अह्नी । अहनी । अहानि । अहन् । ८ । २ । ६८ । अहन्नित्यस्य रुः पदांते । अहोभ्याम् । दण्डि । दण्डिनी । दण्डीनि । सुपथि । टिलोपः । सुपथी । सुपन्थानि । ऊर्क् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः । त्यत् । त्ये । त्यानि । तत् । ते तानि । यत् । ये । यानि । एतत् । एते । एतानि । अवङ् स्फोटायनस्येति अवङ् । ", एङः पदान्तादति " इति पूर्वरूपम् ।

गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असंध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥
स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥

गवाक् २ गोची गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृन्ती । शकृन्ति । शकृद्भ्याम् । ददत् । ददती । वा नपुंसकस्य । ७ । १ । ७९ । अभ्यस्तात्परो यः शतुरवयवस्तदन्तस्य क्लीवस्य नुम्वा स्यात्सर्वमस्थाने । ददन्ति । ददति । ददत् । आच्छीनद्योर्नुम् । १ । ८० । अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः । तुदन्ती । तुदती । भात् । भाती । भान्ती । भान्ति । पचत् । शप्श्यनोर्नित्यम् । ७ । १ । ८१ । शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम् शीनद्योः । पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती । धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनूंषि । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पयः पयसी पयांसि । पयोभ्याम् । सुपुम् सुपुंसी सुपुमांसि । अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥ इति हलन्ताः नपुंसकलिङ्गाः ।

अथ हलन्तनपुंसकलिङ्गे हकारान्तशब्दनिरूपणम्। सुशोभना अनड्वान् यस्य कुलस्य तत् इति बहुव्रीहौ स्वनडुह्शब्दो नपुंसकलिङ्गः। ततः प्रथमैकवचने—"स्वनडुह् सु" इत्यवस्थायां "चतुरनडुहोरामुदात्तः" इत्यादिविधयः प्राप्ताः परन्तु परत्वात् हल्ङ्यादिलोपं बाधित्वा "स्वमोर्नपुंसकात्"—इति सोर्लुकि, लुका लुप्तत्वेन प्रत्ययलक्षणाभावादामादिरभावः, किन्तु—पदाधिकारस्थत्वात् "वसुस्रंसु"—इत्यनडुच्छब्दान्तेऽपि दत्वम्, ततः—"वावसाने" इति चर्त्वविकल्पेन—**स्वनडुत्**, **स्वनडुद्** इति। न च दत्वविधावपि "न लुमताङ्गस्य" इति निषेधः स्यादिति वाच्यम्। दत्वस्य सुबन्तत्वात्मकपदत्वनिमित्तकतया अङ्गकार्यत्वाभावादिति वदन्ति। स्वनडुह् औ" इति स्थिते "नपुंसकाच्च" इति औङः शीभावे शस्येत्त्वेन लोपे हकारस्य परवर्त्तिनि ईकारे प्रवेशात्—**स्वनडुही**। "स्वनडुह् जस्" इति स्थिते "जश्शसोः"—इति जसः शिभावे, तस्य सर्वनामस्थानसञ्ज्ञायां "चतुरनडुहोः"—इत्यन्तादचः परे आमि कृते मस्येत्त्वेन लोपे "स्वनडु आ ह् इ" इति भूते "नपुंसकस्य झलचः" इत्याकारात्परे नुमि, उमो लोपे, उकारस्य यणत्वेन वे कृते "स्वनड्वान्ह् इ" इति जाते सति "नश्चा"—इति नस्यानुस्वारे हस्य परयोगे—**स्वनड्वांहि**। **पुनरिति**। प्रथमावत् द्वितीयापीत्यर्थः। **शेषमिति**। पुंल्लिङ्गानडुह्शब्दवत् शिष्टानि रूपाणीत्यर्थः। यथा—स्वनडुहा। स्वनडुद्भ्याम्। स्वनडुद्भिः इत्यादि। इति हान्तः। रेफान्तो वार्शब्दः स्वमोर्लुकि—रेफस्य विसर्गे—**वाः**। * **वारी**। † **वारि**। जसि—अझलन्तत्वान्नुम्न। वारा। वार्भ्याम् ३। वार्भिः। वारे। वार्भ्यः २। वारः २। वारोः २। वाराम्। वारि। वार्षु। नित्यं बहुवचनान्तात् चतुर्शब्दात् "चतुर् जस्" इति स्थापिते "जश्शसोः शिः" इति शित्वे "चतुरनडुहोः—इत्यामि, मस्येत्त्वेन लोपे, उकारस्य यणि वकारे, अझलन्तत्वात् नुमोऽभावे—**चत्वारि**। पुनरपि। चतुर्भ्यः २। चतुर्णाम्। चतुर्षु। मकारान्तः किम्शब्दः। "किम् सु" इति स्थिते स्वमोर्लुकि "न लुमता"—इति निषेधात् प्रत्ययलक्षणमाश्रित्यापि कादेशो न—**किम्**। स्वमोरन्यत्र कादेशे सर्वशब्दवद्रूपाणि। किम् औ" इति स्थिते "किमः कः" इति कादेशे "नपुंसकाच्च" इत्यौङः शीभावे आद्गुणे—**के**। **कानि**। "नपुंसकस्य झलचः" इति नुमि "सर्वनामस्थाने"—इत्युपधादीर्घ इति भावः। पुनरपि। शेषं पुंवत्। "इदम् सु" इति सति स्वमोर्लुक्—**इदम्**। अत्र "इदमो मः" "दश्च" इत्यादिविधेरभावः "न लुमता"—इति तन्निषेधात्। "इदम् औ" इति त्यदाद्यत्वे, पररूपे "दश्च" इति मत्वे, औङःशीभावे, आद्गुणे—**इमे**। "इदम् जस्" इति, अत्वम्, पररूपम्, मत्वम्, दीर्घः—**इमानि**। पुनरप्येवम्। **अन्वादेश** इति। इदमेतदोरिति शेषः।

---

* "नपुंसकाच्च" इत्यौङः शी।

† "जश्शसोः शि" इति जसः शिभावः इत्याद्यग्रे यथालक्ष्यं लक्षणमनुसर्त्तव्यम्।

" इदम् अम् " इति स्थिते " स्वमो "—रित्यमो लुकि उक्तेन वार्त्तिकेन **एनत्** इत्यादेशः। चर्त्वविकल्पेन पक्षे—**एनद्** इत्यपि रूपम्। "एनद् औ" इति त्यदाद्यत्वे, पररूपे, औङः शीभावे, पररूपे, शस्येत्त्वेन लोपे, आद्गुणे—एने। एवमेव—**एनानि**। जसः शिभावः नुम्, उपधादीर्घ इति विशेषः। टायाम्—ओसि च स्पष्टम्—**एनेन**। **एनयोः २**। नान्तो व्योमन् शब्दः। स्वमोर्लुकि "न लोपः प्रातिपदिकान्तस्य" इति नलोपः। **व्योम**। **व्योम्नी, व्योमनी** इत्यत्र "विभाषा ङिश्योः" इत्यनेन वा अल्लोपः। अन्यत् व्याख्यातप्रायम्। **व्योमानि**। अत्र " जश्शसोः शिः " इति जसः शिभावः। तस्य सर्वनामस्थानत्वात् उपधादीर्घः। पुनरप्येवम्। व्योम्ना। व्योमभ्याम् ३। व्योमभिः। व्योम्ने। व्योमभ्यः २। व्योम्नः २। व्योम्नोः २। व्योम्नाम्। व्योम्नि, व्योमनि। व्योमसु। हे व्योमन्। हे व्योम। **सम्बुद्धा**विति नलोपविकल्पात्। एवम्—ब्रह्मन्शब्दोऽपि। ब्रह्म। ब्रह्मणी। ब्रह्माणि। पुनरप्येवम्। शेषं पुंवत्। हे ब्रह्म। हे ब्रह्मन्। नलोपविकल्पः। " अहन् सु " इति स्थिते स्वमोर्लुकि " अहन् " इति जाते " रोऽसुपि " इति नस्य रत्वे " खरवसानयोः "—इति विसर्गे—**अहः**। यदि चात्र रुत्वमभविष्यत् तदा " अहः भाति " इत्यत्र " हशि च " इत्युत्वे आद्गुणे " अहो भाति " इति रूपमनिष्टमभविष्यत्। इष्यते तु—"अहर्भाति" इति। अतो रेफः। प्रत्ययलक्षणन्त्वत्र नास्ति लुका लुप्तत्वात्। अह्नी, अहनी इति रूपद्वयभेदे सूत्रं स्मारयति—**विभाषा०** इति। **अहानि**। पुनरपि। टादावचि सर्वत्र अल्लोपः। **अह्ना**। " अहन् भ्याम् " इत्यादि भ्यामादौ हलि स्थिते विशेषं दर्शयति—**अहन्** इति। लुप्तषष्ठीकम् " ससजुषोः " इत्यतः रुरिति " स्कोः "—अन्ते इति च वर्त्ततेऽतो व्याख्याति—**अहन्नित्यस्येति**। अनेन नस्य रुत्वे, "हशि च" इत्युत्वे, आद्गुणे—* **अहोभ्याम् ३**। अह्ने। अहोभ्यः २। अह्नः २। अह्नोः २। अह्नाम्। अह्नि, अहनि। अहस्सु। " दण्डिन् सु " इति स्थिते स्वमोर्लुकि नलोपे—**दण्डि**। **दण्डिनी**। **दण्डीनि**। पुनरपि। शेषं पुंवत्। " दण्डिनी " इत्यत्र सर्वनामस्थानत्वाभावात् " इन्हन् " इति नियमाच्च दीर्घो नेति ध्येयम्। सुशोभनः पन्थाः यस्य यत्र वेति विग्रहः तत्। "**सुपथि**" नगरम्। स्वमोर्लुक्। नलोपः। "सुपथिन् औ" इति स्थिते भस्य टेर्लोपः" इति टिलोपे औङः शीभावे—**सुपथी**। " सुपथिन् जस् " इति स्थिते जसः शित्वे, तस्य सर्वनामस्थानत्वात् " इतोऽत् सर्वनामस्थाने " इति थान्तःपातिन इकारस्य अकारे कृते " सुपथन् इ " इति सति " थोन्थः " इति थस्य न्थादेशे ' सुपन्थन् इ " इति भूते " सर्वनामस्थाने "—इति नान्तोपधादीर्घे—**सुपन्थानि**। पुनरपि। शेषं पुंवत्। ऊर्ज्शब्दात् सुप्रत्यये स्वमोर्लुकि, जस्य कुत्वेन गे, तस्य चर्त्वविकल्पे—ऊर्क्, ऊर्ग्।

---

* इह " अहः, अहोभ्याम् " इत्यादौ रत्वरुत्वयोरसिद्धत्वात् नलोपे प्राप्ते ' अहन् " इत्यावर्त्त्य एकेन नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः।

ऊर्जी। औङ शीभावः। ऊर्न्जि। जसः शिभावे, झलन्तत्वात् नुमि, तस्यान्त्यादचः अकारात्परत्वात् रूपं तदाह—**नरजानामिति**। ऊर्जा। ऊर्ग्भ्याम् ३। ऊर्ग्भिः। ऊर्जे। ऊर्ग्भ्यः २। ऊर्जः २। ऊर्जोः २। ऊर्जाम्। ऊर्जि। "ऊर्ज् सु" इति सति, कुत्वेन गः, तस्य चर्त्त्वेन कः, सस्य षत्वम्, द्वयोर्योगे क्षः–ऊर्क्षु। **त्यदिति**। त्यद्, तद्, यद्, एतद्, एषां स्वमोर्लुका लुप्तत्वात् त्यदाद्यत्वपररूपसत्वानि न भवन्ति, अन्यत्र तु सर्वत्र विभक्तिषु त्यदाद्यत्व–पररूपे सति सर्वनामकार्यादिकं भवति, पुंसि सर्वशब्दवच्च प्रक्रियेति ज्ञेयम्। अन्वादेशे तु–एनत्। इति दान्ताः। अथ चान्तो "गवाच्" शब्दः। अस्येयं प्रक्रिया–गामञ्चतीति विग्रहे "ऋत्विग्"–इत्यादिना क्विन्। उपपदसमासः। सुब्लुक्। "गो अन्च्" इति रूपम्। गतौ–"अनिदिताम्" इति नलोपः। "अवङ् स्फोटायनस्य" इत्यवङ्। ङ इत्। सवर्णदीर्घे–"गवाच् सु" इति स्थिते स्वमोर्लुक्। "क्विन् प्रत्ययस्य"–इति कुत्वे, तस्य जश्त्वे, चर्त्त्वविकल्पे–**गवाक्**, **गवाग्**। "सर्वत्र विभाषा"–इति प्रकृतिभावः–**गोअक्**, **गोअग्**। पूर्वरूपे (अर्थात् अवङः प्रकृतिभावस्य च अभावपक्षे) **गोऽक्**, **गोऽग्**। पूजायान्तु— "नाञ्चेः पूजायाम्" इति नलोपाभावात् "गो अन्च् सु" इति स्वमोर्लुक्, चस्य संयोगान्तलोपे, नस्य "क्विन्"–इति कुत्वेन ङे सति–**गवाङ्–गो अङ्–गोऽङ्**। एवं सौ नव ९ रूपाणि। अम्यप्येवं नव ९। "गो अन्च् औ" इत्यत्र गतिपक्षे "अनिदिताम्" इति नलोपे, औङः शीभावे अक्लीवस्येति पर्युदासात् सर्वनामस्थानत्वाभावात् भत्वात् "अचः" इत्यल्लोपे—**गोची** इत्येकमेव रूपम्। पूजायान्तु—अलुप्तनकारत्वात् "अच" इत्यल्लोपो न। **गवाञ्ची—गोअञ्ची—गोऽञ्ची** इति त्रीणि पूर्वेण मिलित्वा चत्वारि ४। "गो अन्च् जस्" इत्यवस्थायां गतिपक्षे नलोपे सति, जसः शिभावे "उगिदचाम्"–इति नुमि, उमो लोपे, "नश्चा"—इति नस्यानुस्वारे, तस्य परसवर्णे अवङ्विकल्पे प्रकृतिभावविकल्पे च—**गवाञ्चि—गोअञ्चि— गोऽञ्चि** इति त्रीणि ३ पूजार्थपक्षेऽपि अलुप्तनकारत्वान्नुमभावे स्वाभाविकानुस्वारस्य परसवर्णे एतादृश्येव रूपाणि इति नस्वरूपे विशेषः अतस्त्रीण्येव। पुनरप्येवम्। टायाम्—गत्यर्थपक्षे लुप्तनकारत्वात् "अचः" इत्यलोपे, **गोचा** इत्येकमेव। पूजापक्षे तु—अल्लोपाभावे, अवङिः प्रकृतिभावे, पूर्वरूपे च **गवाञ्चा—गोअञ्चा— गोऽञ्चा** इति त्रीणि मिलित्वा चत्वारि४। भ्यामि गतिपक्षे—नलोपे, चस्य कुत्वे, जश्त्वे अवङ्–सन्धि–पूर्वरूपाणि। एवम्—**गवाग्भ्याम्–गोअग्भ्याम्–गोऽग्भ्याम्** इति त्रीणि। पूजापक्षे तु—नलोपो नास्त्यतः चस्य संयोगान्तलोपे, नस्य कुत्वेन ङे, अवङ्–सन्धि–पूर्वरूपे—**गवाङ्भ्याम्—गोअङ्भ्याम्—गोऽङ्भ्याम्** इति त्रीणि, सर्वाणि मिलित्वा षट् ६। एवमेव भिसि—**गवाग्भिः—गोअग्भिः— गोऽग्भिः। गवाङ्भिः—गोअङ्भिः—गोऽङ्भिः** ६। चतुर्थ्येकवचने— **गोचे। गवाञ्चे—गोअञ्चे—गोऽञ्चे** ४। भ्यामि पूर्ववत् षट् ६। भ्यसि— **गवाग्भ्यः—गोअग्भ्यः—गोऽग्भ्यः। गवाङ्भ्यः—गोऽअङ्भ्यः—**

**गोऽङ्भ्यः** इति षट् ६। पञ्चम्येकवचने ङसि—गोचः। गवाञ्चः—गोअञ्चः—गोऽञ्चः ४। भ्यामि, भ्यसि च पूर्ववत्। षष्ठ्येकवचने ङस्परतः ङसिवत्। अर्थात्—गोऽचः। गवाञ्चः—गोअञ्चः—गोऽञ्चः ४। ओसि—गोचोः। गवाञ्चोः—गोअञ्चोः—गोऽञ्चोः। आमि—गोचाम्। गवाञ्चाम्—गोअञ्चाम्—गोऽञ्चाम् ४। ङौ—गोचि। गवाञ्चि—गोअञ्चि—गोऽञ्चि। ओसि पूर्व० ४ रि। सुपि गतिपक्षे–नलोपे, चस्य कुत्वेन ककारे अवङ्सन्धिपूर्वरूपे **गवाक्षु–गोअक्षु–गोऽक्षु** इति त्रीणि ३। पूजापक्षे–नलोपाभावात् चस्य संयोगान्तलोपे, नस्य कुत्वेन ङकारे सति अवङ्सन्धि–पूर्वरूपाणि। तत्र "ङ्णोः कुक्" कुगागमविकल्पः। कुगभावपक्षे—**गवाङ्षु। गोअङ्षु—गोऽङ्षु** इति त्रीणि। कुक्पक्षे—**गवाङ्क्षु–गोअङ्क्षु–गोऽङ्क्षु** इति त्रीणि। सर्वाणि मिलित्वा ९ नव सम्पद्यन्ते। तामिमां प्रक्रियां संक्षेपेण बोधयितुं सङ्ग्रहकारिकामाह—**गवाक्शब्दस्येति**। अधिकन्तु सिद्धान्तकौमुद्यादावुक्तं बालबुद्धिवैकल्यभयात् फलविशेषाभावाच्च नोक्तम्। अथ तकारान्तः "शकृत्" शब्दः विष्ठार्थकः। स्वमोर्लुकि—जश्त्वे चर्त्वे—**शकृत्। शकृद्।** औङः शीभावे **शकृती।** जसि—"जश्शसोः शिः"–इति शिभावे, झलन्तत्वात् नुमि, अनुस्वारपरसवर्णयोः सतोः—**शकृन्ति।** एवममि—**शकृत्, शकृद्।** औटि—**शकृती।** शसि तु—"पद्दन्नो" इति वा शकन्—आदेशः पक्षे—**शकानि,** अन्यत्र **शकृन्ति।** टायां शकनादेशे, अल्लोपे—**शक्ना।** तदभावे–**शकृता। शकभ्याम्, शकृद्भ्याम्। शकभिः, शकृद्भिः शक्ने, शकृते। शक्नः, शकृतः २। शक्नोः, शकृतोः २। शक्नि, शकृति। शकसु, शकृत्सु।** एवं यकृदपि। शत्रन्तो ददत्—शब्दः। अस्य क्लीवे स्वमोर्लुक्। **ददत्, ददद्।** औङः शी—**ददती।** सर्वनामस्थानत्वाभावात् नुम्नः। "नाभ्यस्ताच्छतु"—रितिनिषेधात्। "ददत् जस्" इति स्थिते, तस्य शिभावे "नाभ्यस्तात्"—इति नित्यं नुम्निषेधे प्राप्ते सूत्रमाह—'**वा नपुंसकस्य**' इति। नाभ्यस्तादिति नञ्वर्जमनुवर्त्तते तदाचष्टे—**अभ्यस्तात्पर** इति। अनेन निषेधविकल्पे च विधिविकल्प एव पर्यवस्यतीति फलितमुक्तं "वानुम्" इति। तदनेन पक्षे नुमि, उभोर्लोपे **ददन्ति,** तदभावे **ददति।** पुनरप्येवम्। शेषं पुंवत्। तान्तः तुदत्शब्द स्वमोर्लुक्। **तुदत्।** औङः शीभावे कृते सर्वनामस्थानत्वाभावात् नुमोऽप्राप्ते विभाषामाह—**आच्छीनद्योर्नुम्।** "वा नपुंसकस्य" इत्यतो वेति, "नाभ्यस्तात्"—इत्यतः शतुरिति च वर्त्ततेऽत आह—**अवर्णान्तादिति।** तदनेन नुमि—**तुदन्ती।** तदभावे—**तुदती।** जसि—जसः शिभावे, सर्वनामस्थानत्वान्नुमि—**तुदन्ति।** पुनरपि। शेषं पुंवत्। सूत्रे आदिति किम्—कुर्वती। सुन्वति। शीनद्योरिति किम्—तुदताम्। तुदताम्। "इदितोनुम्" इत्यतो नुम् इत्यनुवर्त्तमानेऽपि नुम् ग्रहणं स्पष्टार्थमिति **शेखरः। "भात्"** इति तुदत्–शब्दवत्। "पचत्" इति। स्वमोर्लुगित्यर्थः। औङः श्याम् "आच्छीनद्यो" रिति विकल्पे प्राप्ते नित्यविधिमाह—**शप्श्यनोरिति।** "आच्छीनद्योर्नुम्" इति "शतु"—

इति च वर्त्तते अत आह—**शप्श्यनोरादिति** । **पचन्ती** । **पचन्ति** । पुनरपि । शेषं पुंवत् । एवमेव—" **दीव्यत्** " इति । अथसान्तो धनुष् शब्दः । धन धान्ये इत्यस्मात् औणादिकः उस् प्रत्ययः । प्रत्ययावयत्वात् सस्य षः । अस्मात् स्वमोर्लुकि षत्वस्यासिद्धत्वात् रुत्वम् । उकारलोपे—" र्वो "—रित्युपधाया दीर्घस्तु न रेफान्तस्य धातुत्वाभावात् किन्तु " खर "—इति रेफस्य विसर्गः । **धनुः** । औङः शीभावे "धनुष् ई" इति स्थिते अज्झोनम्—धनुषी । जसि—शित्वे, नुमि, उमो लोपे " धनुष् इ " इति सान्तमहतः"—इति दीर्घे, सस्य षत्वे—**धनूंषि** । पुरप्येवम् । धनुषा । " धनुष् भ्याम् " इत्यत्र षत्वस्यासिद्धत्वात् " ससजुषोः "— इति रुत्वे, उकारलोपे— धनुर्भ्याम् ३ । एवं भिसादौ हलि । धनुर्भिः । धनुषे । धनुर्भ्यः २ । धनुषः २ । धनुषोः । धनुषाम् । धनुषि । धनुःषु । एवमिति । धनुष् शब्दवत् चक्षुष्प्रभृतयोऽपि । **पयः** इति । स्वमोर्लुकि सस्य रुत्वविसर्गौ । **पयांसि** इति । शौ नुमि "सान्त" इति दीर्घे रूपम् । **पयोभ्याम्** इति सस्य रुत्वे "हशि च" " सुपुम् " इति । सु शोभनः पुमान् यस्य कुलस्य इति बहुव्रीहिः । सुपुंस्शब्दः । स्वमोर्लुकि संयोगान्तलोपे—**सुपुम्** । औङः श्याम्—**सुपुंसी** । जसि शेः सर्वमानस्थानत्वात् "पुंसोऽसुङ्" इत्यसुङि सुपुंस् इ इति जाते झलन्तलक्षणे नुमि, "सान्तमहतः" इति दीर्घे " नश्चा " इत्यनुस्वारे—**सुपुमांसि** । पुनरपि । शेषं पुंवत् । "अदस्" शब्दात् स्वमोर्लुकि, रुत्वविसर्गयोः—**अदः** अत्र सान्तत्वात् मुत्वं न, लुका लुप्तत्वात् त्यदाद्यत्वं न । " अदस् औ " इति स्थिते औङः शीभावे त्यदाद्यत्वे, पररूपे "अद ई" इति जाते आद्गुणे " अदे " इति भूते " अदसोऽसेः "—इति उत्वमत्वे—**अमू** । " अदस् जस् " इत्यवस्थायां जसः शिभावे त्यदाद्यत्वे, पररूपे " अद इ " इति स्थिते अजन्तलक्षणे नुमि, उमो लोपे उपधादीर्घे " अदानि " इति भूते उत्वमत्वयोः सतोः— **अमूनि** । पुनरपि । शेषं पुंवत् । इति सान्ताः ।

**इति प्राज्ञचित्तप्रसादिन्यां हलन्तनपुंसकलिङ्गम् ।**

——:o:——

# अथाव्ययानि ।

**स्वरादिनिपातमव्ययम् । १ । १ । ३७ । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इडा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत् । सना । उपधा । सनत् । सनात् । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा ।**

विना । नाना । स्वस्ति । स्वाहा । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । प्रवाहिका । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्द्धं । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रतान् । प्रशान् । मा । माङ् । आकृतिगणोऽयम् । च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कुपत् । कुवित् । नेत् । चेत् । चण् । यत्र । कच्चित् । नह । हन्त । माकिः । माकीम् । नकिः । आकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । न्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । अलम् । वषट् । तुम् । तथाहि । खलु । किल । अथ । सुष्ठु । स्म । आदह । **उपसर्गविभक्तिस्वरप्रतिरूपकाश्च** । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिरप्याकृतिगणः । **तद्धितश्चासर्वविभक्तिः** ।१।१।३८। यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । परिगणनं कर्तव्यम् । तसिलादयः प्राक्समासान्तेभ्यः । अस् । आम् । कृत्वोर्थाः । तसिवती । नानाञौ । इति । एतदन्तमव्ययम् । अत इत्यादि । **कृन्मेजन्तः** । १ । १ । ३९ । कृद्यो मान्त एजन्तश्च तदन्तमव्ययम् । स्मारंस्मारम् । जीवसे । पिबध्यै ॥ **क्त्वातोसुन्कसुनः** । १ । १ । ४० । एतदन्तमव्ययम् । कृत्वा । उदेतोः । विसृपः ॥ **अव्ययीभावश्च** । १ । १ । ४१ । अधिहरि । **अव्ययादाप्सुपः** । २ । ४ । ८२ । अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् । अथ विहितविशेषणान्नेह । अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणेः । आप्ग्रहणं व्यर्थम् । अव्ययस्यालिङ्गत्वात् । तथाच श्रुतिः ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥

**अवगाहः । वगाहः । अपिधानम् । पिधानम् । इत्यव्ययानि ।**

**इति सुबन्तं समाप्तम् ।**

---

अधुना अव्ययानि निरूपयामः । **स्वरादीति** । स्वर आदिर्येषां ते स्वरादयः। ते च निपाताश्चेति समाहारद्वन्द्वः । स्वरादीनामनेकशक्तिप्रधानता । स्व आगतः । स्वः स्थितः । स्वः पश्यत्यादीन्यधिकरणशक्तिप्रधानानि । शब्दशक्तिस्वाभाव्यात् । हिरुगादीनि क्रियाशक्तिप्रधानानि । क्रियाप्राधान्यञ्चैषां क्रियायामेव विशेषणत्वेन । स्पष्टञ्चेदं तद्धितश्चेति सूत्रे **कैय्यटे** । स्वरादीन् पठति । **स्वर्** स्वर्गे, सामान्यसुखे, परलोके च । **अन्तर्** मध्ये । **प्रातर्** प्रत्यूषे । **पुनर्** अप्रथमे विशेषे च । **सनुतर्** अन्तर्धाने । पञ्च रेफान्ताः । तेन—स्वर्याति, प्रातरत्र इत्यादौ हशि चेत्युत्वं न, तत्र रोरित्युकारानुबन्धग्रहणात् । **उच्चैस्** महति । **नीचैस्** अल्पे । **शनैस्** क्रियामान्द्ये । **ऋधक्** सत्ये । वियोगादीष्वपीत्येके । **ऋते** वर्जने । **युगपत्** एककाले । **आरात्** दूरसमीपयोः । **पृथक्** भिन्ने । **ह्यस्** अतीतेऽह्नि । **श्वस्** अनागतेऽह्नि । **दिवा** दिवसे । **रात्रौ** निशि । **सायम्** निशामुखे । **चिरम्** बहुकाले । **मनाक्, ईषत्** द्वयमिदमल्पे । **जोषम्** सुखे मौने च । **तूष्णीम्** मौने । **बहिस्** **अवस्** इमौ बाह्ये । **समया** समीपे मध्ये च **निकषा** अन्तिके । **स्वयम्** आत्मनेत्यर्थे । **वृथा** व्यर्थे । **नक्तम्** रात्रौ । **नञ्*** निषेधे । **हेतौ** निमित्ते । **इद्धा** प्राकाश्ये **अद्धा** स्फुटाऽवधारणयोः । तत्रातिशययोरपीत्येके । **साभि** अर्द्धे जुगुप्सिते च । **वत्** "तेन तुल्यम्"—इत्यादिभिर्विहितो वतिप्रत्यय इह गृह्यते तदाह—ब्राह्मणवत् क्षत्रियवत् इति केवलप्रत्ययस्याव्ययत्वे फलं नास्ति । **सना, सनत्, सनात्** एतत्त्रयं नित्ये । **उपधा** भेदे । **तिरस्** अन्तर्धौ, तिर्यगर्थे, परिभवे च । **अन्तरा** मध्ये विनार्थे च । **अन्तरेण** वर्जने । **ज्योक्** प्रश्नशैघ्र्याद्यर्थेषु । **कम्** वारिमूर्धनिन्दासुखेषु । **शम्** सुखे । **सहसा** आकस्मिकाऽविमर्शयोः । **विना** वर्जने । **नाना** अनेकविनार्थयोः । **स्वस्ति** मङ्गले । **स्वधा** पितृदाने । **अलम्** भूषण—पर्याप्ति—शक्ति—

---

* तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः । **इत्येके** । अत्रैव पक्षान्तरम्—

**अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।**
**विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम् ॥**

तदर्थो नञर्थः । भाष्यस्येति नञ्सूत्रे महाभाष्यम्—निवृत्तपदार्थक इति । निवृत्तं पदार्थो यस्य, "नपुंसके भावे क्त" इति क्तोऽभावार्थक इत्याद्यन्यत्र विस्तरः ।

निषेधेषु। **वषट्, श्रौषट्, वौषट्** एते हविर्दाने। **अन्यत्** अन्यार्थे। **अस्ति** सत्तायाम्। **उपांशु** अप्रकाशोच्चारणरहस्ययोः। **क्षमा** क्षान्तौ। **विहायसा** वियदर्थे **दोषा** रात्रौ। **मृषा मिथ्या** एतौ वितथे। **मुधा** व्यर्थे। **पुरा** अविरते, चिरातीते, भविष्यदासन्ने च। **मिथो मिथस्** द्वयं रहसि, सहार्थे च। **प्रायम्** बाहुल्ये। **प्रायस्** इति पाठान्तरम्। **मुहुस्** पुनरर्थे। **प्रवाहुकम्** समकाले ऊर्ध्वार्थे। **प्रवाहिका** इति पाठान्तरम्। **आर्यहलम्** बलात्कारे। **शाकटायनस्तु**—"आर्ये" ति प्रतिबन्धे। "हल" मिति निषेधानुवादयोरित्याह। **अभीक्ष्णम्** पौनःपुन्ये। **साकम् सार्धम्** द्वयं सहार्थे। **नमस्** नतौ। **हिरुक्** वर्जने। **धिक्** निन्दाभर्त्सनयोः। **अम्** शैघ्र्ये च। **आम्** अङ्गीकारे। **प्रताम्** ग्लानौ। **प्रशाम्** (न्) समानार्थे। **प्रतान्** विस्तारे। **मा माङ्** एतौ निषेधे। **आकृतिगणोयम्** इति। तेनान्येऽपि एवञ्जातीयकाः स्वरादिगणे पठनीया इत्यर्थः। तथाहि—**कामम्** स्वाच्छन्द्ये। **प्रकामम्** अतिशये। **भूयस्** पुनरर्थे। **साम्प्रतम्** न्याये। **परम्** किन्त्वर्थे। **साक्षात्** प्रत्यक्षे। **साचि** तिर्यगर्थे। **सत्यम्** अर्धाङ्गीकारे। **मङ्क्षु आशु** द्वयं शीघ्रतायाम्। **संवत्** वर्षे। **अवश्यम्** निश्चये। **सपदि** शैघ्र्ये। **बलवत्** अतिशये। **उषा** रात्रौ। **ओम्** अङ्गीकारे ब्रह्मणि च। **भूः** पृथिव्याम्। **भुवः** अन्तरिक्षे। **झटिति, झगिति, तरसा** एते शैघ्र्ये। **सुष्ठु** प्रशंसायाम्। **दुष्ठु** निकृष्टे। **शु** पूजायाम्। **कु** कुत्सिते। **अञ्जसा** तत्त्वे शैघ्र्ये च। **मिथु** द्वावित्यर्थे। **अस्तम्** विनाशे। **स्थाने** युक्ते। **वरम्** ईषदुत्कर्षे। **सुदि** शुक्लपक्षे। **वदि** कृष्णपक्षे। **शुदि** इति पाठान्तरम्। इत्याद्यनेके अगण्याः सन्ति, प्रयोगानुरोधं द्रष्टव्याः। अथ चादीनाह—**च, वा** इत्यादिना। **च** समुच्चयाद्यर्थेषु। **वा** विकल्पादिषु। **ह** प्रसिद्धौ **अह** अद्भुते खेदे च। **एव** अवधारणे, अनवक्लृप्तौ च। **एवम्** उक्तपरामर्शे। **नूनम्** निश्चये वितर्के च। **शश्वत्** पौनःपुन्ये, नित्ये, सहार्थे च। **युगपत्** एककाले। **भूयस्** पुनरर्थे। **कूपत्** प्रश्ने। **कुवित्** भूयोर्थे प्रशंसायां च। **नेत्** शङ्कायाम्। **चेत्** यद्यर्थे। **चण्** चेदर्थे। **कच्चित्** इष्टप्रश्ने। **यत्र** अनवक्लृप्त्यवमर्षगर्हाद्यर्थेषु। **नह** प्रत्यारम्भे। **हन्त** हर्षविषादयोः। **मकिः, माकीम्, नकिः** त्रयं वर्जने। **माङ्नञौ** स्वरादिपूक्तौ। **यावत् तावत्** द्वयं साकल्याऽवधिमानावधारणेषु। **त्वै** विशेषवितर्कयोः। **द्वै** वितर्के। **न्वै** इति पाठान्तरम्। **रै** दाने अनादरे च। **श्रौषट् वौषट्** हविर्दाने। **स्वाहा** देवहविर्दाने। **स्वधा** पितृदानेः। **तुम्** तुङ्कारे। **तथाहि** निदर्शने। **खलु** निषेधवाक्यालङ्कारनिश्चयेषु। **किल** वार्त्तायामलीके च। **अथो अथ** मङ्गलारम्भाद्यर्थेषु। **सुष्ठु** उक्तम्। अत्र पाठः स्वरभेदार्थः। **स्म** अतीते, पादपूरणे च। **आदह** उपक्रमहिंसाकुत्सनेषु।

**उपसर्गविभक्तिस्वरप्रतिरूपकाश्च**। चादिगणसूत्रमिदम् । उपसर्गप्रतिरूपकाः विभक्त्यन्तप्रतिरूपकाः अच्प्रतिरूपकाश्च चादिगणे पठनीया इत्यर्थः । तत्रोपसर्गप्रतिरूपकमुदाहरति—**अवदत्त**मिति । अत्र अवेत्युपसर्गप्रतिरूपकं, नतूपसर्गः तेन " अच उपसर्गात्तः " ( ७ । ४ । ४७ ) इति तो न भवति । अन्यथा **अवत्तम्** इति स्यात् । **अहंयुः** अहमिति सुबन्तप्रतिरूपकम् " अहंशुभमोर्युस् " इति मत्वर्थीयोयुस् अत्र अहमिति न युष्मच्छब्दस्य प्रथमैकवचनम् । तथा सति " प्रत्ययोत्तरपदयोश्च " ( ७ । २ । ९७ ) इति मपर्यन्तस्य मदादेशे " मद्यु " रित्यापत्तेः । **अस्तिक्षीरा** । अस्तिक्षीरं यस्या इति बहुव्रीहिः । अत्र " अस्ति " इति तिङन्तप्रतिरूपकम् नतु तिङन्तम् तथासति " अनेकमन्यपदार्थे " ( २ । २ । २४ ) इत्यत्र बहुव्रीहिविधौ सुबनुवृत्तेः अत्र तदभावात्समासो न स्यात् । स्वरप्रतिरूपकानुदाहरति **अ आ** इत्यादिना अ सम्बोधने । आ वाक्यस्मरणयोः । इ सम्बोधनाद्यर्थेषु । **ई उ ऊ ए ऐ ओ औ** सम्बोधने । **पशु** सम्यगर्थे । **शुकम्** शैघ्र्ये । **यथाकथाच** अनादरे । **पाट्** प्रभृतयः सप्त सम्बोधने । **द्य** हिंसाप्रातिलोम्यपादपूरणेषु । **विषु** नानार्थे । **एकपदे** अकस्मादित्यर्थे । **युत्** कुत्सायाम् । **आतः** इतोऽर्थे । **चादिरपीति** । अयमप्याकृतिगण इत्यर्थः । एवम्—**युत् तत्** जातु, **आहोस्वित्**प्रभृतयः चादिषु पाठ्याः । अन्यान्यव्ययान्याह—**तद्धितश्चा०** । सर्वेति=वचनत्रयात्मिका । नोत्पद्यते= किन्त्वेकवचनमेवोत्पद्यत इति भावः । तद्धितः किम् । एकः । द्वौ । त्रयः । असर्वेत्यादि किम् । औपगवः । **परिगणनमिति** वार्तिकम् । तसिलादय इति । " पञ्चम्यास्तसिल् " ( ५ । ३ । ७ ) इत्यारभ्य " द्वित्र्योश्च धमुञ् । ( ५ । ३ । ४७ ) इत्यन्ता इत्यर्थः । **शस्प्रभृतय** इति । " बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् " ( ५।४।४२ ) इत्यारभ्य " अव्यक्तानुकरणस्यात् "—( ५ । ४ । ५७ ) इति डाजन्ताः । **अम् आम्** इति । " अमु च च्छन्दसि " ( ५ । ४ । १२ ) इत्यम् । " किमेतिङव्यय–" ( ५ । ४ । ११ ) इत्याम् च गृह्यते । **कृत्वोऽर्था** इति । " संख्यायाः क्रियाभ्यावृत्तिगणने "—( ५ । ४ । १७ । ) " द्वित्रिचतुर्भ्यः सुच् " ( ५ । ४ । १८ ) " विभाषा बहोर्धा "—( ५ । ४ । २० ) इति त्रयः । **तसिवती** इति । " तैनेकदिक् "—( ४ । ३ । ११२ ) " तसिश्च " ( ४ । ३ । ११३ ) इति तसिः । " तेन तुल्यम् "—( ५ । १ । ११५ ) इत्यादिविहितो वतिश्च । **नानाञाविति** । विनञ्भ्यान्नानाञौ न सह " ( ५ । २ । २७ ) इति परिगणनाशयः । परिगणनेनैव " तद्धित " इति सूत्रं न कर्तव्यमिति भावः । **कृन्मेजन्तः** । कृत् मेजन्त इति पदच्छेदः । म् च एच् मेचौ तौ अन्ते यस्येति बहुव्रीहिः तदाचष्टे— **कृद्योमान्त** इति । उदाहरति **स्मारंस्मारामिति** । " आभीक्ष्ण्ये णमुल् च "

( ३ । ४ । २२ ) इति स्मृधातो र्णमुल् । **जीवसे** इति " तुमर्थेसेसेनसेनसे "—( ३ । ४ । ९ ) इत्यसे प्रत्ययान्तः । **पिबध्यै** इति । उक्तसूत्रेण शध्यैप्रत्ययान्तः । **क्त्वातोसुन्कसुनः** । स्पष्टम् । **कृत्वा** इति । " समानकर्तृकयोः "—इत्यादिना क्त्वा । **उदेतोः** इति । उत्पूर्वादिणो " भावलक्षणे स्थेण् "—( ३ । ४ । १६ ) इत्यादिना तोसुन् । **विसृप** इति । " सृपितृदोः कसुन् " ( ३ । ४ । १७ ) इति । **अव्ययीभावश्च** । अव्ययसञ्ज्ञो भवतीत्यर्थः । " **अधिहरि** " इति । हरौ इति । विभक्त्यर्थेऽव्ययीभावः । **अव्ययादाप्सुपः** । आप् च सुप् च । आप्सुपः इति समाहारे षष्ठ्यन्तम् । " ण्यक्षत्रियार्षञितः "—( २ । ४ । ५८ ) इत्यतो लुगिति वर्त्तते तदाचष्टे—**अव्ययादिति** । उदाहरति—**तत्रेति** । " तत्र " इत्यस्याव्ययत्वात् आपो लुक् । स्त्रीत्वबोधनाय शालायामिति विशेष्यमुक्तम् । **अथेति** । अत्र लुक् । नन्वेवम्—अत्युच्चैसौ । अत्युच्चैस इत्यत्रापि सुपो लुक् स्यात् अत आह—**विहितविशेषणेति** । उच्चैरतिक्रान्त इति विग्रहे " अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । अव्ययात्परस्येत्यनुक्त्वा अव्ययाद्विहितस्येति व्याख्यानात् नात्र सुपोलुक् नायं सुप् अव्ययाद्विहितः वृत्तिविषये अव्ययानां शक्तिमत्प्रधानात्वात् तस्मादत्र समासाद्विहितस्य सुप अव्ययपरत्वेऽपि अव्ययाद्विहितत्वाभावात् न लुगिति संक्षेपः ।

ननु—एवमप्येष दोषः, " प्रयोजनं सर्वनामाव्ययसंज्ञायाम् " इति भाष्यात् तदन्तविधिसत्वेन " अत्युच्चैस् " इति समुदायस्यापि " स्वरादिनिपातमव्ययम् " इत्यव्ययसञ्ज्ञा भवत्येवेत्याशङ्कते—**अव्ययसञ्ज्ञायामिति** । समाधत्ते–**तथापि न गौण** इति । अव्ययमिति महासञ्ज्ञाकरणादित्यर्थः । सर्वनामसञ्ज्ञायां " उपसर्जनस्य न " इति प्रकृतः प्रतिषेधः अव्ययसञ्ज्ञाविधावप्यनुवर्त्तत इति भावः । इदञ्च " तद्धितश्चासर्वविभक्तिः " इति सूत्रे भाष्ये स्पष्टम् । **आप्ग्रहणमिति** । " अव्ययादाप्सुपः " इति सूत्र इति शेषः । तत्र हेतुमाह—**अलिङ्गत्वादिति** । आह च वार्त्तिकम्—" अव्ययादाप्सुब्लुग्वचनानर्थक्यं लिङ्गाभावात् " इति । अत्रार्थे श्रुतिं प्रमाणयति—**तथाचेति** गोपथब्राह्मणश्रुतिरियम् । **सदृशमिति** स्पष्टम् । आह—**वर्षीति** । स्पष्टार्थम् ।

**इति प्राज्ञचित्तप्रसादिन्यामव्ययप्रकरणम्**



# तर्कसंग्रह

कवितार्किक पं० नृसिंहदेव जी शास्त्री दर्शनाचार्य कृत—बालबोधिनी संस्कृत टीकोपेत तथा सौभाग्यवती विवृति सहित तृतीय संस्करण परिवर्द्धित तथा संशोधित। यह पुस्तक विद्यार्थियों के लिए बहुत ही सरल नये ढंग से बनाई है। पृष्ठ ६२ मू० ।-)

इसके अतिरिक्त 'तर्कसंग्रह' का एक अन्य संस्करण भी छपवाया गया है जिसमें अतिसरल भाषानुवाद भी लगा दिया गया है मूल्य ।।)

# वृत्तरत्नाकर

पं० नृसिंहदेव जी कृत अति सरल तथा विस्तृत संस्कृत तथा हिन्दी भाषा टीकाद्वय सहित वृत्तरत्नाकर भी छपकर तय्यार हो गया है। इसमें उचित उदाहरणान्तरों से भी लक्ष्यलक्षणभाव को भले प्रकार स्पष्ट कर दिया गया है, छपाई सफाई और कागज ऐसा उत्तम है कि देखने से ही अनुभव हो सकता है। यह संस्करण बड़े यत्न से बहुत शुद्ध निकाला गया है और साथ में विद्यार्थियों की सुगमता के लिये प्रश्नोत्तरावली भी लगा दी गई है। मूल्य केवल १।) रु० विद्यार्थियों को उचित कमीशन भी दिया जाता है।

प्राज्ञ परीक्षा प्रश्नपत्र-संग्रह—सन् १६०६ से १६२६ तक के यूनिवर्सिटी पेपरों का संग्रह मूल्य ।।=)

प्राप्तिस्थानम्—

**मेहरचन्द्र लक्ष्मणदास**

अध्यक्ष—संस्कृत पुस्तकालय

सैदमिट्ठा बाज़ार, लाहौर।